# भारती

प्रमुखं संस्कृतमासिकपत्रम्



विश्वशान्तेरधिष्ठाता
त्राता स्वातन्त्र्य-संपदाम् ।
[illegible]
नेहरूर्जयताच्चिरम् ॥


| | | |
|---|---|---|
| वर्षम् ६ | प्रथमोऽङ्कः | मूल्यम्<br>वार्षिकम् ३) रु०<br>एकस्याङ्कस्य ।=) |

राजस्थान-मद्रास-मध्यप्रदेश-सौराष्ट्र-भूपाल-उत्तरप्रदेश- बहार-पञ्चनद-आन्ध्र-सर्वकारैः स्वीकृता—

## ❋ विषय-सूची ❋



### संस्कृतसेवकानां कृते सुवर्णावसरः ! प्रतियोगितात्रयम्

देहलीवास्तव्यैः श्रीकैलासचन्द्रमहोदयैः 'भारती' पत्रिकायै लघुकथा-एकाङ्किनाटककविताप्रतियोगितानामायोजनाय १७५) रूप्यकाणां राशिः प्रदत्त । अल्पेन स्वकीयव्ययेन सह भारती एताः प्रतियोगिता आयोजयितु वाञ्छति।

१. भारते भारताद् बहिश्च निवसन् कोऽपि नरो महिला वा प्रतियोगितायामेतस्यां भाग ग्रहीतु क्षमाः।

२ लघुकथाया, एकाङ्किनाटकस्य कविताया वा (एकस्य कस्यचन) प्रेषण भारतीकार्यालये कार्तिकपूर्णिमामनुल्लंघ्य कार्यम । तदनन्तरं लब्धा कृतिर्नाभिरोच्येत ।

३. लघुकथा भारत्याः पृष्ठचतुष्टयात् पृष्ठषट्कपर्यन्तमितकाया स्यात नाऽतोधिका, न्यूना वा । शब्दसंख्या न्यूनान्न्यूनं सहस्रद्वयात्मिका, अधिकाधिकं च त्रिसहस्रात्मिका भवेत् ।

४. एकाङ्कनाटकं भारत्याः पृष्ठचतुष्टयात्सप्तपृष्ठपर्यन्तं विस्तृत भवितु शक्यं, शब्दसंख्या एकसहस्रं सहस्रद्वयं वा ।

५. कविता प्रशस्यरूपेण वीररसप्रधाना न्यूनान् न्यून दशपद्यात्मिका अधिक च त्रिशत्पद्यात्मिका स्यात ।

६ लघुकथाप्रतियोगितायां, एकाङ्किनाटकप्रतियोगितायां च लब्धप्राथम्याय विदुषे प्रत्येकम् एकपञ्चाशद्रूप्यकमितो द्रव्यराशिः, द्वितीयस्थानमधिगतवते च प्रत्येक पञ्चविंशतिरूप्यकाणि ससम्मानं प्रदास्यन्ते ।

७. कविताप्रतियोगितायां सर्वप्राथम्यमुपेयुषे विदुषे एकविंशतिमुद्रा. प्रदास्यन्ते ससम्मानम् ।

८. भारतीनिर्णायकसमितेर्निर्णयोऽन्तिमरूपेण मान्यः स्यात् । एतस्यां समितौ त्रयो निर्णायकाः सन्ति ।

१—म० म० पं० गिरिधरशर्मा चतुर्वेदः । २—भट्ट श्रीमथुरानाथशास्त्री भारतीसम्पादक ।

३—वैद्यराजजयरामदासस्वामी आयुर्वेदकालेजाध्यक्षः ।

३. लब्धपुरस्कारा. कृतयः, अन्याश्चापि योग्याः रचना भारत्यां प्रकाशमेष्यन्ति ।

वयं सर्वानपि संस्कृतज्ञान् सोत्साहं प्रतियोगितास्वेतासु भाग ग्रहीतुमामन्त्रयामहे ।

—प्रबन्ध-सम्पादकः

सम्पादक.—
कविशिरोमणि
भट्टश्रीमथुरानाथशास्त्री
सहसम्पादक.—
देवर्षिकलानाथशास्त्री B. A.
जयपुरम्

# भारती

भानुवद् भारतीयानां भास्वद्भवनभासिनी ।
भागीरथीव भावाढ्या भारते भातु भारती ।।

प्रबन्ध-सम्पादकः—
गिरिराजशर्माशास्त्री

वर्षः ६ | कार्तिकशुक्लाप्रतिपत्, सं० २०१२ | अङ्कः १

## जिज्ञासा

( लेखकः—श्रीशिवशरणझा, झाँसी )

त्वां विहाय को मे ग्रहणीयः ? त्वयैव वाच्यम् ।
जगति बृहत्यपि नास्ति स्वकीयः, कस्माद् याच्यम् ।।

१— अपरे सुहृदां वा बन्धूनामुपाश्रयेण
विषमे समयेऽपि नोद्विजन्ते, सन्ति सुखेन ।
परिचिनोमि पूर्वस्मात् कालात् त्वामेवाहम्
त्वन्तु महिममय, मामुपेक्षसे कृतक-मिषेण
निराश्रयत्वाद् यदनुभवामि विपाकं प्राच्यम् ।।

२— त्वदनुचिन्तनेन व्यतियन्ति सप्त-दिनानि
नैव तु दूरं यान्ति मनागपि कटु-कष्टानि ।
प्रीतिस्त्वयि मम भवति, भविष्यति पुरः पूर्ववत्
परं प्रतीतिर्हसति यथा ग्रीष्मे सलिलानि ।।
मणि-सम-जीवनमहो, भवति मम कस्मात् काच्यम् ?

३— त्वदवहेलया जीवनमपि समपद्यत भारम्
रुचिरं विश्वमिदं प्रतीयते काराऽगारम् ।
उत्सारय मा निज-देशादिह नास्मि विवत्सुः
इयमुपगता निराशा मामुत्सन्न-विचारम्
व्यवहरसीत्थं, यथा प्रहरणं स्याद् नाराच्यम् ।।

# SSSSSSSSSSSSSSS SSSSSSSSS नव्यवत्सरारम्भः SSSSSSSSSSSSSSS SSSSSSSSS

## वर्तमानयुगे संस्कृतम्

सुकृतिसहायकस्य भगवतश्चराचरनायकस्य असीमयाऽनुकम्पया पाठकमहोदयानां सततसेवनं विदधती सेयं 'भारती' संप्रति षष्ठे वत्सरे पदं निदधातीति विदितमेव भवेत्तत्रभवताम्। गतेऽस्मिन् सवत्सरे भारतस्याऽस्य प्राणभूताऽपि सेय सुरभारती कां कां परिस्थितिमनुभवतीति, मन्ये नाऽविज्ञातं भवेद्विज्ञानाम्। राष्ट्रभाषाप्रश्नस्तावदास्तां दूरे, किन्तु सर्वेषु विद्यालयेषु नियमतः संस्कृताऽध्यापनविषयेऽपि शिक्षाधिकारिणां दृष्टिकोणः शोणतामेव भेजे इति परिज्ञाय विषीदति विवेकिनां हृदयम्। "भारतम्" इति निजनाम सर्वतः प्रख्यापयन् सोयमार्याणां देशः। भारतीयैः आर्यैरेव च समग्रेऽपि संसारे सभ्यतायाः प्रथमः प्रकाश प्रवर्तित इति को न जानाति ? आदिमसभ्यतायाः प्रवर्तनाय च भगवती सेयं सस्कृतभारती एव सर्वत पूर्वं साहित्यं ससर्ज। श्रीमन्तो वेदाः, उपनिषदः, धर्मशास्त्राणि, पुराणादयश्च सस्कृतभाषयैव सर्वत सुद्भाविता· सदर्भाः। भौतिकविज्ञानभासुरेऽप्यस्मिन् संसारे आर्याणां गौरवम्, भारतस्य भाग्यवत्ता, सस्कृतभाषयैव प्रतिसंप्रतिष्ठितेति को वा विचारशीलो न विजानीयात् ? अन्यथा नित्यनवीनैः "साइन्सा"विष्कारैः प्रकामं गर्विष्ठानां पश्चिमदेशीयानामग्रे का वा गणना सरलसंनतस्य वराकस्याऽस्य भारतस्य? किन्तु तथापि भारतेऽस्मिन् सस्कृतभारती विस्मृतेव, विषण्णेव, विकलेव, विदेशीयेव विचित्रां परिस्थितिमनुभवति। अधिकारपदमास्थिता देशनायका भारतीयसस्कृते, संस्कृतस्य च समयमुपलक्ष्य मधुरमधुरां स्तुतिमारचयन्ति। शिक्षाधिकारिणः संस्कृतप्रचारस्य मौखिकीं योजनां प्रकाम प्रकटयन्ति। किन्तु कार्यरूपे किं परिणतमिति चेदन्विष्यते, तर्हि लभ्यते शून्यमेव। प्रत्येकप्रान्ते सप्तसमुद्रपारस्थितानामाङ्गलानां भाषा महता गौरवेण पाठ्यते, प्रचार्यते, प्रतिवर्षं प्रवर्ध्यते च। प्रेक्ष्यतां चक्षुषी विस्फार्य विवेकेन, यद्भारतस्य प्रत्येकप्रान्ते एव विदेशीयभाषायाः

---

४— मन-उद्याने आशा-कुसुमानि म्लायन्ति  
कृपाऽम्बुना जीवनमाधातु त्वा गायन्ति।  
युक्त साम्प्रतमितोऽवधान, दृष्टि देहि  
किं मम शब्दा न कर्णयोस्ते पथमुपयान्ति ?  
पश्याम्येत तव मौन-व्रतविधिमर्वाच्यम्॥

५— मनोनभसि ये विपद्घना धावन्त्यधुना तु  
तानपास्य ते कृपा-कलानिधिरुदय यातु।  
सकृत् सहर मयि निजकोपं, ममापि खेदम्  
प्रसन्नताया ज्योत्स्ना तव, मम निकटे भातु  
तदलौकिक-सुखमनुभावय मा वदनिर्वाच्यम्॥

कृते विश्वविद्यालय' पूर्वतः संप्रतिष्ठितः। अस्माभिश्च प्रतिष्ठाप्यते, सगौरव परिचाल्यते च। किन्तु या संस्कृतभाषा भारतस्य च भारतीयानां च भूयस्तरां प्रतिष्ठायै समानाय च, तस्या भाषायाः कृते, भारतेऽस्मिन् स्वदेशे किमेकोऽपि विश्वविद्यालयो विलोक्येत ? बंहोः कालादेतदर्थं संस्कृतसेवकैः प्रार्थना कृता, अधिकारिणो मुहुर्मुहुः सूचिताः, किन्तु एतावत्पर्यन्तमपि किं प्रस्तावोऽयं कार्यरूपे परिणतः ?

आस्तां विश्वविद्यालयस्य कथा। सर्वसाधारणैराश्रयणीयेषु साधारणविद्यालयेष्वपि संस्कृताध्यापनस्य कियान् कीदृशश्च प्रबन्ध इति चेत्समीक्ष्यते तर्हि निराशैव समुदेति। बहुषु विद्यालयेषु अन्यान्यवैकल्पिकविषयाणां पाठनस्य प्रबन्धोऽस्ति। किन्तु संस्कृतस्य कृते न कोऽप्यध्यापकः, न च तत्कृते काचित्सुविधा। उन्नतोन्नताः संस्कृतपरीक्षाः समुत्तीर्णा अपि प्रारम्भिकेषु विद्यालयेषु स्वल्पवेतनकं पद प्राप्नुवन्ति। न च तेषां तादृश समानो यथा 'ग्रेजुएट' पदधारिणां महाभागानाम्।

## पत्राणां परिस्थितिः

एवंविधायां परिस्थितौ संस्कृतसाहित्यविस्तारस्य, नवीनसाहित्यनिर्माणस्य वा का दशा स्यादिति स्वयं प्रतिभात भवति प्रतिभावताम्। वैदेशिकानां राज्ये पुरातनसंस्कृतपुस्तकानामन्वेषणस्य, उपलब्धानां प्रकाशनस्य च, य प्रबन्धः प्रचलितोऽभूत्सोऽपि संप्रति 'प्रसुप्त इव सर्वतः'। संस्कृतस्य मासिकादिपत्राण्यपि नवीनानि प्रचरेयुरिति दूरापास्तम्। प्राचीनान्यपि पत्राणि लुप्तानि। केवलं तेषां स्मृतिः खेलति हृदयपटले।

विद्योदय संस्कृतचन्द्रिकासूनृतवादिनीमित्रगोष्ठीप्रभृतीनां तु स्मृतिरपि लोकानां हृदयात् शनैः शनैरपयाति। किन्तु मञ्जुभाषिणी-सद्धर्म-सूर्योदय-सुप्रभात-प्रभृतीनि ततो नवीनान्यपि पत्राणि नामशेषाणि केवलं वृत्तानि। यानि कानिचित्पत्राणि संप्रति प्रचरन्ति तान्यपि संस्कृतसेवकानामुत्साहमात्रमवलम्बमानानि यथाकथंचिद् व्यवहरन्ति।

श्रीमती 'मधुरवाणी' 'बेलगावं' विहाय सम्प्रति—"मधुरवाणीकार्यालयः, 'गदग' (जिला धारवाड) तः" नवीनतया प्रचरतीति किंचित्प्रमोदामहे। श्रीमत्या दीर्घजीवन कामयमानाश्चाभिनन्दामो विहारमेतस्याः। 'संस्कृतसाकेतः' कियत्कालात्पूर्वमवलोक्यमानोऽपि सांप्रतं न दृश्यते। काशीतः प्रचरन्ती 'पण्डितपत्रिका' पाक्षिकी अपि वत्सरे चतुःपञ्चवारान् दर्शनं ददाति। काशीस्था 'सारस्वती सुषमा' त्रैमासिकी। सा संपादकं सम्यक् परिजानती अपि प्रबन्धकार्यालये एव विश्राम्यति। कलिकात्तास्था संस्कृतसाहित्यपरिषत्पत्रिका' सर्वभावेन साहित्यमेवाऽभिनयतीति चित्रं चित्रम्। अर्थात् प्रायशो द्वित्राः संचिका सहिता एव प्रकाश्यन्ते। 'मञ्जूषा' तु कलिकत्तातः पुनः प्रकाशयितुमारब्धेति कर्णाभ्यां शृणुमो, नाऽऽप्नुमो दर्शनमेतस्या।

## सेवानिवेदनम्

संप्रत्यात्मकथां निवेदयामः। संस्कृतसेवकानां सेवामार्गे पदं निदधती सेय 'भारती' तु यथावसरमात्मनियोगमशून्यं कृतवती। सैषा यथासंभव सामयिकान् निबन्धान् प्रकाशयति, संस्कृतप्रचारविषयकान् समाचारान् प्रचारयति। नवीनानुदीयमानान् लेखकानुत्साहयति। युगरुचिमनुसृत्य 'लघुकथा' सादरमाददाति। बहूनामनुरोधात् 'सूक्तिसुधायाम्' हिन्दीभाषया सुभाषितानामपि विशदीकरोति येन बहवः संस्कृतशिक्षाकार्ये सौकर्यमनुभवन्ति। विनोदप्रियाणां कृते मनोरवाटिकां

विकासयति। 'नवयुगसाहित्यम्' उल्लासयति। शिक्षमाणानां कृते यथावकाशं 'बालस्तम्भम्' अपि सेयं निदधाति। यथोपयोगं संस्कृतसाहित्यसर्जकानां परिचयमपि पाठकानां पुरः प्रकाशयति। भारतस्य प्रान्ते प्रान्ते संस्कृतचर्चां प्रचारयति। संस्कृतप्रचारशून्येषु केन्द्रेषु संस्कृतप्रचारार्थं यथावसरमायासमुपयोजयति। एवं किल सेयं 'भारती' भारतीसेवनाय परिकरमाबध्नती पाठकमहाभागानां मनोऽनुरोधमनुसरत्येव। पाठकमहोदया अपि तदेतस्यां प्रचुरमनुग्रहं प्रदर्शयन्तीति ससन्तोषमावेदयामः। यतो हि प्रतिवर्षमेतस्या अनुग्राहकसंख्या यथाकथंचित् प्रवर्द्धते।

शिक्षाधिकारिणो भारतीमिमां दयार्द्रया दृष्ट्या न विलोकयन्तीति कथनं नूनमकृतज्ञता स्यात्। बहुभिः शिक्षाविभागैः सेयं भारती निजप्रान्ते ससमादरं प्रचारिता। 'राजस्थान-मद्रास-मध्यप्रदेश-सौराष्ट्र भूपाल-उत्तरप्रदेश-बिहार पञ्चनद-आन्ध्र-सर्वकारैः सेयं स्वीकृतेति' मुखपत्रे एव सेयं सर्वदा सूचयति। एवमेव अन्यान्यप्रान्तीया अपि चेन्निजकर्तव्यं निभालयेरंस्तर्हि सेयं भारती भारतीयानां सेवनसावधाना निःशङ्कं विहरेत्।

ये संस्कृतानुरागिणः, संस्कृतपण्डिताश्च तेषां सेवायामपि तदिदं विनीतं निवेदनं यत्ते संस्कृतप्रचारे अग्रेभागं गृह्णीयुः। ये च प्रचारकार्ये स्वयं न प्रवर्तितुं शक्नुवन्ति तैः प्रचारकेभ्यः साहाय्यं त्ववश्यं दातव्यम्। संस्कृतसाहित्यस्य प्रचारः समयेऽस्मिन्निरुद्धप्रायः। नवीनसाहित्यप्रचारस्य का कथा, यानि पुस्तकानि पूर्वं प्रकाशितानि, लोकानामुपकारकाणि च तेषामपि संस्करणमवरुद्धं सम्प्रति। यदि संस्कृतपण्डिताः क्षमां कुर्युस्तर्हि स्पष्टं निवेदनीयं भवेद्, यदत्र प्रधानं कारणं संस्कृतसेवका एव। अन्यान्यभाषाप्रचारं पश्यन्तु श्रीमन्तः। यदि नवीनं किञ्चिदुपकारकं पुस्तकं प्रकाशितं भवति, तर्हि सर्वेऽपि तद्भाषानुरागिणस्तस्य क्रयणं स्वयं कुर्वन्ति, अन्यांश्च प्रेर्य तत्र साहाय्यं विदधति। येन हि तत्साहित्यस्य प्रचारो भवति। तथा उत्साहिताः सन्तो जना अन्यत्साहित्यमपि संमुखे समानयन्ति। किन्तु संस्कृतपण्डितानां विचित्रा कथा। ते हि गृहस्थाः सन्ति। गृहस्थेभ्यो यद् यदावश्यकं सर्वत्र ते व्ययं कुर्वन्ति। किन्तु पुस्तकानां क्रयणे ते सर्वदा प्रतीक्षां कुर्वन्ति यत् उपायने एव पुस्तकानि लभ्येरन्। कश्चिद् 'भेंट'स्वरूपे एव पुस्तकं दद्यात्। हन्त! किमिदं समञ्जसम्?

संस्कृतपुस्तकानि संस्कृतसेवकानां तत्पण्डितानां च मुखमीक्षन्ते यत् ते तेषां समादरं कुर्युरिति। यदि ते एव संस्कृतपुस्तकानि न क्रीणीयुस्तर्हि किं हिन्दी-आङ्ग्लादिपाठकाः क्रेष्यन्ति? बहुधा दृष्टं यत्संस्कृतस्य-विद्यार्थिनोऽपि पाठ्यमपि पुस्तकमन्येभ्यो याचित्वा पठन्ति। यावच्छक्यं स्वयं न क्रीणन्ति। बहुधा अन्यकार्येषु ते व्ययं कुर्वन्ति, 'सीनेमा' दर्शनार्थं द्रव्यमायाति, किन्तु पुस्तकक्रयणे ते दीनतामभिनयन्ति। सोऽयमेतेषामपवादः अन्यान्यसाहित्यसेविभिर्विदितः, सर्वतः प्रसेधितश्च। अतः समयमालक्ष्य संस्कृतसेविभिः संस्कृतभाषाप्रचारे किञ्चिदौदार्यमालम्बनीयम्। संस्कृतप्रचारे बद्धपरिकरा सेयं 'भारती' संस्कृतसेवकेभ्यस्तदिदमेव याचते। ते भारतीप्रचारे अधिकाधिकं साहाय्यं कुर्युरित्येव तत्प्रकाशकाः प्रार्थयन्ते।

पाठकमहोदयाः पूर्ववदिव उत्तरोत्तरमस्यां प्रणयमास्थापयेरन्निति पुनः पुनः प्रार्थयमाना विरमामो विस्तरात्। भावयतु भारतीसेवकानां भव्यं भूतभावनो भगवानिति भूयो भूयो भावयामः। निवेदयामश्च जगदीश्वरम्—

भगवद्भावभूयिष्ठा भुवनाऽऽभोगभासिनी।
भवने भवने भूयो भारते भातु भारती॥

# भारतीयाध्यात्मशिक्षयैव विश्वशांतिः सम्भाव्यते !

(ले० विद्याभूषणः श्रीगणेशरामशर्मा, साहित्यरत्नम्, अध्यापकः श्रीराजेन्द्र-इण्टर-कॉलिज, झालावाड 'राजस्थान')

अयि प्रकृष्टप्रतिभावन्त ! प्रौढानुभवशालिन' !! श्रेयांस !!! पाठकमहानुभावा !!! सदा-सर्वदा सर्वतः परिवर्तनशीलेऽस्मिन् संसारे घटनाचक्रं क्षणे-क्षणे परिवर्तते विपरिवर्तते चेति जानन्त्येवात्र भवन्तो भवन्तः कुशाग्रधिषणा सुविकसितमस्तिष्काः सन्तो महान्तः शिक्षिता दीक्षिताश्च !!! सयोगस्याय प्रसङ्गोऽवसरश्च कोऽप्यद्वितीयोऽपूर्वो, यद्वयमिहात्र युगसन्धिकाले, कराले कलौ प्रवर्तमाने, वर्तमाने समये, महाभारतादपि समधिके विद्युत्स्फुरणतरले, प्रभञ्जनवात्याचक्रादपि तीव्रगतिकेऽस्मिन् सङ्घर्षप्रधानेऽधुनातने युगे, जीवन्तो लौकिकप्रपञ्चस्याधिकाधिक, सूक्ष्मातिसूक्ष्ममतिगभीरं, कमप्यनुभवातिरेकमात्मनः सम्भावयामः ! प्राक्तने भारतीययुद्धे सर्वासां भौतिकसम्पदां, युद्धोपकरणोपयुक्तानां, विज्ञानाविष्कृतानाम्, यन्त्रतन्त्राणां, शस्त्रास्त्रशक्तीनां च विविधाः प्रयोगास्तत्कालीनैः क्षात्रधुरीणैर्वीर्य्यातिशयशौर्यपराक्रमदृप्तैः साम्राज्यलिप्सया भूयो भूयोऽक्रियन्त ! फलतोऽत्र देशे कुटुम्बकलहाः, वर्गसंघर्षाः, जनसंहारा महान्त, सर्वनाशकरा राजनीतिगतकूटाभिसन्धिसिद्धान्ताः, भौतिका भोगवादाश्च स्वसीमापरिधिमर्यादाः सुदूरमतिक्रम्य प्राबल्यमौद्धत्य च वव्रजुः ! क्रमशो ह्रासं व्रजन्ती भारतीयाध्यात्मिकी स्वस्था तत्त्वचिन्तना, शास्त्राध्ययनपरम्परा, आर्यसभ्यता, सत्संस्कृतिः, प्रोद्दामबलविस्फूर्जन्ती राजशक्तिः, शासनपद्धति', वाणिज्यव्यापारव्यवस्था, सत्याश्रया जीवनपरिचर्या च पर्यन्ते क्षीणक्षीणा सती पतनस्य परां काष्ठां पस्पर्श ! तस्यैवायं दुष्परिणामो यद्धि सर्वदेशशिरोमणि', सर्वसम्पत्सम्पन्न, प्रचण्डशक्तिबलोर्जस्वल सर्वसुखसाधनस्फीतोऽप्यय देशोऽस्माकं देवकल्पानां पुरुषपुङ्गवानामधिकारात्स्खलितो दानवानां वैदेशिकदस्यूनां विधर्मिणामनार्याणामधमानामाधीनो भूत्वा स्वोत्कर्ष, गौरव, स्वाभिमानं, महत्त्वं च सर्वमेकपदे विसस्मार ! सेय कथास्माकं प्रथमच्युतेः स्वाधिकाराद्भ्रंशस्य च संक्षेपतो बतार्यकुलगृहयुद्धस्याद्य "विवेकभ्रष्टानां भवति विनिपातः शतमुखः !" इत्युक्तिमिमां स्मारयन्तीव संतिष्ठते !!!

ततोऽग्रे पुनर्द्वितीयस्खलनेऽस्माकमार्यसाम्राज्यस्यात्र देशे पतनमभूद्यत्र चक्रवर्तिनः सम्राजोऽप्यथानैक्यभुजङ्गविषमूर्छिताः, परस्पर युद्ध्यन्तो, भोगवादं च कामयानाः, अनार्याधीनाः सन्तः, सर्वस्वमपि द्वेषाग्नौ जुह्वतो, भेदनीति कूटकपटवादं चाश्रित्य, स्वदेशवैभवं शत्रूणामाराधनायोपयुयुजुः । यवनामन्त्रणं कृत्वा लुण्ठनावशिष्टामपि समृद्धि तेभ्यः समर्पयितुमुद्यताः, कुलद्रोहायैव समारब्धोद्यमा, 'कूपमण्डूक गङ्गदत्तमनुसरन्तो भारतीया क्षत्रिया धनानि, राज्योपनिवेशान् कलत्राणि, कन्यकाश्च विधर्मिदस्युभ्यः समर्पयितु स्वोत्कर्षघातिनीर्योजना आविश्चक्रुर्विनाश चास्य देशस्यामन्त्रयामासुः ।

एवमेव क्रमेणाऽथ तृतीये युगसन्धिकाले, यवनसाम्राज्यविध्वंसेऽत्र देशे सजातेऽपरार्णवस्य परस्मिन् पारे वसन्तोऽपि च यात्राप्रेमिणो गौराङ्गा वाणिज्यव्यापारच्छलाद्भेदनीतिकपटकूटजालैर्देशमिममात्मसात्कुर्वन् । विशृङ्खलितान् वीराननैक्यपरवशान् सन्धाय,

तान्विजित्य यूरोपीयं राजतन्त्रं भारतभूमौ प्रवर्तयामासु ।।। इत्थं वरत्रयं बहुवारमनेकवारं वायं देशः पुनः पुनः परकीयानां दासत्वे पतितः। पराधीनत्वादात्मनो महत्त्वं, गुणगौरवं, शक्तिमत्तां, सत्यस्वरूपमुत्कर्षं च बतात्यन्तं विसस्मारेति महानेव खेदकरः शोकावहो दुष्प्रसङ्गो नाम नूनम् ।।।

सत्यप्येवमिदमित्थं सेतिहाससाक्षिक, शताब्दीर्याविज्ञातेष्वप्यत्र देशे महायुद्धेषु, जनसघर्षेषु प्रजोत्पीडनेषु, भ्रष्टेष्वपि च सदाचारेषु, दुर्बलतामापन्नेष्वपि च शूरवीरेषु, नष्टायामपि स्वदेशसमृद्धौ विस्मृतायामपि च स्वात्मोत्कर्षचेतनायां, विलीनेऽप्यथ देशात्मबोधे, लोकमानसे प्रतनु प्रवहन्ती नाध्यात्मज्ञानगङ्गास्रोतोधारा कथमप्यत्यन्ताभाव जगामेति किमपि सर्वाश्चर्यैकरं चमत्कारजुष्टमभूतपूर्वं विचित्रं तात्त्विकं सनातनं वस्तु जगत्याभाति। सूक्ष्मेक्षिकया निखिलमपि ब्रह्माण्ड करतलामलकवत् परिपश्यतां, दार्शनिकसार्वभौमाना, वैज्ञानिकशिरोमणीनां कूटनीतिवैतरणीतरङ्गमानां महामतीनां, समाजशास्त्रिणामपि च मनो विस्मापयति। प्रज्ञाभिमानिनां, प्रतिभावतां मनीषिणामन्वेषणाधीर्मो मुह्यते भृशमत्र कार्यकारणपरम्परान्वेषणे तत्त्वतः। वस्तुतोऽत्र भूगोले स्थितानां यावद्राष्ट्राणां पतनोत्थानतत्त्वमीमांसाविचारे प्रवर्तमाने, सर्वशक्तिमतः परब्रह्मणः परमेश्वरस्य मायाशक्तेश्चिद्विलासविलसितमेवाद्यं कारणं सर्वेषां लोकानां, देशानामुपनिवेशानां, ज्ञातीनां, धर्माणां, सम्प्रदायानां, समाजानां, सर्वराष्ट्रप्रजानामुत्कर्षापकर्षयोरिति निश्चप्रचमतं नो भारतीयाना विशेषतश्चास्तिकानाम् ।।।

अथास्मत्पूर्वजनानां पुण्योपचयैः, शूरवीराणामूर्जस्वलप्रोद्भटप्रतापबलवीर्यातिशयैः, सतीसाध्वीनां पतिव्रताशिरोमणीनां रमणीनां पतिव्रतप्रभाप्रभावस्फुरत्प्रकाशतेजःपुञ्जप्रचयैः, पावनचरितानां महामानवानां सदाचारचारित्र्यसंस्कारप्रभावैर्ज्ञानिनां ज्ञानतीर्थेष्वजस्रं तपस्यतां स्वरयैश्छिन्नैर्महात्मनां मनोबलैर्दर्शनाचार्याणां तत्त्वचिन्तनविद्याबोधैस्त्यागैकव्रतव्रतिनां योगिवर्याणां समाधिसाधनप्रयत्नशतैर्वदान्यमूर्द्धन्यानां परोपकारपरायणानां सर्वस्वार्पणैः, साहसिकानां स्वदेशभक्तानां बलिदानप्राणोत्सर्गैः, महामनसां लोकनायकानां नेतृप्रवराणां प्रोद्दामोद्योगपरम्पराभिर्देशकालपरिस्थितिजनमानसप्रवृत्तिविदां विद्वद्धुरीणानां बुद्धिशक्तिचिद्विलासचमत्कारैः, कवीनामनल्पकल्पनास्फुरणभावोत्तेजनैर्भावुकजनानां भावनाप्रवणतया, भगवदिच्छया, भवितव्यतया वाब्दशतानि यावन्मुहुर्मुहुः पतनस्यान्धकूपगह्वरगर्ते ह्यापादमस्तकमग्नेऽपि, चानैक्यपापपङ्के पापच्यमानोऽपि, पराधीनोऽप्यकिंचनोऽप्ययं भारतवर्षदेशोऽस्माकं सत्त्वसम्पन्नतयाध्यात्मदीपप्रभाज्योतिर्धारामन्तः प्राणेषु प्रवहन्तीमतिक्षीणामपि तेजोभास्वरां स्वजीवनीं शक्तिमिव भाग्यान्नात्यन्तं तत्याज। तस्मादेव हि स्वतन्त्रो बभूव, स्वराज्यं चात्र प्रावर्तत, प्रजातन्त्रशासनं च देशे सूत्रयाम्बभूवेति महानेव हर्षोत्सवावसरः ।।।

अथ पुनर्भारतेतरराष्ट्राणां, विशेषतो यूरोपरूसामरीकाप्रभृतीनां, साम्राज्यवादसिद्धान्तस्तत आरभ्याद्यावधि मुख्यतो गौराङ्गशासनाधीने भारतवर्षदेशस्यास्माकं पारतन्त्र्यकाले भौतिकीं विज्ञानोन्नतिं जगाम। तस्मादेव तत्तद्राष्ट्राधिनायका विज्ञानशक्तिबलोन्मत्ताः प्रजातन्त्रात्मिकामुदारां शासनप्रणाली बहुजनहिताय, बहुजनक्षेमाय स्वीकृत्यापि किलांशतोऽनुसृत्यापि च बहिस्तः, परोक्षरीत्या खल्वेकाधिनायकतन्त्रगुणदोषान् गृह्णन्तो व्यक्तिवादमुपनिवेशवादं च ध्वजीकृत्य मिथो योद्धु-

मारभन्त । परिणामतो द्वे विश्वयुद्धे अस्माकं प्रत्यक्ष परिपश्यतामेव समभूतां स्वजीवनकालेऽधुना । विश्वयुद्धातिरिक्तानां, लोकसंहारकराणां वर्गसङ्घर्षाणां तु पुनर्गणनैव महतीं सख्यां स्पृशति । विध्वंसात्मकस्य स्वोत्कर्षस्य चरमां कोटिं स्पृशता विज्ञानेनाणुशक्तिविस्फोटस्फोटनैर्ब्रह्माण्डकटाहं ज्वलज्ज्वालामालाकुलं, विषानलोत्तप्तं व्याकुलं, मर्दितं, चूर्णितमिव, खण्ड खण्ड विधायाखिलस्य जगतो जीवसङ्घानां जीवनशान्तिर्भूयोभूयः कदर्थिता विडम्बिता, निष्ठुरं पीडिता हाहाकारोऽजनि, प्रलयविप्लवः साक्षादजायत, महाकालोऽप्यतिभीषणमिदमकाण्डरणरौद्रताण्डवं दर्शं दर्शं 'त्राहि त्राहि' इति भयादकम्पत । ततो हि विश्वशान्तिरधुनाऽबलानन्यगतिका, शरणार्थिनी विचारशीलान् महामानवानुपतिष्ठते !! सेयं समस्या व्याघ्रीव मुखं व्यादाय तिष्ठत्यद्यत्वे सर्वतोदिङ् नूनम् !!!

यूरोपयात्रां यातेनास्मद्भारतराष्ट्रस्य प्रधानमन्त्रिणा श्रीमज्जवाहरलालनेहरुणा महाभागेन विश्वशान्तिस्थापनाविधाने खल्वन्ताराष्ट्रियराजनीतिरङ्गमञ्चसूत्रधारोचितं किमपि स्वस्थं चिन्तितं, विचारितं, विमर्शितं च तत्तद्देशीयराष्ट्रशक्तिधुरन्धरैः पुरुषपुङ्गवैः सार्द्धम् । तत्र श्रीमताऽस्मत्प्रधानमन्त्रिणा महोदयेन निरस्त्रीकरणमणुशक्तिनियन्त्रणं, राष्ट्राणां परस्परं मैत्रीभावसम्पादनं, राजनीत्यन्तर्मुक्तानामधिकाराणां सतोलनमनाक्रमणं, वैज्ञानिकसाधनानां निर्माणे नियोजनमित्याद्या ये ये चोपाया शांतिस्थापनोपयुक्ता प्रस्तावितास्ते खलु मूलतो भारतीयाध्यात्मज्ञानगर्भा विश्वजनीना दिव्यसन्देशा हितोपदेशाश्च सर्वराष्ट्रप्रजानां योगक्षेमाय । नेहरुणा महाभागेनास्यां दिशि ये ये प्रयत्ना लोककल्याणाय तत्र तत्र विहितास्तेऽहिंसावतारस्य गुरोर्गान्धेर्महात्मनोऽनुयायिनां विचारशीलानां तादृशानामनुरूपा नूनम् । भौतिकीनां विज्ञानाविष्कृतानाममोघशक्तीनां, सर्वशक्तिमतः परब्रह्मणो दिव्यविभूतीनामिव जगद्धिताय सर्वात्मैक्यभावेन ज्ञानकर्मसमन्वयरूपेण निर्माणात्मकोपयोग इत्येतावानेव भारतीयाध्यात्मोपदेशसारांश,

इदमेव वेदोपनिषच्छास्त्ररहस्यमनेनैवाद्वैताश्रयिसद्विवेकवता भास्वरेण प्रकृष्टज्ञानगरिम्णा निष्कामकर्मयोगोपदेशेन, विश्वबन्धुत्वभावेन, भूतसमानुभूत्या च भारतदेशोऽयं जगद्गुरुरिति विश्रूयते भुवनेषु !!! अस्तु तावद्विश्वशान्तिमभिवाञ्छन्तो वयमस्मत्प्रधानमन्त्रिणो मतमेतदिदमित्थं सर्वात्मना समर्थयामहे । "जीवो जीवस्य जीवनम्" इति वर्तमानेऽपि जीवनसङ्घर्षेऽधुनातने "अहिंसा परमो धर्मः ।" "न कोऽपि भूतानि हिंस्यात् ।" "मा हिंसी कृपणान् वृथा" इत्यहिंसासिद्धान्तः सर्वसम्मतः सार्वभौमश्च लोकेऽस्मिन्विजयतेतमाम् । विशेषतोऽत्राधुना गान्धियुगे वर्तमानानां सर्वोदय कामयानानां भारतीयप्रजाजनानामस्माकं किल सुदृढोऽयमविचलो हि विश्वासो यदिह संसारेऽध्यात्मोपदेशशिक्षयैव विश्वशान्तेः सम्भावना नान्यथा !!!

इत्थाय भारतवर्षदेशो दार्शनिकशिरोमणिर्जगद्गुरुश्च तदनुरूपमेव यदि चेष्टेत तदैव महामन्त्रिमहाभागस्य सोऽयं तत्त्वसिद्धान्तसंवादो यत्र तत्र सर्वत्र व्याख्यातो भृशं जोघुष्यमाणोऽपि विश्वशांतिसंस्थापने क्रियारूपेणाभीष्टां सिद्धिं सफलतां चावहेत् । यावदन्ताराष्ट्रियत्वं, यावच्च सर्वोपनिवेशराजनीतिगतविधिविधानतन्त्राणां सम्बन्धस्तावद्विषयेऽत्र सार्वदेशीये महात्मनो गान्धे सहयोगिनोऽनुयायिनो जवाहरप्रमुखास्तत्सदृशा अन्ये नेतारो विभिन्नराष्ट्राणामग्रदूतैर्नायकैः सार्द्धं विमृश्य निगूढं कामपि प्रामाणिकीं नीतिं प्रक्रियां वाङ्गीकुर्वन्तु । यतस्ते हि विशेषज्ञाः यथार्थवेदिनः, प्रतिभावन्तोऽनुभववन्तो, राष्ट्रसेवकाः, सर्वंसहाः, सर्वस्वत्यागिनस्तपस्यन्तो, महामानवाः, भूमण्डलं सर्वतो विख्याताः, सक्षमाश्च, परमत्रास्माकं देशे भारते यावानन्तःस्थितिसुधारविषयो वा कोऽपि शांतिस्थापनाप्रस्तावस्तावदादौ केचिदुपाया अत्रास्माभिर्यथामति प्रस्तूयन्ते, येष्वङ्गीकृतेषु सत्सु स्वतन्त्रस्य देशस्य शासनव्यवस्थायां, समाजसुधारणायां, शिक्षायोजनायामनुशासनप्रतिष्ठायां, किं बहुना समस्तेऽपि भारतराष्ट्रे प्रजाजनजीवने शान्तिः संभाव्यते । क्रमशः

# पुरा भारतीयानाम् आयुष्मत्ता

( लेखकः—श्रीभीमसेनशास्त्री, एम० ए० एम्, ओ० एल्०, प्रधानाध्यापकः, लोहिया कालेज चूरू )

हन्त ! अधुना भारतीयानाम् आरोग्यम् आयुश्च आत्यन्तिकीं दुरवस्थां गते । अस्माकं दास्यकालेऽपि वर्षशतात् पूर्वम्, न तत् तथाऽऽसीत्। तदानी तु 'साठा सो पाठा' इति आभाणकः प्रसिद्धतमोऽभूत्। तस्य चायमर्थः 'षष्टि ( ६० ) वर्षीय पुरुष' पूर्णो युवा भवति' इति। आचार्यचाणक्यादीनां काले तु सप्तति-(७०) वर्षीयः पुरुषः युवा गण्यते स्म ।

यदि ततोऽपि प्राचीने इतिहासे दृष्टि पातयाम, तर्हि महता विस्मयेन आविष्ट भवति चेतः। महाभारत-युद्धे पाण्डवाः कौरवाश्च प्रायेण अशीति (८०) वर्षीया अभूवन्। श्रीभीष्मपितामहस्तु वर्षाणां सार्ध-शतम् (१५०) अतिक्रान्त आसीत्, यश्च प्रतिदिन दशसहस्राणां वीरयोद्धृ णां वधं कृत्वा, समराद् विरमति स्म। महाभारते द्रुपदो महीपतिः क्षत्रियाणां वृद्धतमो वर्णित आस्ते। स तु तदानीं वर्षाणां शत-त्रयम् (३००) अतिक्रान्त आसीद् इति ममानुमानम्। तस्य सतीर्थ्यः श्रीद्रोणाचार्यस्तु महाभारत-समर-समये शत-चतुष्टय-वर्षीयोऽभूद्—इति आधुनिकानां महान्तं विस्मयम् आतनोति। तथापि वर्तते इदं सत्यम्। श्रीमता वेद-व्यासेन कथितम् अस्ति—

'आकर्ण-पलितः श्यामो वयसाऽशीति-पञ्चकः।
संख्ये पर्यचरद् द्रोणो वृद्धः षोडश-वर्षवत् ॥'

( महाभारते, द्रोणपर्वणि )

व्याकरणाद् वयं जानीमः यथा पञ्चानां वस्तूनां समुदाय 'पञ्चकः' इति कथ्यते। अद्य पि विविधासु भारतीय-भाषासु 'पञ्चक' शब्दस्य अपभ्रंशः 'पचक' शब्दः पञ्च-वस्तु-समुदाय-रूपेऽर्थे एव प्रयुज्यते। 'चार पचक अमरूद' इति वाक्यस्यार्थः, बहुबीजानां (५=४=) विंशति (२०) इत्येव भवति, नान्य । अतः ५×८=४०० वत्सरा एव द्रोणाचार्यस्य वय आसीद् महाभारत-युद्धे ।

आधुनिकास्तु अस्मिन् महति वयःपरिमाणे अश्रद्दधानाः 'अशीति-पञ्चक' इत्यस्य शब्दस्य पञ्चाशीति (८५) वर्षीयः इति व्याख्यां विदधते। ते तु संस्कृतव्याकरणस्य, सुरभारतीशब्दप्रयोगस्य आधुनिक-भारतीयभाषाणां च स्वकीय महान्तम् अपरिचयमेव द्योतयन्ति।

यदि च द्रोणाचार्य भारतसमरसमये पञ्चाशीति-वर्षीयोऽभूत्, तदा तु स कौरवपाण्डवानामध्यापनकाले पञ्चत्रिंशद्वर्षीय आसीत्। पर दानीतनस्य द्रोणस्य विषये महाभारते उक्तमस्ति—

'तेऽपश्यन् ब्राह्मणं श्यामम् आपन्न-पलितं कृशम्।'

(महाभारते, आदिपर्वणि, अ० १४२, श्लो० २२)

तस्मिन् पुरातने काले पञ्चत्रिंशद्(३५) वर्षीयस्य तपस्विनो ब्राह्मणस्य केशानां पलितत्वम् एकान्तम् असंभवमेव। ततश्च 'द्रोणः महाभारतसमरे वर्षशत-चतुष्टय (४ ०) वया अभूद्' अत्र संदेह-लवोऽपि न विधेय.।

इदानीम् अस्माभिः भारतीयैः स्वीयं स्वास्थ्यं वयः-परिमाणं च वर्धयितु सुमहान् प्रयत्नो विधेयः।

# ★ आदि-कविः ★

## [ रूपकम् ]

( लेखकः—बुद्धदेवपाण्डेयः 'सुमन' शास्त्री, हैडपण्डित श्रीदयानन्दकन्याविद्यालय, मीठापुर, पटना १ )

( स्थानम्-वनप्रदेश । दस्युरूपेण वाल्मीकि धनुरादाय इतस्ततः परिभ्रमति। अन्यत. मुनयः प्रविशन्ति )

( सन्नद्ध-प्रत्यङ्गो रौद्ररूपेण )

रत्नाकरः—सावधानम् । ऋषिगणा', सावधानम् !! यूयं कुत्र गन्तुमिच्छथ ? तिष्ठत तिष्ठत अग्रे पादं मा स्थापयत ।

( ऋषिगणा' इतस्ततः अवलोकयन्तः अपसरितुं चेष्टन्ते किन्तु पुनः विनम्रीभूय वदन्ति । )

ऋषि.—यज्ञोपवीतेन भवान् ब्राह्मणः अवगम्यते, तर्हि कथ एतादृशः क्रूरव्यवहार क्रियते भवता ?

रत्नाकरः—एव अहं ब्राह्मणोऽस्मि, परन्तु स्त्रीपुत्रादीनां परिपोषणाय पथिकान् लुण्ठामि। युष्माक पार्श्वे यत् किञ्चिदस्ति तत सर्व ममाग्रे स्थापयत, अन्यथा युष्मान् सर्वान् यमसदनं प्रेषयामि ।

ऋषि.—दास्याम एव वय । किन्तु येभ्यः अस्मिन् कर्मणि प्रवृत्तो भवान् ते पापभागिनो भविष्यन्ति न वा इति तान् गृह गत्वा पृच्छतु ।

रत्नाकरः—गच्छाम्यहं प्रष्टुं किन्तु इतः युष्माकम् अपसरणं न भवेत् तेनाहं युष्मान् वृक्षेण सह बद्ध्वा एव गच्छामि ।

( रत्नाकर मुनीन् वृक्षेण सह बध्वा गृहं गच्छति पृच्छति च । )

रत्नाकरः—( पुत्रादिभ्यः ) युष्मभ्यं अहं प्रतिदिनं हत्यादिकं करोमि, यूयं पापभागिनो भविष्यथ न वा ?

पुत्रः—वयं त्वदधीना अस्माक पोषणं मुख्यकर्तव्यं भवत', अतः वयं पापभागिनो न भविष्यामः ।

( पत्नी, माता इत्यादयः सर्वेऽपि तथैव वदन्ति )

( गृहात् परिवृत्य ऋषीणां समीपं समागत्य चरणं स्पृशन् अश्रुपूर्णनेत्रेण वक्ति । )

रत्नाकरः—भगवन् !

नरकात् त्राहिमाम् । अहं नारकी, दुराचारी अस्मि क्षमस्व मे अपराधम् । एवं क्रियतां येन नरकात मम रक्षा भवेत ।

ऋषि—राम राम इति वद । राम रामेति। अनेनैव नरकात् रक्षितो भविष्यसि ।

रत्नाकरः—(तपस्यायां संलग्नः मरा मरा इति जपति)

( "नारायण नारायण" इति जपतो नारदस्य प्रवेश )

नारदः—धन्योऽसिवत्स ! धन्योऽसि, तपसि संलग्नस्य तव देहे वल्मीकोऽभवत् अतः अस्मात् दिनात् त्वं "वाल्मीकि" नाम्ना प्रसिद्धो भविष्यसि । उत्थितो भव त्वमवश्यमेव ज्ञानसम्पन्नो भविष्यसि । इति मे आशीर्वादः ।

वाल्मीकिः—(चरणं स्पृशन्) धन्योऽभवं भगवन् । धन्योऽभवम्, तव चरणारविन्दकृपया ।

नारदः- आगम्यताम् । ( तौ गच्छत. )

(ततः एको व्याधः दम्पतिक्रौञ्चद्वयं बाणेन हतवान । भ्रमन् वाल्मीकिः प्रविशति । क्रौञ्ची पत्यौ मृते सति विलपति । दयाकुलो वाल्मीकिः वदति ।)

# ★ धर्ममर्म ★

## [ दशलक्षणमहापर्व ]

( लेखकः—श्रीताराचन्द्रो जैनः, न्यायतीर्थ', शास्त्री,, श्रीशान्तिनाथगुरुकुलम्, रामटेक )

### क्षमा

परकृतस्यापराधस्य सहनं, क्रोधोत्पादककारणेषु सत्स्वपि तदनुत्पादनं, उत्पन्ने च क्रोधे विवेकबलेन तस्य विफलं करणं क्षमा। श्रीमद्भिराचार्यपूज्यपादैरुक्तम्–'दुष्टजनाक्रोशप्रहसनावज्ञाताडनशरीरव्यापादनादीनां सन्निधाने कालुष्यानुत्पत्तिः क्षमा। तथैव श्रीरइधुकविनापि क्षमायाः फलितार्थो निम्नप्रकारेण निर्णीतः—

जहि आकोसणवयणसहिज्जइ,
जहि परदोसणजणिभासिज्जइ।
जहि चेयणगुण चित्त धरिज्जइ,
तहि उत्तमखम जिण भासिजइ॥

अयमाशयः—महाव्रतिनो मुनयो दुष्टजनैः कृतानि अश्लील परुष-निन्दावचनानि सहन्ते न किञ्चित् प्रतिवदन्ति, ते च परेषां विद्यमानान् दोषान् तन्निन्दार्थं न भाषन्ते। सतत च ते चेतनगुणान् धारयन्ति। अतो मुनय एव वस्तुतः क्षमाधर्मस्याराधका भवन्ति। अस्मादेव कारणात् जैनसिद्धान्तेषु उत्तमविशेषणैर्विशिष्टाः क्षमादयो दशापि धर्मा निगदिता। क्षमादीनां धर्माणामणुव्रतिनो गृहस्था धारका भवन्ति, ते दुष्टजनविहितमन्याय दुराचारं कदापि न सहन्ते, स्वसामर्थ्यात् तत् परिहारं कुर्वन्ति। एवञ्च दुष्टजनविरुद्धानि कार्याणि दृढतया आचरन्ति येन ते भविष्यत्काले तथा कर्तु मनागपि नोत्सहन्ते। शत्रुमित्रेषु समवृत्तयो मुनयस्तु उत्तमक्षमादिधारकाः कीदृश्यामपि जटिलपरिस्थित्यान्न कदाचिदपि दुष्टजनविरुद्धं प्रतीकारं मनोवचःकायैः कर्तुमभिलपन्तीति विज्ञेयम्।

### मार्दवम्

स्वमनसि मृदुताभावस्य सन्धारणं व्यवहारे च विनम्रवृत्तेः सप्रयोगो मार्दवम्। जाति-कुल-रूप-ऐश्वर्य-विज्ञान-श्रुत-लाभ बलैर्युतोऽपि तैः स्वमहत्त्वं न घोषयति गर्वमादधानश्च प्रमत्त सन् (गर्वोन्मत्तः) न परान् पीडयति। उक्तम्–'जात्यादिमदावेशादभिमानाभावो मार्दवं माननिर्हरणमिति' सर्वार्थसिद्धौ।

आर्जवम्—योगस्यावक्रता आर्जवम्। पू०-सर्वा०। काय-वचन-मनःक्रिया योगो भवति, विचार-भाषण-कायप्रयोगानामेकतायां आर्जवं जायते। कुटिलपरिणामानामेव परित्यागे आर्जवधर्मः संपद्यते।

शौचम्—'प्रकर्षप्राप्तलोभान्निवृत्तिः शौचम्। पू० सर्वा०। सर्वापद्दायिनि परिग्रहे आसक्तिविरहः, धन-

---

वाल्मीकिः—मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः। यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्।

( ततः प्रविशति विधिः )

ब्रह्मा—प्रसन्नोऽस्मि वत्स! प्रसन्नोऽस्मि, सम्प्रति भवन्मुखात् विसृतं वाक्यं "श्लोक" नाम्ना प्रसिद्धं भविष्यति। इति मे आशीर्वचनम्। त्वं रामचरित्रयुक्तमेकं काव्य रचय। तत् तु आदिकाव्येति प्रसिद्धं भविष्यति।

( प्रस्थानम् )

( पटपरिवर्त्तनम् )

धान्यदौ संग्रहवृत्तेरभाव शरीरेऽपि लोभसंवरणं शौचम्।

सत्यम्—'सत्सु प्रशस्तेषु जनेषु साधुवचनं सत्यम्' पू॰ सर्वा॰। सज्जनानां सुसंस्कृतानां मानवानां हितकर वचनं सत्य ज्ञेयम्।

सयम—प्राणीन्द्रियपरिहारस्संयमः॥ पू॰ सर्वा॰। जगति यावन्त एकेन्द्रियादयो जीवास्तेषामपीडनं स्वेन्द्रियाणां मनसश्च स्वाधीने करणे संयमो जायते।

तपः—'कर्मक्षयार्थं तप्यत इति तपः।' पू॰ सर्वा॰॥ ज्ञानावरणादीनि कर्माष्टकानि जीवस्वभावघातकानि समस्तान् जीवान् संसारार्णवे पातयन्ति। कायक्लेशादिना तपसा जीवा भस्मसात् कुर्वन्ति तानि कर्माणि। कर्माणि विनाश्य मोक्षसुखमनुभवन्ति तपोधनाः।

त्याग—'सयतस्य योग्यं ज्ञानादिदानं त्यागः।' पू॰ सर्वा॰। सुपात्रेभ्य आहारौषधज्ञानोपकरणपुस्तकादीनां भक्त्या प्रदान असहायानाथादिभ्यो दरिद्रेभ्यः कृपया भोजनवस्त्रादीनां वितरणं दानं ज्ञेयम्।

आकिञ्चन्यम्—उपात्तेष्वपि शरीरादिषु संस्कारापोहाय ममेदमित्यभिसन्धिनिवृत्तिराकिञ्चन्यम्। पू॰ सर्वा॰। कस्मिंश्चिदपि धनधान्यादौ बाह्यवस्तुनि रागद्वेषमोहादौ चान्तरङ्गपरिणतौ ममेदमित्यभिसन्धिराहित्यमाकिञ्चन्यम्।

ब्रह्मचर्यम्—स्वतत्रवृत्तिनिवृत्त्यर्थो गुरुकुलावासो ब्रह्मचर्यम्। पू॰ सर्वा॰॥ स्वदोषपरिहाराय, ज्ञानादिगुणानामभ्यासाय, गुरुपरतन्त्रतासेवनाय, आत्मदौर्बल्यत्रुटिहानाय च ब्रह्मणि=गुरुकुले, चर्यं=निवसनं ब्रह्मचर्यमिति निगद्यते।

एतैरात्मज्योतिरुद्भावकैः क्षमादिमहाधर्मैर्जगति 'सत्यं शिव सुन्दरमिति' महनीयं स्थान लब्धुं शक्येत। एतेषां प्रकाशपुञ्जे विस्तृते संसारे स्वार्थवशगतानां राष्ट्राणां पदवीलुब्धकानां, जननायकानां धर्मावरणे पातकं समाचरतां जनानां पारस्परिकं कलहादिकं विलुप्तं जायते। चौरकर्मणि (ब्लेक मार्केट) संलग्नानां वणिजां गुप्तधनभाजां (रिश्वत खोर) राज्याधिकारिणामन्येषाञ्च 'लोफर बदमाश' इत्याद्युपाधि दधतां जाल्मानां परदारधनाद्यपहारकाणां लुण्ठादीनां सर्व नीतिविरुद्धमपकीर्तिकरमन्याय्यं कार्यं प्रलयमुपव्रजति। एतैः सुव्यवस्थिते च लोके सुखसाम्राज्यं समुल्लसेत्, विवेकरसिकानां सन्नीतयो गीतयश्च स्फुरन्त्यः सर्वान् सत्वान् नन्देयुरिति मुहुर्मुहुः प्रार्थये श्रीमन्त कृपालसन्त देवाधिदेवं जिनम्। इति शम्।

# साम्यवादः

(भिषग्मणि वैद्यमणिरामशर्मा गौड श्रीगगा)

साम्प्रतं साम्यवादस्य सर्वत्र डिण्डिमघोष. श्रूयते। साम्यवादस्य द्विधा धारा अवलोक्यते। प्राचीनार्वाचीना च। अर्वाचीनसाम्यवादस्य जनकः कार्लमाक्स आसीत्। सः आत्मानं परमात्मान च मूर्खाणां कल्पनादधिकं किमपि न मन्यते स्म। अशनं, वसनं, वासः, इत्येव सर्वेषां मनुष्याणां जन्मसिद्धोऽधिकारः अयमेव परमो धर्मः। अशनवसननिवासानां व्यवस्था अर्थेन भवति। अत' अर्थ एव सर्वम्। इति पाश्चात्यसाम्यवादस्य मूलम् अर्थस्य केन्द्रीकरणव्यवस्थां छित्त्वा विकेन्द्रीकरणं विधाय, अर्थस्य सर्वत्र समानव्यवस्थाविधानमेव आधुनिकसाम्यवादस्य प्रयोजनम्। आधुनिकसाम्यवादे वर्णव्यवस्थाया. स्थाने वर्गव्यवस्था समुत्पन्ना। येषु येषु राष्ट्रेषु साम्यवादः प्रचलितः अस्ति ते सर्वे जनतत्रवेषे राज्यतत्रराष्ट्राणि सन्ति। तेषु तेषु राष्ट्रेषु उदरपूर्तिप्रश्नस्तु शान्तः सजातः भविष्यति न वा। किन्तु उदरपूर्तिरेव सर्व चेत् तर्हि पशूनां मनुष्याणां च को भेदः।

खादते मोदते नित्यं शुनकः शूकरः खरः। तेषांमेषां कोऽविशेष; वृत्तिर्येषां तु तादृशी॥ प्राचीनकालेपि साम्यवाद आसीत् किन्तु स नैतादृशः।

समानो मंत्रः समितिः समानी समानं मनः सह चित्तमेषाम् समानंमंत्रमभिमन्त्र्य. समानेन वो हविषा जुहोमि। इति ऋग्वेदे। आधुनिकसाम्यवादे शरीरमेवेदं सर्वं किन्तु प्राचीनवैदिकसाम्यवादे आत्मैव सर्वम्। उपर्युक्त मंत्रे भारतीयसाम्यवादस्य रूपरेखा वरीवर्तते। तस्मिन् साम्यवादे समानरूपेणैव च यज्ञभागभुजः सर्वे आसन्। न केवलं सर्वे समानयज्ञभागभुजः प्रत्युत सर्वे समाना मत्राः सर्वेषां समानानि मनांसि। तस्माद् भारतीयसाम्यवादस्तु सर्वाङ्गपूर्ण आसीत्। तस्मिन्साम्यवादे नार्थस्य किमपि मूल्यमभूत्। ब्राह्मणानां ज्ञानतः श्रैष्ठ्यम् शौर्यात क्षत्रियस्य महत्वम्, धनात् वैश्यस्य शिल्पात् शूद्रस्य ज्येष्ठ्यम्। उक्तच—'शूद्रेषु शिल्पं वाणिजं वणिक्षु भूपेषु शौर्यं मुखभूषु विद्या। शास्त्रेण दत्ता किल वैद्यकेन तस्माद्गुरुर्भारतभूमिरेव।' अवलोक्यतां अस्माकं महर्षीणाम् दूरदर्शिता। यैवर्णाश्रमधर्मव्यवस्था व्यवस्थापिता।

अनया व्यवस्थया अर्थसाम्यस्य प्रश्नांकुरः एव न जायते, कुत धनात्तु केवलं वैश्यानां ज्यैष्ठ्यम्। इतरेषाम् वर्णत्रयाणां कृते तु धनस्य किमपि मूल्यं नासीत्। तेषां ब्राह्मणक्षत्रियशूद्राणां कृते तु क्रमशः तप. शौर्यम्, शिल्प चैव सर्वं आसीत्। ब्राह्मणा वर्णत्रयेभ्यः ज्ञानं अददुः। क्षत्रिया' त्रयाणां वर्णानां रक्षां चक्रु' एवं वैश्या. सर्वेभ्यो वर्णेभ्यो मुक्तहस्तेन धनं वितेरुः। तथैव शूद्राः सर्वेषां सेवामकुर्वन्। एव सर्वेषां समन्वय सहयोग-श्चासीत्। सर्वे स्वस्वकर्मणि रता महान्त गण्यन्ते स्म। स्वस्वकर्मशून्यास्तु सर्वे क्षुद्राः एव स्वस्वकर्मणि रता. सर्वे संतुष्टा. सुखिनश्चासन्। प्राचीनसाम्यवादे यथा एकः एकार्थाय आसीत् तद्वद् आधुनिकसाम्यवादे एकः एकविरोधाय अस्ति। वर्णविरोधिनः पश्यन्तु वर्गविरोधम्। अस्माकं गणतंत्रराष्ट्रस्य समाजवादस्तु वैदिकसाम्यवादात् एवं कार्लमाक्सवादादपि भिन्नः। यद्यपि शोभनवस्त्राणां धारणं वरं किन्तु तानि तानि शोभनानि वस्त्राण्यपि ग्रीष्मकाले न रोचन्ते जनेभ्यः। तद्वदेव यद्यपि वैदिककालस्य साम्यवादः समीचीन एव किन्तु युगधर्मानुरूपतः साम्प्रत नेच्छन्ति तम्। न चैव आधुनिकजनतंत्रे साम्प्रतं सः साम्यवाद सफलतां यास्यति। पाश्चात्यसाम्यवादस्यापि द्वित्राणि राष्ट्राणि विहाय सर्वत्र विरोधो भवति। समाजवादस्यापि नैका गतिः नैका स्थितिः।

तर्हि किं भविष्यति?

यद् भाव्यं तद् भविष्यति।

# श्रीरामस्य राज्याभिषेकसमयः

( पं०रामप्रपन्नशर्मा, व्याकरणाचार्यः मुख्यसंस्कृताध्यापकः, मोतीकटला हाईस्कूल, जयपुर )

भगवान् श्रीरामभद्रः भारतीयार्यसंस्कृतेः प्राणभूत. संरक्षकश्चासीदिति नापरोक्षं मनस्विनाम्। रामचन्द्रं विना आर्यसंस्कृतिः, आर्यसंस्कृतिरेव वक्तुमयोग्या; यतो हि अस्माकं सभ्यतायाः प्राणभूताः ये नियमाः ते भगवतो जीवनांगभूता बभूवु । अतो हिन्दुधर्मस्य मूर्त्त स्वरूपं श्रीराघवेन्द्रो बभूव ।

रामचन्द्रः केवलं स्वयमेव धर्मानुयायी नासीत्, अपितु 'राजा कालस्य कारणम्' इत्यनुसारं प्रजा अपि वर्णाश्रमाचारानुसार नियोजयामास । तदुक्तं रामायणे- 'चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यति' इति ।

एवंभूतस्य रामस्य प्रामाणिकं चरित्र श्रीमद् वाल्मीकीये रामायणे स्पष्टतया समुपलब्धुं शक्यते । यतो हि 'सत्यं वाल्मीकिभाषितम्।' स्वय लोककर्ता वेधाः वाल्मीकेः आश्रमं समुपस्थाय तस्मै दिव्यदृष्टि ददौ, यया महर्षि. निखिलं रामचरितं दृग्गोचरीकृतवान्। आदिकाव्यं रामायणं च विरच्य रामपुत्राभ्यां कुशलवाभ्यामुपदिदेश । कुशीलवौ च साक्षात् श्रीरामसभायां रामायण जगतुः ।

कथनस्यायमभिप्रायो यत् रामचरितविषये प्रामाणिकता यादृशी रामायणस्य, न तादृशी ग्रन्थान्तरस्य भवितुमर्हति । अतः तदनुसारमेव किंचिदत्र विविच्यते।

अद्यत्वे लोकाः कथयन्ति यत् रामेण रावणस्य वधः विजयदशम्यां कृतः, तथा च दीपमालिकायां रामः स्वनगर्यामयोध्यायां समाजगाम, ततश्च राज्याभिषेकः संवृत्त इति । परं वाल्मीकिरामायणस्यावलोकनेन एतत्सर्वं शशश्रृङ्गायितमेव प्रतीयते ? तथाहि—रामस्य सीतापरिणयानन्तरं द्वादशवर्षाणि यावत् पितृगृहे निवासो बभूव ।

उषित्वा द्वादश समा इक्ष्वाकूणां निवेशने ।
भुंजाना मानुषान् भोगान् सर्वकामसमृद्धिनी ॥
तत्र त्रयोदशे वर्षे राजाऽमन्त्रयत प्रभु. ।
अभिषेचयितुं रामं समेतो राजमन्त्रिभिः ॥

अरण्यकांड ४७ सर्गः

इयमुक्तिः सीताया रावण प्रति । अनन्तरं राजा दशरथः पुत्रस्य यौवराज्येऽभिषेचने निश्चय् कृतवान् । स्पष्ट चैतत् यत् यस्मिन् दिने श्रीरामस्य राज्याभिषेक-मुहूर्तः—आसीत्. तद्दिने पुष्यर्क्षमासीत्—

'अद्य चन्द्रोऽभ्युपगमत् पुष्यात्पूर्वं पुनर्वसुम् ।
श्वः पुष्ययोगं नियत वक्ष्यन्ते दैवचिन्तकाः ॥

अयोध्याकाण्डे

इति दशरथस्य वसिष्ठं प्रत्युक्तिः । पुष्यर्क्ष सिद्धिसूचकं मन्वते मौहूर्तिका. । अतः राज्याभिषेकनिर्णयः पुष्य एव संजात इत्यत्र न सन्देहलेशः । सोऽयं पुष्यः चैत्रमासस्य शुक्ले पक्षे नवम्यां दशम्यां वा समापतति- इति दैवज्ञानां मतम्। तत्रापि रामायणे—

'चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकानन' ।
यौवराज्याय रामस्य सर्वमेवोपकल्पताम् ॥

अयोध्या का०

इति पौराणां दशरथायोक्तिः ।

अस्मिन्नेव चैत्रे मासे पुनर्वसौ भगवतो रामभद्रस्य जन्माऽपि बभूवेति नाविदितचरमार्यधर्मानुयायिनाम् ।

तस्मादय निष्कर्षो निष्कृष्टः यत् रामस्य जन्मदिने पुनर्वसौ चैत्रे नवम्यां राज्याभिषेकमन्त्रणा संजाता। परं 'विधिरहो बलवानिति मे मतिः'। अपरस्मिन्नहनि पुष्ये अभिषेकस्थाने वनवासो लब्धो दाशरथिना चतुर्दशवर्षमित.। यस्मिन् दिने वनवासस्याज्ञा दत्ता कैकेय्या, तद्दिने एव च रामः वनं प्रतस्थे इत्येत् सर्वं रामायणे यथास्थानं द्रष्टव्यम्।

वने त्रयोदशवर्षाणि चित्रकूट-दण्डकारण्य-पंचवटीपु उषित्वा चतुर्दशवर्षारम्भे रामेण खरत्रिशिरसादि चतुर्दशसहस्रं राक्षसा निहताः। तत्समये हेमन्तर्तुः आसीत्, यतो हि राक्षसहननात्पूर्वं शूर्पणखासमागमसमये सीतारामलक्ष्मणाः गोदावर्यां विहितस्नानाः उपाविशन्।

कृताभिषेकः स रराज रामः
सीताद्वितीयः सह लक्ष्मणेन।
कृताभिषेकस्त्वगराजपुत्र्या
रुद्रः सनंदिर्भगवानिवेशः॥

अरण्ये०

एतत्समये—'शरद्व्यपाये हेमन्तऋतुरिष्टः प्रवर्तत।

अरण्ये०

अनन्तरं सीताहरणानन्तर सीतामन्वेषमाणौ रामलक्ष्मणौ सुग्रीवेण समेत्य, वालिनं निहत्य च ऋष्यमूके गिरौ प्रतीक्षमाणावास्ताम। तत्रैव वर्षाकालानन्तरं शरदृतु. समायात., यमवलोक्य रामः सुग्रीवे चुक्रोध, तच्छ्रुत्वा च सुग्रीवः सैन्योद्योगं कृत्वा लंकायामाचक्रमे।

'शरत्कालं प्रतीक्षस्व प्रावृट्कालोऽयमागतः।'
लक्ष्मणस्योक्ती रामं प्रति।

किष्किन्धा०

पाण्डुरं गगनं दृष्ट्वा विमल चन्द्रमण्डलम्।
शारदीं रजनीं चैव दृष्ट्वा ज्योत्स्नानुलेपनाम्॥

तत्रैव।

एतत्सर्वप्रपंचजातस्य कथनस्यायमाशयोऽस्माक यत रामस्य लंकायामाक्रमणं शरदृतौ संजातम्, आषाढशुक्लद्वितीयायां 'आषाढीदशहरा' इत्याख्यादिने नैव जातम्, इति निश्चप्रचम। भवेदेतच्च यत्, आश्विनशुक्लदशम्यां विजयायां, पौर्वकालिकपरम्परामनुसृत्य प्रस्थानं संजात भवेत्।

युक्ते मुहूर्ते विजये प्रयाणमभिरोचय। युद्ध०

इत्यत्र विजयमुहूर्तशब्देन विजयदशम्येवाभिप्रेता स्यात्। अनेनैतद् ध्वन्यते यत विजयदशम्यामाश्विनशुक्लदशम्यां रावणवधो न सवृत्त इति।

संप्रवृत्ते च रामरावणयोर्युद्धे रावणस्य युद्धयात्राऽमायामेव जातेति तत्र स्पष्टम्—रावणस्य सचिवेन सुपार्श्वेनोक्तम्—

अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशी।
कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः॥ युद्ध०

रावणवधानन्तर श्रीरामः विभीषणाय राज्यं दत्त्वा स्वनगरीं राजधानीमयोध्यां प्रतस्थे। मध्ये च—

'पूर्णे चतुर्दशे वर्षे पचम्यां लक्ष्मणाग्रजः।
भरद्वाजाश्रम पाप्य ववन्दे नियतो मुनिम्॥

चतुर्दशवर्षपूरणानन्तर पचम्यां भरद्वाजाश्रमे प्रापणे सति, केयं पचमीति जिज्ञास्यम्। तत्स्मर्तव्यं पाठकैः—चैत्रमासस्य पुष्ये रामस्य राज्याभिषेकसभावनायां वनवासो विहित इति पूर्वं प्रतिपादितमस्माभिः। तत आरभ्यैव पूर्णे चतुर्दशे वर्षे अर्थात चैत्रे पुनर्वसौ भरद्वाजाश्रम राम प्राप्तः। यतो हि—अपरस्मिन्दिने पुष्ये रामस्य राज्याभिषेकः संवृत्त।

पुष्ये नक्षत्रयोगे च मुहूर्ते च समागते ॥ इति ।

अन्यत्र च—रामं रत्नमये पीठे ससीतं सन्यवेशयन् ॥

दाक्षिणात्या :— सौरमानेन मेषमासे पुनर्वसौ रामजन्म मन्यते । मेषे च पुष्ययोगः षष्ठ्यामेव समायातीति ज्योतिर्विदां मतम् । अतः चैत्रशुक्लपष्ठ्यां श्रीरामस्य राज्याभिषेकः बभूवेति निश्चितम् ।

अग्निवेश्यरामायणे तु वैशाखे राज्याभिषेक उक्त । भवतु तावत् । अस्माकं कथनस्यायमभिप्रायो यत् लोकाः—आश्विनशुक्लदशम्यां रावणवधं दीपमालिकां च रामस्य राजधान्यां परावर्तनोल्लासजन्यां वदन्तीति कथम् ? तत्तद्धर्मशास्त्रनिबन्धेषु विजयदशम्यां शमीपत्रचिन्वनमपराजितायास्तत्र पूजनमैशान्यां विहितं, न तु रामचन्द्रस्य रावणविजयजन्या काचन पूजा विहिता, नापि लोकाः कुर्वन्ति च । जयपुरेऽपि जयपुरेशः शास्त्रोक्तमेव विधि विदधाति न रावणवधादिकम् ।

एवमेव दीपावल्यां रात्रौ महालक्ष्म्याः पूजनं विहितं न क्वापि रामस्यार्चनं विहितं नापि भवति कुत्रचित्, रामोपासकसम्प्रदायेऽन्यत्र वा राममन्दिरेषु उपर्युक्तयोः दिवसयो रामस्य कश्चन विजयस्याभिषेकस्य च समारोहः न सभवति । तत्कथं तद्दिनेऽयं लोकप्रवादः प्रचलति इति विचार्यतां विद्वद्भिः ।

अपरच 'दशहरा' अनेन शब्देनैतन्निष्कृष्यते चेत् 'दशमुखहरा' इति प्रसिद्धिः न क्वाऽपि दरीदृश्यते । आपाढीदशहरा, गङ्गादशहरा, दशहरा च, दशहराशब्देन व्यवह्रियन्ते । तस्मान्न दशहराशब्दः दशमुखहरणसूचकः ।

तस्मात् यस्मिन्दिने चतुर्दशवर्षपूर्वं रामस्य यौवराज्यमुहूर्तो निश्चित, तस्मिन्नेव दिने चतुर्दशवर्षानन्तरं रामराज्याभिषेकः समजनि । अन्यथा भरतेन "यदि त्व सप्तद्विगुणितवर्षानन्तरं न समेष्यसि तदाऽहं वह्नौ पतिष्यामीति प्रतिज्ञाहानिप्रसंगः संभवेत्, यदि पूर्णे चतुर्दशे वर्षे रामस्यावर्तनं न स्यात् ।

परं लोके रामलीलादिकं नवरात्रे च रामायणनवाहपारायणं च प्रचलतीत्यत्र किं मूलम् ? इत्यत्र ऊहापोहे कालिकापुराणं शरणम् । तत्र हि-रामेण सहस्रमुखरावणवधं कर्तुमशक्नुवता भगवत्याः महाकालिकायाः स्मरणं कृतम् । अनन्तरं कालिकारूपिणी सीता तत्र गत्वा तादृशरावणस्य क्षयं कृतवती' इति कथा तत्र वर्तते । तत्रैव च आश्विनशुक्लाष्टम्यां कुंभकर्णवधः, नवम्यां च रावणवधो विन्यस्तः । नवरात्रेषु नवाहं रामायणपारायणमपि तत्रैव विहितम् । अन्यथा वाल्मीकिरामायणस्य पद्मपुराणीये माहात्म्ये तु कार्तिकशुक्ले पंचमीमारभ्य त्रयोदशीपर्यन्त नवाहपारायणं विहितम् ।

तदेवानुसृत्य लोकाः रामलीलां कुर्वन्ति नवरात्रदिनेषु । अत्र 'नैको मुनिर्यस्य वचो विभिन्नम्' वाल्मीकिरामायण-कालिकापुराणयोः कः प्रमाणितः ? इत्यस्मिन् विषये वैज्ञानिकशेमुषीकाः विद्वांस एव शरणम् । परं तत्र कालिकापुराणेऽपि नवम्यामेव रावणवधो विहितो न तु दशम्यां, तस्मात् विजयदशम्यां रावणवधः, दीपावल्यां च रामराज्याभिषेकः, प्रत्यावर्तनोत्सवो वा शशशृङ्गायित एव ।

सिद्धान्तस्तु रामायणनिष्णातशेमुषीकाणां विदुषां प्रतीक्ष्यते ।

# —: संस्कृतमेव राष्ट्रभाषा भवेत् :—

( पं० उमाकान्तमिश्रशास्त्री मुख्यसंस्कृताध्यापकः गुरुकुलमहाविद्यालये वैद्यनाथधाम )

इदानीमस्माकं देशे राष्ट्रभाषाविषये बहवो विवादाः सन्ति समुद्भूताः। भारतस्य राष्ट्रभाषायाः सिंहासने काऽसौ भाषा समासीना भवेदिति समस्याऽस्माकं देशनायकानां पुरतो वर्तते। न केवलं भारतीयस्वाधीनतायाः पश्चादेव समस्येयमुपस्थिता, अपितु पूर्वमपि तस्याः आवश्यकताऽनुभूतासीदस्याः।

यद्यपि संविधानद्वारा हिन्दीभाषा राष्ट्रभाषात्वेन स्वीकृता, तथापि भारतस्य विभिन्नभागेषु तस्याः विरोधे यादृश कलकलः श्रूयते—यादृशी वा प्रतिक्रिया विलोक्यते—तन्न तिरोहितं विदुषाम्। दक्षिणभारते तु विद्रोह इव दृश्यते। तत्र रेलवेप्लेटफार्मेषु तदन्यदन्येषु वा राजकीयकार्यालयेषु हिन्दीभाषया लिखितां सूचनिकां कज्जलेनोपलिप्य यावन्तं हृदयक्षोभं प्राकटयन् दाक्षिणात्या— तन्नैव विस्मर्तव्यम्।

अतश्च सन्ति केचन विद्वांसो ये आंगलभाषामेव राष्ट्रभाषां प्रतिपादयन्तो नैवेदानीमपि त्यजन्ति तद्व्यामोहम्।

अन्तरराष्ट्रिये जगति भाषेयमाङ्गलानां निःसंशयमत्युपयोगिनी, महत्त्वाकाङ्क्षिभिः प्रयतनीयमपि तदर्थम्। किन्तु स्वाधीनभारतेऽपि यदीय विदेशीया भाषा तथैवाधिकारिणी तिष्ठति यथा खलु तेषामाङ्गलानां शासनेऽतिष्ठत्, तर्हि हन्त! न लब्धं पूर्णं फलं स्वाधीनतायाः।

अतश्च श्रीमन्तः कैलासनाथकाटजू—प्रभृतयो बहवो विज्ञविचारकाः संस्कृतभाषामेव राष्ट्रभाषायोग्यां मन्यन्ते। गतेष्वेव दिनेषु उत्तरप्रदेशस्य मुख्यमन्त्रिणा डा० संपूर्णानन्देनापि "लखनऊनगरे उच्चैरुद्घुष्टं यद् "यदि कापि भाषा भारते राष्ट्रभाषा भवितुं योग्या तर्हि सा भाषा संस्कृतभाषैव वर्तते।"

संस्कृतभाषाया राष्ट्रभाषात्वप्रतिपादनं तद्वद्वा संस्कृतभाषाया विशिष्टत्ववचनं श्रुत्वा केऽपि नासामाकुञ्च्य वक्त्रं च वक्रं विधाय संस्कृतपक्षपातिनामविचारितरमणीयं हृदयोद्गारं वदिष्यन्ति, तर्हि ते वदन्तु नाम। संस्कृतभाषां मृतभाषामपि केचन वदन्ति, तेऽपि वदन्तु नाम। किन्तु वस्तुतः संस्कृतभाषाया एव राष्ट्रभाषात्वं युक्तम्, तदावश्यकञ्च। यतोहि काश्मीराद् रामेश्वरं यावत् कच्छात् कामरूपपर्यन्तं च विशालस्य भूभागस्य राष्ट्रभाषा सैव भवितुमर्हा, या खलु सर्वेषां राज्यानां तद्वासिनां च कृते समानरूपेण स्पृहणीया ग्रहणीया च भवेत्। यदि कापि एकदेशीया भाषा बलादारोपिता भविष्यति तर्हि हिन्दीभाषावत् तस्या दुर्गतिः सुनिश्चितैव। अतश्च सर्वेषां समानरूपेणादरणीया, सर्वभाषाणां प्राणशक्तिः, सकलाः अपि च प्रादेशिकभाषाः जीवयन्ती संवर्द्धयन्ती च मातेव सेवनीया सैषा संस्कृतभाषैव राष्ट्रभाषापदयोग्या। अस्याः संस्कृतभाषायाः सर्वभाषाव्यापित्वं सर्वभाषान्तर्यामित्वं च विलोक्य-अनुक्तसिद्धं सजीवत्वं सर्वङ्कषं सामर्थ्यं च विज्ञाय सर्वैरेव राष्ट्रकल्याणकामैः संस्कृतस्य राष्ट्रभाषात्वं स्वीकरणीयमेव। यदि संस्कृतं राष्ट्रभाषा भवति तर्हि न कापि प्रान्तीयता समुदीयात, न कापि क्वापि विरोधाशङ्का वा स्यात्।

राजनीतिविशारदैः तस्यैव राष्ट्रस्य स्थितिः सुदृढा प्रोक्ता—यस्य मानवसमूहस्य तुल्यं लक्ष्यम्, तुल्यं शासनम्, तुल्यः इतिहासश्च भवेत्। तुल्या संस्कृतिः

# सम्पादकीयम्—

## संस्कृतभाषा च भारतं च

व्यतीते मासे संस्कृतभाषामिमामधिकृत्य भारतेऽस्मिन्, अतिमहत्त्वपूर्णा विचाराः प्राचरन्। संस्कृतस्य विषये सर्वतोऽधिक समुल्लेखनीया चर्चा भारतराजधान्यां देहल्यां समभवत्, या हि भारतीयविश्वविद्यालय नाम् 'प्रमुखाध्यापकसंमेलने' समघटत। संमेलनमिदं भारतराजतन्त्रस्य शिक्षामन्त्रणालयद्वारा आमन्त्रितमभूत्। एतस्याऽध्यक्षोऽपि भारतसर्वकारस्य 'शिक्षासचिवः' प्रो० हुमायुकबीरमहाशयो निरवाच्यत। समेलनेनाऽनेन प्रस्तावस्याऽस्य एकस्वरेण ससमादरं च स्वागतमक्रियत यत् भारतसर्वकारेण भारतेऽस्मिन् संस्कृतस्योन्नतिरचिरात् कर्तव्याऽस्ति। एतदर्थं च संस्कृतस्य परितः प्रचाराय प्रसाराय च, देशस्याऽस्य प्रमुखप्रमुखानां संस्कृतविदुषाम् एका महती परिषद् (Committee) निर्मातव्या। या हि विषयेऽस्मिन्नुचित परामर्श प्रदद्यात्।

उत्तरप्रदेशस्य मुख्यमन्त्रिणा डा० श्रीसम्पूर्णानन्दमहाभागेनाऽपि साम्प्रतमेव संवृत्ते संस्कृतविषयकसंमेलने प्रबलतरमाघोषितमासीद् यत् संस्कृतभाषायामस्या भारतस्य राष्ट्रभाषासिंहासनमलंकर्तुं पूर्णा क्षमता वर्तते इति। पञ्चाम्बुप्रान्तीयशासनतन्त्रद्वारा मनोनीतया एकया परिषदा कुरुक्षेत्रे संस्कृतविश्वविद्यालयस्थापनाविषये विस्तृता विचारविमर्शाः प्रकाशिता एव। प्रामाणिकरूपेण इदमपि विदितमभूद् यद् कुरुक्षेत्रे स्थापयिष्यमाणेऽस्मिन् विश्वविद्यालये न केवल संस्कृतभाषाया एव शिक्षा निर्धार्येत अपि तु एशियाप्रदेशस्य प्रमुखप्रमुखानामन्येषामपि राष्ट्राणां तास्ता भाषाः परिगृह्येरन्, तासामध्यापनस्य च सुव्यवस्था सर्वतो विचार्येत। कुरुक्षेत्रीयविश्वविद्यालयपरिषदोऽस्याः प्रशस्योऽध्यक्षः पञ्चाम्बुप्रान्तस्य राज्यपाल सी० पी० एन्० सिंहमहाभागः स्वयमासीत्।

यदा यदा हि संस्कृतभाषाप्रणयिनां भारतीयाना समक्षे एवंविधाः संस्कृतसमाचाराः समुपतिष्ठन्ति, तदा तदा तेषां हृदि अपूर्वः कश्चिदुत्साहश्च प्रमोदश्च प्रादुर्भवति। किन्तु एवविधानां समाचाराणां वास्तविक रहस्य किमस्ति ? भारते संस्कृतोन्नतिसंपादनविषये प्रयोगात्मकः को वा पादन्यासः शासनाधिकारिभिः संस्थाप्यते इति हि सूक्ष्मेक्षिकया समीक्षणीय नूनम्।

पूर्वोक्तान् संपूर्णानेव विषयानुद्दिश्य भारतस्य प्रमुखेन दैनिकपत्रेण 'हिन्दुस्तान टाइम्स' नामकेन अक्टूबरमासस्य द्वादशतारिकायामेका सपादकीयटिप्पणी प्रदत्ताऽस्ति। तस्याः शीर्षकमस्ति 'संस्कृतम्'। सपादकमहाशय' पूर्व संस्कृतस्य महत्त्वविषयं विवृणोति। संस्कृतमहत्त्वविषये संस्कृतानुरागिणामेव किम्, विचारशीलानां सर्वेषामेव ऐकमत्य भविष्यति। किन्तु सपादकोत्तसस्य सोयं विचारः केवलमविचार एवास्ति यत् 'संस्कृतभाषा देशस्याऽस्य भाषा कदाऽपि नाभवत्

---

तुल्या राष्ट्रभाषा च भवेत्। यदि संस्कृतिः कस्यापि राष्ट्रस्यात्मा मन्येत, तर्हि राष्ट्रभाषा राष्ट्रस्य लोचनं मन्यताम्। संस्कृति-राष्ट्रभाषयोर न्योन्याश्रयसंबन्धः। राष्ट्रभाषया तात्पर्यं तया भाषया भवति, यया न केवलं राज्यस्य कार्यालयानां न्यायालयानाञ्च कार्याणि सिध्येरन्; अपि तु यस्यां भाषायामुच्चकोटिकं साहित्यमपि स्यात्, यस्मिन् साहित्ये राष्ट्रस्य संस्कृतिः प्रतिबिम्बिता स्यात्। अतश्च राष्ट्रभाषात्वस्पर्धायां काचिदपि अन्या भाषा संस्कृतभाषायाः पुरतः स्थातुमपि न शक्ता।

इदमपि न विस्मरणीय यदेषा संस्कृतभाषा चिरकालात् भारतस्य राष्ट्रभाषा आसीत्। बहुकालपर्यन्तमस्या अध्ययनं देशे राष्ट्रभाषारूपेणैवाभूत्। यत्किल शासनकार्यसौकर्यसाधनमन्यत्र भाषासु मृग्यते, न च तत्र लभ्येत तत् सर्वमपि सुसमीचीनमत्र सन्निविष्टम्। अतश्च शासनोपयोगिविविधवस्तूना पूर्णताऽपि एतस्याः राष्ट्रभाषात्वसमर्थिका।

एवं किं कारणं यद् राष्ट्रभाषा-समस्यायाः समाधानेऽस्या, सर्वगुणगुम्फितायाः संस्कृतभाषाया उपयोगो न भवेदित्यल विस्तरेण।

इति ।" वर्तमानसमये, मौगलादिवदेशिकानां शासनसमये च संस्कृतभाषा अवश्यं पुस्तकस्था निरमीयत । कन्तु ख्रिस्टसंवत्सरवृत्तेः पूर्वं यास्कपाणिन्यादि समयेऽपि किं सा भाषा तिरस्कृताऽभवत् ? या हि सा भाषा 'भाषा' पदेन स्थाने स्थाने व्यवहृता । यां भाषामेकः शकटिचालकोऽपि ब्रूते स्म । दूरादाह्वानेऽपि या भाषा मिथो व्यवह्रियते स्म । [यस्य कृते 'पाणिनिः' प्लुतम् अनुशास्ति] सा भाषा, कदापि व्यवहरणीया नाऽभवत्, अस्तु, एतदर्थं विचारशीलानां निबन्धा अनुशीलनीयाः मम 'संस्कृतभाषा' नामको ग्रन्थश्चविलोकनीयः । किं विवादेन ?

**वनस्थलीविद्यापीठस्य वार्षिकोत्सवः—** अक्टूबरमासस्य ३० तारिकायां "वनस्थलीविद्यापीठे वार्षिकोत्सवस्य महान् समारोहः समभूत । उत्सवाऽध्यक्षो



भारतस्य राष्ट्रपतिः डा० राजेन्द्रप्रसादमहाभागः समभवत् । अतएव राष्ट्रपतेरागमनेन उत्सवेऽस्मिन्नतीव समारोहो लोकानामतीव संमर्दश्चाऽऽभवत् । प्रथमदिने [ २९ तारिकायाम् ] राष्ट्रपतेः संमाननाय जयपुरनगरे शोभासज्जाऽक्रियत । नगरस्य स्थाने स्थाने रक्षाविभागीयानां (सिपाही) प्रबन्धोऽभूत्, येन हि 'वायुशकलं' (बाइसिकिल) अश्वयानंप्रभृतिवाहनानां कृते विशेषव्यवस्थाऽक्रियत । रात्रौ 'सिंहदुर्गे' (नाहरगढ), स्वर्गशूली त्रिपोलियाप्रभृतिनागरिकस्थानेषु विद्युद्दीपमालायाः रुचिरः प्रकाशः समशोभत ।

त्रिंशयां तारिकायां वनस्थलीयायिनां 'बस' वाहनानां विशेषव्यवस्थाऽभवत्, येन हि परःसहस्राः पुरुषा राष्ट्रपतेर्दर्शनार्थमुत्सवसमारोहं प्रचुरजनाऽऽकुलमकुर्वन् । उत्सवेऽस्मिन् प्रातर्दशवादने 'शान्ताबाई'शिक्षाकुटीरे राष्ट्रपतेः स्वागतमभूत् । ततो मध्याह्ने त्रिवादनपर्यन्तं तत्रत्यस्य 'कलाभवनस्य' 'गृहस्थशिक्षाभवनस्य' 'छात्रावासस्य' च 'प्रदर्शनं' कार्यक्रमः समवर्तत । ततश्चतुर्वादनं यावत् महति सभामण्डपे तत्रत्याभिश्छात्राभिः संगीतस्य नृत्यस्य च प्रदर्शनमक्रियत । ततः सार्द्धपञ्चवादनं यावत् विद्यापीठस्य वीरबालिकाभिर्व्यायामस्य, वायुशकलारोहणस्य, अश्वारोहणस्य च प्रदर्शनमकारि, यत्र धावतां घोटकानामुपरि समवेतानां द्वित्राणां बालिकानां सधैर्यमारोहं विलोक्य प्रासीदत् अचित्रीयत च जनता । ततो दीपोद्द्योतोत्तरं 'सभामण्डपे' 'शासकसभायाः (पार्लियामैण्ट) कार्यक्रमस्य प्रदर्शनमकारि तत्रत्याभिश्छात्राभिः । ततो 'रतन'शास्त्रिणीद्वारा विद्यापीठस्य वार्षिकविवरणे श्राविते, विद्यापीठस्य प्रमुखः श्रीमान् हीरालालशास्त्रिमहाभागो राष्ट्रपतेः संमाननां कुर्वन्नभाषत यत्–'राष्ट्रपतिमहाभागस्य विद्यापीठस्याऽस्योपरि प्रारम्भादेव कृपाविशेषः समभूत् । यस्मिन् समये श्रीमान् राष्ट्रपतिपदे न समारूढत् । अयं विद्यालयोऽपि 'विद्यापीठं' नाऽसीत् । साधारणी एका पाठशालाऽऽसीत्, तत आरभ्यैव श्रीमहता विद्यालयस्यास्योपरि आत्मीयता प्रदर्शिता, हार्दिकश्चाशीर्वादः प्रदत्तः । तस्यैवेदं फलमभूद् यत् स्थानमिदं साधारणविद्यालयतो विशिष्टपीठं समभवत् । किन्तु प्रहर्षस्य सोऽयमवसरो यत् श्रीमतः पदार्पणं पुनरस्मिन् विद्यापीठेऽद्याऽभवत् । अतएव वयं संभावयामो यत् विद्यापीठमिदं शीघ्रमेव 'विश्वविद्यालय' रूपे समुन्नतं भवेत् । एतस्य कार्य-

कर्तारो येन क्रमेणाऽद्याऽवधि प्रगति प्रादर्शयन्, तद्नुसारं तेषां हार्दिक उत्साहः अग्रे उन्नतिं लब्धु च महत्साहसं विद्यते।। अतएव दृढनिश्चयोऽस्ति यत्तदिदं विद्यापीठं विश्वविद्यालयरूपे परिणमेत्, यदि केन्द्रीयसर्वकारस्याऽपि साहाय्यं भवेत्।

• एतदनन्तरमुत्सवस्याऽस्याध्यक्षेण श्रीमता राष्ट्रपतिमहाभागेन स्वीये भाषणे विद्यापीठस्य कार्यक्रमात्संतोषः प्रकटितः। तथा सवाक्चातुर्यमाविष्कृतं यत्—"विद्यालयस्याऽस्य कार्यकर्तृभिः येन क्रमेण महत्युन्नतिरधिगता, 'विद्यापीठ'ता च लब्धा, तदनुसारमीश्वरस्याऽनुग्रहः सपूर्णरूपेणाऽनुमीयते। ईश्वरानुग्रहादधिकस्तु शासनतन्त्रस्यानुग्रहो नास्त्येव। अत एव ईश्वरानुग्रहेण विद्यापीठमिद विश्वविद्यालयो भवेदत्र न किञ्चिदाश्चर्यम्।"

सभामण्डपे आगमनात्पूर्वं राष्ट्रपतिमहोदयः कविभिर्विशिष्टपुरुषैः सह ससमादरममिलत्। तेषु राजवैद्यपं० नरहरिशर्मा, जोबनेरसंस्थानाधिपति. श्रीमान् ठा० नरेन्द्रसिंहः, आसां पङ्क्तीनां लेखकः सोयं 'भारती'-सम्पादकोऽप्यासीत्। अनेन हि संपादकेन स्वनिर्मित एको ग्रन्थो राष्ट्रपतये समर्पितः। वनस्थलीविषयकं नवीनं वर्णन च सस्कृत-पद्यैर्नैकेन श्रावितं यदाकर्ण्य राष्ट्रपतिना विनयः, परमःसतोषश्च प्रकटीकृतः। अस्तु, वयमपि विद्यापीठमिद विश्वविद्यालयरूपे द्रष्टुं वाञ्छाम। येन हि मम पूर्वोक्तेरनुसारं "वनस्थली राजस्थानप्रान्तस्य जीवनस्थली संभवेत्।"

## देशदर्शनम्—

**भारते स्वागतसमारोहाः—** विश्वस्य सर्वैर्देशैः सह मैत्र्या नीतिघोषं कुर्वाणस्य भारतस्य राजधान्यामेषु दिनेषु विदेशीयानामागन्तुकानां भूयान् समारोऽस्ति। अधुनैव नवम्बरमासस्य ६ तारिकायां नेपालमही-महेन्द्रो महेन्द्रो भारतदर्शनाय समागतः। अथ राष्ट्र-पतिना, प्रधानमन्त्रिणा अन्यैश्च मन्त्रिभिः संमानितोऽ-भूत्। एतेन सह महाराज्ञी अपि समागताऽस्ति। एवमेव रूसदेशीयमन्त्रिपरिषदोऽध्यक्ष. मार्शलबुल्गा-निनोऽपि निकटेनैव भविष्यता (१८ नवम्बर) भार-तमागमिष्यति। एतस्य कृते देशस्य तेषु तेषु स्थानेषु लक्षावधिरूप्यकाणां व्ययेन स्वागतसमारोहाः क्रियन्ते। ३ दिसम्बरदिने जयपुरेऽप्यय महाभागः समागमिष्य-तीति सूचितम्। राजस्थाने स्वागताय षड्लक्षमुद्रा-व्ययो भावी।

**देहल्यामौद्योगिक प्रदर्शिनी:—**चतुष्कोटिमुद्रा-व्ययेन समायोजिता औद्योगिकप्रदर्शनीयं महता समा-रोहेण देहलीमथुरामार्गे षट्क्रोशमितं क्षेत्रफलम् अभिव्याप्य प्रतिदिनं परोलक्षैर्जनैर्दृश्यते। अक्टूबर-मासस्य २६ तारिकायां प्रधानमन्त्रिणा नेहरुणा सेयमु-द्घाटिता। अस्या विभागद्वयमस्ति। विदेशविभागः, भारतीयविभागश्च। विदेशविभागे जर्मनी-रूस-यू०के० प्रभृतीनां विदेशानां पृथक् पृथक् प्रकोष्ठानि सन्ति येषु तत्तद्देशीया औद्योगिकी तान्त्रिकी चोन्नतिः प्रायोगिकरूपेण प्रदर्श्यते। जर्मनीदेशेन निर्माय भारताय समर्पितः एकः काचमयो मनुष्यो यश्चलति, बहुभाषासु भाषते च, निश्चितं दर्शनीय एव। भारतीयविभागे भारतीयानामुद्योगानां चित्रमयं प्रायोगिकं च सुदरं प्रदर्शनम्। बर्माशेल कं० द्वारा निर्मिता महामहती काचदीपिका (Lantern) ऽपि दर्शनीया। इयं प्रदर्शिनी संपूर्णं नवम्बरमासं स्थास्यति।

आश्चर्यं यत्सप्ताहाभ्यन्तर एव विद्युद्व्यतिकर-कारणाद् द्वौ अग्निकाण्डौ जातौ। विदेशविभागे रूमानियादेशस्य कक्षः सम्पूर्णो दग्धः। इतश्च ३ नव-म्बरदिने "इम्पीरियल टुबाको (तमाखु) कं०" प्रदर्शनगृहेऽग्निकाण्डोऽभूयस्त्वरितमेव प्रशमितः।

अभूतपूर्वया महत्या प्रदर्शिन्याऽनया साधारण-जनतायै भारतीया औद्योगिकप्रगतेः समीचीनं ज्ञानं प्रदीयते। दूरदूरप्रदेशाज्जना इमां द्रष्टुं देहलीमाग-च्छन्ति।

### राज्यपुनर्घटनाऽऽयोगस्य प्रतिवृत्तम् (रिपोर्ट)

भारते राज्यसीम्नां पुनर्निर्माणार्थं समायोजितः पुन-र्घटनायोगः स्वकीयमतानि प्रकाशितवान्। एतदुपरि गम्भीरं विचारं कर्तुं भारतीयप्रधानमन्त्रिणा जनता बहु प्रेरिता। भारतस्य रूपरेखा परिवर्त्तनस्येदं कार्यं नास्ति साधारणम्। इदं महान्तं विचारमपेक्षते। अक्टूबरमासस्यान्तिमे सप्ताहे एतदुपरि विचारं कर्तुं मुख्यमन्त्रिणां सम्मेलनं देहलीनगरेऽभवत्।

इतः प्रत्येकं प्रान्तेषु एतदुपरि विचारं क्रियते। एतस्यायोगस्यै निश्चयानां विरोधो महाराष्ट्रप्रान्तीयैः पञ्चाम्बुप्रान्तीयैश्च ससमारोहं कृतः। महाराष्ट्र-गुर्जर-प्रान्तयो बम्बईप्रदेशे विलयः, राजस्थानाजयमेरुप्रान्त-योरेकीकरणम् इत्यादयः आयोगस्य प्रस्तावा विचार-सापेक्षाः। राजस्थानस्य बहुभिः दलैः राजस्थानाजय-मेरुविलयस्य विरोधः प्रकटितः।

# भारती

प्रमुखं संस्कृतमासिकपत्रम्




न जायते म्रियते वा कदाचित् नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च,
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ।


| | | |
|---|---|---|
| वर्षम् ६ | द्वितीयोऽङ्कः | मूल्यम्<br>वार्षिकम् ३) रु०<br>एकस्याङ्कस्य ।=) |

राजस्थान-मद्रास-मध्यप्रदेश-सौराष्ट्र-भूपाल-उत्तरप्रदेश-बहार-पञ्चनद-आन्ध्र-सर्वकारैः स्वीकृता—

## ❀ विषय-सूची ❀



## संस्कृतसेवकानां कृते सुवर्णावसरः ! प्रतियोगितात्रयम्

देहलीवास्तव्यैः श्रीकैलासचन्द्रमहोदयैः 'भारती' पत्रिकायै लघुकथा-एकाङ्किनाटककविताप्रतियोगितानामायोजनाय (७०) रूप्यकाणांराशिः प्रदत्त । अल्पेन स्वकीयव्ययेन सह भारती एताः प्रतियोगिता आयोजयितु वाञ्छति ।

१. भारते भारताद् बहिश्च निवसद् कोऽपि नरो महिला वा प्रतियोगितायामेतस्यां भाग ग्रहीतु क्षमाः ।

२. लघुकथाया एकाङ्किनाटकस्य कविताया वा (एकस्य कस्यचन) प्रेषण भारतीकार्यालये ... मनुल्लंघ्य कार्यम् । तदनन्तर लब्धा कृतिर्नाभिरोच्येत ।

३. लघुकथा भारत्या पृष्ठचतुष्टयात् पृष्ठषट्कपर्यन्तमितकाया स्यात् नाऽतोधिका, न्यूना वा । शब्दसंख्या न्यूनान्न्यून सहस्रद्वयात्मिका, अधिकाधिक च त्रिसहस्रात्मिका भवेत् ।

४. एकाङ्कनाटक भारत्या पृष्ठचतुष्टयात्सप्तपृष्ठपर्यन्तं विस्तृत भवितु शक्यं, शब्दसंख्या एकसहस्रं सहस्रद्वय वा ।

५. कविता प्रशस्यरूपेण वीररसप्रधाना न्यूनान् न्यूयं दशपद्यात्मिका अधिकं च त्रिंशत्पद्यात्मिका स्यात् ।

६ लघुकथाप्रतियोगितायां, एकाङ्किनाटकप्रतियोगितायां च लब्धप्राथम्याय विदुषे प्रत्येकम् एकपञ्चाशद्रूप्यकमितो द्रव्यराशि द्वितीयस्थानमधिगतवते च प्रत्येक पञ्चविंशतिरूप्यकाणि ससम्मानं प्रदास्यन्ते ।

७ कविताप्रतियोगितायां सर्वप्राथम्यमुपेयुषे विदुषे एकविंशतिमुद्रा प्रदास्यन्ते ससम्मानम् ।

८ भारतीनिर्णायकसमितेर्निर्णयोऽन्तिमरूपेण मान्यः स्यात् । एतस्यां समितौ त्रयो निर्णायकाः सन्ति ।

१—म० म० प० गिरिधरशर्मा चतुर्वेदः । २—भट्टश्रीमथुरानाथशास्त्री भारतीसम्पादक ।

३—वैद्यराजजयरामदासस्वामी आयुर्वेदकालेजाध्यक्ष ।

९ लब्धपुरस्काराः कृतय, अन्याश्चापि योग्या रचना भारत्यां प्रकाशमेष्यन्ति ।

वय सर्वानपि संस्कृतज्ञान् सोत्साह प्रतियोगितास्वेतासु भाग ग्रहीतुमामन्त्रयामहे ।

—प्रबन्ध-सम्पादकः

सम्पादकः—
कविशिरोमणि
भट्टश्रीमथुरानाथशास्त्री
सहसम्पादक —
देवर्षिकलानाथशास्त्री B. A.
जयपुरम्

प्रबन्ध-सम्पादकः—
गिरिराजशर्माशास्त्री

# भारती

भानुवद् भारतीयानां भास्वद्भवनभासिनी ।
भागीरथीव भावाढ्या भारते भातु भारती ॥

वर्षः ६ | मार्गशीर्षशुक्लाप्रतिपत्, सं० २०१२ | अङ्कः २

## कालिदाससंस्तवः

रचयिता :—पं० श्रीरामेश्वरप्रसादशास्त्री विद्यालंकारः प्रधानाचार्यः—श्रीरामानुजसंस्कृतमहाविद्यालयः, डीडवाना (राजस्थान)

कालिदासकवेः साम्यं कः कविः कलयत्विह ।
पदे पदे यस्य वाणी नृत्यन्तीव विलोक्यते ॥१॥
प्रसादमधुरां वाचं यस्यास्वाद्य महाकवेः ।
वैदेशिकाः प्रमाद्यन्ति, धन्यं धन्यं ब्रुवन्ति च ॥२॥
यच्चित्रं चित्रितं तेन पात्राणां प्रकृतेश्च तत् ।
पुरः स्फुरदिवाभाति संलपत् प्रविभाव्यते ॥३॥

रहस्यवादं प्रवदन्तु केचन
आश्रित्य छायां कवयन्तु वापरे ।
पिबन्तु हालां त्वथ पाययेत्कविः
कः कालिदासस्य प्रसादमाधुरीम् ॥४॥

जाता सहस्रशोऽन्ये
कवयो देशे विदेशेषु ।
विहरति कविताकुञ्जे
परमेकः कालिदासकविसिंहः ॥५॥

मधुमोचिकाऽरुणरसालसिता
वनिताऽधरास्तदुपयान्तु कथम् ?
सरसस्य वत्सरशतेऽपि गते
कविकालिदासवचसस्तुलनाम् ? सम्पादकस्य

# 卐 धर्मः, नीतिश्च 卐

( हरगोविन्द पाराशरः व्याकरणशास्त्री (अन्तिम) काव्यतीर्थः साहित्यरत्नम् )

"यतोऽभ्युदयनिश्रेयससिद्धिः स धर्मः" इति महर्षिकणादरचिते धर्मलक्षणे स्फुटमेव प्रतीयते यन्मानवस्य प्राणिमात्रस्य वोन्नतिः कल्याणसिद्धिश्च जायते सः धर्मपदवाच्योऽस्ति। अन्ये च "चोदना-लक्षणोऽर्थो धर्म" धारणाद्धर्म इत्यादि वदन्ति। महर्षिः व्यासस्तु चरमसिद्धान्तरूपेण हस्तमुद्यम्य निनादयति—

श्रूयतां धर्मसर्वस्व श्रुत्वा चैवावधार्यताम्।
आत्मन प्रतिकूलानि, परेषान्न समाचरेत्॥ इति

मानव निसर्गत एव आत्मन. स्वस्योन्नत्यै तदनुकूलानाचारान् कर्माणि चाचरति। स स्वस्य सुखसाधने दुःखनिवर्तने च प्रवर्तते। दैहिकसुखाप्तये स भौतिकानामुपकरणानां धन, गृह, स्त्री, पुत्रादीनां सम्पादनाय स्वजीवनस्य समयं शक्तिञ्च नियोजयति। शिक्षा, सामाजिकयोग्यता च सुखस्य साधिके, अतः ते साधयति। धर्मज्ञानरहितदशायां मर्त्यः केवलं दैहिकसुखमेव सर्वस्वमिति बुद्ध्या स्वीकरोति। स देहात्मवादी भवति।

अत्रावधेयं, यद्धर्मः दैहिकसुखमेव सर्वस्वन्न मन्यते, प्रत्युत सः लोकोत्तरमपि पश्यति। अत एव आत्मनः स्वरूपं महत्वञ्च प्रदर्शयन् सः दैविकमात्मिक सुखञ्च शिक्षयति तापत्रयञ्च दूरीकर्तुं प्रेरयति। धर्मस्येयं महनीया विशेषता यत्स जीवनकलां पारमार्थिक-साधनञ्च प्रतिपादयति। मानवमात्रस्य कृते दैहिक-दैविक भौतिकाध्यात्मिकाभ्युदये धर्मस्य महत्यावश्यकता वर्तते। सहैव सोऽन्येषां प्रतिकूलमपि नाचरणीयं मानवैः निःश्रेयससिद्ध्यर्थमिति चोद्घोषयति। अत्र वैशिष्ट्यं यद्धर्म सामाजिकीं व्यवस्थां सुदृढीकरोति, तां सुखप्रदां वाञ्छति। सर्वे मानवा. समाजस्याङ्गानि, सामाजिकव्यवस्थाया कर्तार सन्ति। अत एव स्वजीवनोन्नतिं शिक्षयन्नपि धर्मोऽनुशास्ति 'आत्मनः प्रतिकूलानि परेषां न समाचरेदिति'।

धर्मः जीवनक्रियासु परमावश्यकोऽस्मिन्नास्ति सन्देहलेशोऽपि। वस्तुतस्तु येन धार्यते स एव धर्मः। ये केचन स्वधर्मं परित्यज्य जीवनसुखशान्ति प्राप्तुमभिलषन्ति, कथयन्ति च "धर्मोऽस्माक जीवने क्लेशमादधाति, न तेन विना कापि क्षतिः। अतः—नास्त्यपेक्षा तस्य" इति ते भ्रमे निमग्नाः। तेषामिदं कथनं प्रामादिकमविचारितञ्चास्ति। धर्मस्त्वस्माकञ्जीवनैः सहैव प्रचलति, तस्य सम्बन्ध न केवलमात्मनापि तु देहेनापि सह वर्तते। यद्यपीयमुक्तिः सत्या यद्धर्मोऽनुभवस्य वस्तु न तर्कस्येति, तथापि तस्यार्थोऽयन्नास्ति यत्तस्य न देहेन सम्बन्धः। धर्मोऽस्माक हृदयमन्तःकरणं विचारांश्च सात्विकान् करोति, येषां सक्रियमाचरण देहेनापि जायते। धर्मं विना वयं स्वार्थसिद्धये परान्विनाश्य आचरेम, येन मानवसृष्टौ न सुखशान्तिः भवितुं शक्नोति। विद्वद्भि महापुरुषैश्च धर्मस्योपादेयत्वमावश्यकत्वञ्च जीवनेऽनिवार्यरूपेण प्रतिपादितम्। अत एव निःसंशया जीवनेऽनिवार्यावश्यकता धर्मस्य, तद्विना जीवनस्याशक्यत्वात्।

नीयते जीवनं राष्ट्रञ्च यया सा नीतिः। नीतिरस्माज्जीवनस्य राष्ट्रस्य च सञ्चालनप्रणालीमुपदिशति। यत्र धर्मः सन्मार्गं गन्तुं प्रेरयति, तत्र नीतिः तस्योपरि गमनस्य रीतिं शिक्षयति। नीतिः स्पष्टयति जगति

मानव: सृष्टिरीश्वरस्य। तेषामत्र समानाधिकार:, ते सर्व एव मनुष्या (चिन्तनशीलप्राणिन), अत समाना एव। यथा माता स्वसर्वानात्मजान्समानदृष्ट्या पश्यति व्यवहरति च, समदृष्ट्यैव तेषां भागङ्करोति। तथैव नीतिमातु: दृष्टौ अत्रत्या: विश्वस्था: निखिला एव मानवा: समेक्षणभाज:। अन्यच्च—यथा पिता स्वसर्वान्पुत्रा-ञ्ज्येष्ठकनिष्ठादिदृष्ट्या स्वकर्मसु त्वं ज्येष्ठ:, अत इदं कार्यङ्कुरु, त्वं कनिष्ठ, अत इदं कार्यङ्कुरु इत्यादि रीत्या नियोजयति, तान् कर्तव्याकर्तव्यमुपदिशति। तथैव धर्म मानवान् ज्येष्ठकनिष्ठादिविभागेन धर्मनियमान् कुर्वन्, स्वस्वयोग्यकर्मसु नियुनक्ति, येन ते स्वस्वकार्याणि कुर्वन्ति, साहाय्यमन्योन्य ददत. स्वलक्ष्य-साधने समर्था: भवेयु।

अस्माभि: धर्मस्य नीतेश्च स्वरूपमुक्तम्। अत्र तयोरुपादेयत्वं स्थानञ्च स्पष्टीक्रियते। पूर्वोक्तपङ्क्तिषु ध्वनितं यद्धर्म: पुत्रवदनुशास्ति, स्वकर्मसु च नियोजयति, नीति: मातृवत्समदृष्ट्या पश्यति कार्यप्रणालीञ्च शिक्षयतीति। तदनुसारेण पुरुषस्थानीय: धर्म: पिता, स्त्रीस्थानीया नीति: माता चास्ति विश्वस्य मानवानाम्। शास्त्रस्य लोकस्य च मतेन धर्म:—विश्वमानव पाति, कार्याणां व्युपदेशङ्करोति, परोपकरणाय च प्रेरयति। इदन्तु पूर्वमेवोक्त यद्धर्म. जीवने राष्ट्रे च परमावश्यक:। यदि धर्मो न भवेत्तर्हि मानवसमाज: प्रतिदेशश्चोच्छृङ्खल: स्यात्, मर्त्यलोकमर्यादा नश्येत। प्रजा राजा च स्वेच्छाचारिणौ भूत्वा परस्परमेकैकं नश्येताम्। पुत्री, भगिनी, मातान्यनारीणाञ्च पूज्यत्वं मा यत्वं दूरीभवेदन्यच्च विषयकातर: कामुक: मनुष्य: तेष्वपि क्वाचारान्कर्तुं प्रवर्तेत। कामक्रोधलोभादीनामत्यन्ता वृद्धि: स्याद्यानननुचरन्त: मनुष्या: राष्ट्राणि पतितानि नष्टानि च स्यु.। अनेन स्पष्टमेव प्रतीयते यद्धर्मेण स्थितिर्जायते मानवजाते:। पुरा ये प्राचीना मनुष्या राजान: असुराश्च धर्मबन्धं भित्त्वा स्वेच्छाचारिण सन्त: स्वार्थनिष्ठा आसंस्तेषां विनाश: कृत: ईश्वरशक्त्या। यदा रावण: धर्मबन्धमुज्झित्वात्यन्तस्वार्थनिष्ठ: परानगणयन्सञ्जात.। जनकनन्दिनी, अखिलभुवनस्याधिष्ठात्री विश्वजननी सीता परस्त्रीत्वेन हृता (तेन), मुनिपरम्परा विनाशिता, अन्यान्विनाश्य स्वदेहरक्षणतत्पर एव बभूव। तदैव तस्य विनाश: भगवता श्रीरामेण कृत:। अत एव हनुमतोक्तम्—

> यद्यधर्मो न बलवान्, स्यादयं राक्षसेश्वर:।
> स्यादय सुरलोकस्य, सशक्रस्यापि रक्षता॥

अधर्मस्य फलं सर्वदैव विनाशक भवति। अस्मादेव द्वितीये प्रसङ्गे मारुतिना रावण प्रोक्त:—

> प्राप्तं धर्मफल तावत्, भवता नात्र संशय:।
> फलमस्याप्यधर्मस्य, क्षिप्रमेव प्रपत्स्यते॥ इत्यादि

मानवोन्नत्यै राष्ट्रोन्नयनाय च धर्म आवश्यको भवति परत्र साधनाय च। यदि धर्मो जीवने न स्यात्तदा मर्त्य परतन्त्र: उच्छृङ्खलश्च स्यात्, सदाचारता, चरित्रता परस्परसहायता न तिष्ठेत्, मन बुद्धिश्च विपरीते स्यातां याभ्यां स्थिति: मानवजीवनस्य। नीतिरप्यावश्यिकी, यत तया विहीन: जन: न्याय विस्मृत्यान्यार्थमजानन् धर्माचरणे राष्ट्रोन्नायने चासमर्थ: स्यात्। धर्म: नीतिश्चैते द्वे एव परस्परसाहाय्यमपेक्षमाणे जीवनस्य प्रत्येकराष्ट्रस्य च सुव्यवस्थामुपदिशत:। अस्मादेव राष्ट्रोन्नत्यै नीतिधर्मौ परमावश्यकौ। यदि राष्ट्रे धर्मनियन्त्रिता राजनीति: न भवेत्तदा समाजव्यवस्था, प्रजा सुस्थितिश्च न स्यात्। अत एव तौ द्वावेवाभिन्नेऽङ्गे स्त: (नीति धर्मश्च) मानवजीवनस्य प्रत्येकराष्ट्रस्य चेति शम्।

# "भारतीयः साम्यवादः"

(श्रीसत्यनारायणदीक्षितः, सीकर)

यद्यपि वादानां विवादो नास्ति नवीनः, सर्वेष्वपि क्षेत्रेषु वाद-परम्परा सर्वदैव आसीत्, भारतेऽपि प्राप्त-प्रसारा। परमाधुनिके काले जीवने व्यवहारे च नवीन-तया 'धृतशरीरा प्रतिदिनं वर्धमाना चैषा मध्येलोक प्रभावकरी प्रभवतीति नाविदितमन्ताराष्ट्रियवातावरण-संपर्कजुषां विदुषां पुंसाञ्च।

अय हि युगः कथमर्थप्रभावेण प्रभावित इति सहज-मवगम्यते भावियुद्धविभीषिकाकल्पनातः। देशा कथं बकवत्-दलबद्धाः सन्ति, अपरंच देशं ग्राहा इव ग्रहीतुं सन्ति साग्रहाः। वर्तमाने च साम्राज्यवाद-साम्यवादयो-रेव धारा वहति द्यावापृथिव्योः। तत्र च साम्यवादः कथं कदा कुतो जन्म लेभे इति नात्र प्रकृतम्। परं साम्यवाद शब्देनाद्यतनाः किमभिप्रयन्ति तत्तु मार्क्सप्रवर्तितं मतमेव। नेद विदंति ते ततोऽपि पूर्वतमं मतं, यत् भारते सहस्राब्दीतोऽपि प्रसृतम्।

भारतीयः साम्यवादो न खलु केवलामर्थव्यवस्था-मुद्दिश्य प्रादुरभूत् जीवने यत् यदेव सारभूतमावश्यकं, तस्मिन्नेव विषये विद्यते भारतीयसाम्यवादस्य प्रभूतः प्रभावः। अन्नवस्त्रादिकं प्रमुखीकृत्य क्रियमाण कोला-हलस्तु तदैवात्र भारतीयसाम्यवादे शान्तिमगच्छत्, यदा वैदिके-ब्राह्मणे-औपनिषदिके च प्रभावे साम्यस्य अपरिग्रहस्य बहुभिःप्रकारैः समुद्घोषः कृतो दृश्यते, अपि च जीवने समाचरितोऽपि समवलोक्यते "समं सर्वेषु भूतेषु—विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि" इत्यादयोऽभियुक्तोक्ताः केचनांशा एव प्रमाणम्।

यादृक्साम्यवादायास्माक मध्ययुगीनाः नेतारः लोककर्मणि प्रवृत्ता तेषां स्वरूपानुरूप मतं वयं पारयामः साक्षात्कर्तुं कवीरनानकप्रभृतीनां निर्गुणवादिनां वाणीषु। 'त्यागाय संभृतार्थानाम्' इत्यतश्च कि व्यज्यते। कि वा ध्वन्यते "वसुधैव कुटुम्बकम्" इत्यादर्शवाक्यात्। अद्यतना मार्क्समतावलंबिनस्तु कियन्मात्रायां सकीर्णाः, सकुचितवृत्तय. इति दलगतेभ्य एव दीयमानेन प्रश्रयेण बुध्यते।

दैन्य-दारिद्र्य-कार्याभाव-भेदभावादयः समस्याः "आवश्यकता आविष्कारजननी'वत् कमपि नवीनं कार्यक्रमं सामाजिकीं व्यवस्थां प्रवर्तयितुं परिवर्तितुं च प्रत्नं समुत्सुका जनयन्ति विविधान् वादान्। जातेषु च विविधेषु वादेषु कृषक-श्रमिकहिताधायकत्वात् सर्वत्र तदाधिक्याच्च अनायासमेव प्रसृतोऽयं तथाकथित-साम्यवादः। परमत्र यावन्ति स्खलितानि त्रुटयोऽपरिमेयाः असंख्याः दोषाः, विभिन्नाः विकाराश्च दृष्टिपथ-मागच्छन्ति, न तावन्ति साधनानि सुखसुविधादीनाम्। भारतीयपारतन्त्र्येण प्रचलितस्य पाश्चात्यशिक्षापद्धति-पवनस्य प्रभावेण तज्ज्ञानतद्रागरंजिताः पश्चिमागतं मार्क्समतं लाभप्रदमभिसन्धाय तत्रैव मुमुहुः, तस्मै एव च स्पृहयाञ्चक्रुः। आर्थिकसिद्धान्तस्थापनायापि अस्माकं दृष्टिर्द्रुतमेव ततो धावति। समाजनिर्माणचर्चायामपि तदीयांश एव ध्येयतां लभते। अतः पश्चिमीयसमाज-वादाभिरुचिस्सिद्धयति साधीयसी स्वाभाविकी च। रूसस्य चित्रमेव चित्ताह्लादकम् भारतीयसाम्यवादमुपेक्ष-माणानां कृते। तत्रत्यवादः केवल पुस्तक-प्रचार-साहित्य-

प्रचारादिभ्योऽवगम्यते। भारतीयस्तु जीवनं सांगोपांगं स्पृशति आचरणीयोऽपि। अस्मिन् हि राजनीति-समाज-नीति-धर्मनीति-अध्यात्मप्रभृतीनां समेषामपि जीवनायोपयोगिविषयाणां समावेशः। एषा जीवनस्य साधना वरीवर्त्ति। यस्या महत्त्वमाचरणे महीयते। भारतीय-साम्यवादे मनोवचनकर्मणां व्यष्टिसमष्टिरूपाणामेक-रूपताविद्यते, यदा पाश्चात्यसाम्यवादे तदत्यन्ताभाव। एकस्य कस्यचिद् मार्क्समतानुयायिनो जीवनं कृषक-श्रमिक-जीवनानुपातेन भिन्नं कियत् विलासितामयं स्वार्थपूर्णं वर्तते—न तथा भारतीयसाम्यवादिनः। तस्य तु जीवनं क्रियायामुपदेशे सात्त्विकं भद्रोचितमेव भाति।

भारतीयसाम्यवादो जनतायाः सर्वानपि वर्गान् उच्चमध्यनिम्नकोटिकान् स्नेहसिक्तदृशा पश्यति यदा वर्तमानः साम्यवादः आद्दतानुच्चानवमानयति–मध्यानुपेक्षते। अतएव भारतीयसाम्यवादविषये एषोक्तिश्चारितार्थ्यमेति याथातथ्येन– 'It provides a common good between all groups" अर्थादयं सर्वेषु वर्गेषु स्नेहसूत्रं रचयति।

भारतीयसाम्यवादः तथाविधः सूर्यः, येन समेऽपि समानं प्रकाशं भजन्ति। तादृग्वाऽऽकाशं, यदा श्रित्य समेऽपि समानं सुखं शेरते। तादृशश्च धर्मः, यं समेऽपि साम्येन स्वायत्तीकुर्वन्ति। इदं जीवनस्य परिपूर्णं तत्त्वज्ञानम्।

अद्यतनः साम्यवादः पूर्वं क्रान्तये अभावाभियोगादीनां चरमां कोटिमुपस्थापयति, काल्पनिकं सुख स्वप्नमयं च भविष्यत् प्रतीक्षते। परं भारतीये तु आशुफलदायित्वं विद्यते। एकस्य योजनायां संघटने कालः प्रतीक्ष्यो भविष्यति। अपरस्य कृते तु कालः स्वयमुपतिष्ठते कृतांजलिः।

पश्चिमीयसाम्यवादस्याधारो न बद्धमूलः, न च वैज्ञानिकः कालनिरपेक्षश्च। केवलं कालविशेषस्याविष्कारः, उत वा आपद्धर्मः प्रतिक्रियात्मकश्च। तस्य साफल्यार्थं दैन्य-दारिद्र्य-दमन-शोषणानां भयावहरूपमावश्यकं, येन विना तत्प्रसरणमसंभवम्। अयं च नितरामर्थोपनिबंधनः, यदा हि भारतीयसाम्यवादे धर्मसमाजनीतिप्रभृतीनामपि प्रमुखं स्थानम्। सम्पूर्णं मानवीयमपि तु भौतिकाध्यात्मिकं जड़चेतनात्मकमपि दृष्टिकोणमात्मसात्कृत्य चलति। समन्वयात्मकश्च आधारः।

एकत्र कस्मिन्नपि मूल्ये, का कथा जीवन-हिंसादीनाम्, साध्यप्राप्तिः। अपरत्र च नैतिकैः, सत्यशीलान्वितैराधारैः साधनैश्च साध्यप्राप्तिरिति महदान्तर्यं स्वत एवोद्भूतम्।

पाश्चात्यवादे समस्या विकृतमुखा एव दृश्यन्ते–भारतीये तु तासां समाधानमपि व्यष्ट्या समष्टिसमुन्नतिरत्र प्रधानम्। तत्र व्यष्टि विनाश्यापि समष्टि-प्रभावः गरीयान्। एतदपि कथयितुं शक्नुमः यत् पाश्चात्यसाम्यस्यादिमः कालः भारतीयस्यान्तिमः।

भारतीयसाम्यवादस्य प्रमुखं लक्ष्यमात्मदर्शनम्, आत्मपरिष्कारश्च। तेनैव पथा समाजमपि व्यक्तिस्समुन्नेतुं प्रभवति–पाश्चात्यपथा तु दोषान्वितोऽपि सामाजिक यदि समाजहिताय किंचित्करोति तदा स पूज्यः। दोषान्वितेन कथं लोकहित साध्यते-इति ते एव पाश्चात्यानुगामिनः प्रष्टव्याः।

भारतीये साम्यवादे व्यक्तेः स्वातन्त्र्यं सर्वविधं सुरक्षितं, पाश्चात्ये तु तस्य कंठग्रहत्वं, कुठाराघातत्वञ्च।

अतः सर्वात्मना सर्वदृष्ट्या भारतीयः साम्यवादः आगतानागतानां जीवनानां समुद्धर्ता समुपकारकः।

# ★ अध्यात्मशिक्षयैव विश्वशांतिः सम्भाव्यते ! ★

( विद्याभूषण' पण्डितश्रीगणेशरामशर्मा, साहित्यरत्नम्, ज्यौतिषोपाध्यायः, संस्कृत-हिन्दी-शिक्षकः,
श्रीराजेन्द्र-इण्टरमिजेएट-कॉलेज, झालावाड़ ( राजस्थानम् )

[ पूर्व प्रक्रान्तः ]

वयं तावदत्र सर्वादौ शिक्षाक्षेत्र एव किलाध्यात्मोपदेशप्रयोगं कर्तुमभिलषामः । वयमेतदपि चिन्तयामो यद्यत्वे देशेऽस्माक या हि विद्यार्थिनामनुशासनहीनता राजसेवकानां, व्यापारिणां, सर्वसाधारणानां च भ्रष्टाचारपरायणता, साहित्यं सृजतां, संगीतशिल्पकला-कौशलमावहतामपि लोकानां जीविकार्जने महानेवायासः प्रयासः, शिक्षितानामपि चासन्तोषः, सर्वसाधारणस्य च वृत्त्युपरोधात्त्रासो, हाहाकारश्चेति सर्वाण्यनर्थपरम्पराध्यात्मभावस्याध्यात्मिकशिक्षणस्याध्यात्मचिंतनस्याध्यात्मदृष्टेश्चाभावत एव । यद्यपि देशोऽयमधुनास्माकं पराधीनपाशान्मुक्तः सर्वतन्त्रस्वतन्त्रो, मन्त्रिमण्डलं लोकहिताय सततं प्रयत्नशीलं, कोटिशो रूप्यकाणां द्रव्यं प्रजानां कल्याणाय योजनापूर्वकमुपयुज्यमानमास्ते, वाक्कीला द्राक्तरा वणिजोऽध्यापका श्रमजीविनः प्रायः सर्वेऽपि च लोकाः स्वपूर्वजापेक्षयाधिकतर भौतिकोपकरणसम्पन्नाः किमप्युच्चस्तरीयं जीवनं ससुखं जीवन्तोऽपि सर्वसाधारणस्यातिविपन्नां कष्टां दशा नानुचिन्तयन्तीत्यत्रापि चाध्यात्मवृत्तेः शिवसङ्कल्पस्य चानुपपत्तिरेव मुख्य निदानम् । अतोऽत्र देशे ह्यध्यात्मशिक्षाप्रवर्तनमतीवावश्यकमिति विश्वशांतिस्थापनायैषः प्रथमः कल्पः ।

परोक्षसत्तायां विश्वासः, ईश्वरस्यास्तित्वे दृढास्था, जीवानां कर्मफलानुभुक्तिः, आस्तिक्यं, धर्मभावना, परदुःखकातरत्वं, सदाचारचारित्र्यादिगुणविशिष्टेषु तपस्त्यागतितिक्षासत्त्वसम्पन्नेषु गुरुजनेषु श्रद्धा, भद्रभावभव्येषु महाजनेषु भक्तिः, न्यायनियमेषु चास्था निष्ठेत्येवंविधाभिर्मनोवृत्तिभिरेव हि मनुष्यो लोकसंरक्षणक्षमो, मर्यादावादी, अनुशासनमनुरुन्धानो दैवी सम्पदमनुभवन् शिक्षितो दीक्षितः सुप्रतिष्ठितो नागरिको भवतीत्यत्र न कस्यापि विचारशीलस्य विसंवाद स्यात् ।

अथेश्वरसत्ता जीवानामुद्भवे पालने लये च प्रसह्य प्रभवन्ती महतीनां शक्तीनामपि नियमनेऽव्याहतं सक्षमा भवतीत्येव धारणया मनुष्यो नूनमधर्माद्बिभेति, अन्यायाज्जुगुप्सते, पाखण्डं दम्भमौद्धत्यं च परिहरति, नित्यानित्यविवेकं श्रयति, नश्वरेषु पदार्थेषु नास्थां दृढयति, जगद्विनश्वर, जीवन क्षणभगुरं च मन्वानोऽप्यथात्मतत्त्वमविनाशि शाश्वत सत्यं शिव सुन्दरमित्यनुभवति, स्वार्थनिरपेक्षोऽसौ सद्वस्तुसंग्रहपरोऽसत्परित्यजति आस्तिक्यप्रवणो जनो गुरूपदेशान् बहु मन्यते, श्रद्धाढ्यो धैर्यक्षमाशीलसतोषादिसात्त्विकीमध्यात्मसम्पद दधानो दयादाक्षिण्यादिसद्गुणविकाशायात्मानं नियुङ्क्ते, योगक्षेमं चाभिकांक्षन् भगवति परमेश्वरे सर्वशक्तिमत्त्वं स्वीकुर्वाणः संसारेऽस्मिन् स्वय सुख जीवत्यन्याञ्जीवांश्च सुखिनः कामयते । अयमेव हि मूलभूतः सिद्धान्तो मानवताया विकाशस्य, तत्संरक्षणस्य चोपकरणेषु प्रारम्भिक तत्त्वमास्ते । इत्थंविधां विचारधारामाश्रितो जनो भारतवर्षदेशमस्माकं जगद्गुरुं प्रमाणयति । अतो देशस्यान्तः स्थितिं प्रशान्तां तदनु विश्वशांतिं स्थापयितुमध्यात्मशिक्षोपदेश परमावश्यक इति निश्चितं मतं नः ॥१॥

अथ विश्वशांतये विशेषतो भारतवर्षस्य स्वतन्त्रराष्ट्रस्यास्माकमाभ्यन्तरीणस्थितेरनुकूला खल्वाध्यात्मिकी

शिक्षा, तत्पाठनपद्धतिरुपदेशप्रवचनप्रणाली वा कीदृशी भवितुमर्हतीति प्रस्तुते प्रसङ्गे किमप्युच्यतेऽधस्तात्:—

१—सर्वादौ समस्तेऽपि राष्ट्रे सर्वेष्वपि च विश्वविद्यालयेषु, माध्यमिकविद्यालयेषु, प्रवेशिकाशालासु, सर्वविधासु शालास्वन्यास्वपि च प्रारम्भिकपाठशालासु च दैनन्दिनी प्रार्थनाप्रणाली परमात्मनः स्तुतिस्तोत्ररूपा, चरित्रनिर्माणोपयुक्ताध्यात्मोपदेशगर्भा, मनुष्ये देवत्वगुणप्रतिष्ठापिका प्रवर्तताम् !

२—सा चाध्यात्मशिक्षा वेदोपनिषत्पुराणस्मृतिकाव्यस्तोत्रेभ्यो हिन्दीकाव्यग्रन्थेभ्योऽपि वा प्रादेशिकभाषासाहित्यग्रन्थेभ्यश्चाधुनातनदेशकालोचिताः काश्चिदुपदेशसूक्तीः संगृह्य नवीनं कमपि पाठ्यक्रमं परिकल्प्य प्राचीनं प्रचलितं वा प्रार्थनासाहित्यग्रन्थजातं किंचित् संशोध्य, परिवर्त्य, परिवर्ध्य च सचित्रैर्नवमुद्रितसंस्करणैर्मनोहरैः पुस्तकैः प्रारब्धुं युज्यते ।

३—अत्र ध्यात्मशिक्षोपयोगिपाठ्यक्रमनिर्माणे न स्यादेव कोऽपि भाषासम्बन्धी पक्षपात. प्रतिबन्धो दुराग्रहो वा । यतो ह्याध्यात्मोपदेशाः सार्वभौमसिद्धान्तनिर्णीताः, महात्मभिः प्रतिपादिताः, सर्वभाषासाहित्ये महोज्ज्वलरत्नरूपा भवन्ति । एवं सति भाषावादस्य नास्त्येवात्र कोऽप्यवकाशलेशोऽपि, तथापि प्रकरणेऽत्रोपयुक्ता सामग्री संस्कृतसाहित्यभाण्डाराद्हिन्दीसाहित्यकोशाच्च यदि संगृह्येत चेत्तदानायासाल्लक्ष्यभेदः सम्भवति । भूमण्डलेऽस्मिन् संस्कृतसाहित्ये हिन्दीकाव्येषु च यथाध्यात्मतत्त्वोपदेशाः किलान्तर्निहिता विद्यन्ते न तादृशा. क्वाप्यन्यत्र सुलभाः स्युरिति विवादातीतं तथ्यम् । केचिन्नवशिक्षिताः पाश्चात्याचारविचारप्रभाविता. प्रजातन्त्रवादिनो, धर्मसम्प्रदायनिरपेक्षं शासनविधानं समभिलपन्त , संस्कृतहिन्दीभाषयोर्माध्यमाङ्गीकारे कदाचिद्विप्रतिपद्येरन्निति सम्भाव्यते परन्त्वेवंविधा. त एव केवलं नव्या नेतारो ये राजनीतिमात्रं लोकजीवनस्य मूलाधारं मन्यमाना', भारतीयाध्यात्मज्ञानशून्या . भौतिकसभ्यतानुयायिन , परदेशीयत्वमेवान्ताराश्रियत्वं भजन्तः स्यु' । इत्थंविधानध्यात्मभावरहितान् प्रति केवलमेतावदेव निवेदनं यद्धि श्रीमन्तो नवसभ्यताभिमानिनो भारतवर्षस्य जगद्गुरुत्वं कामयन्ते चेद्रक्षणं रक्षितुं तदा हिन्दीसंस्कृतसाहित्यं विना नान्या गतिः सार्वजनीनशांतिस्थापनोचितायाध्यात्मोपदेशाय । अत्रोदाहरणरूपा केचित् सदुपदेशा अवतार्यन्ते । तथाहि—

अ—"न त्वहं कामये राज्यं, न स्वर्गं नापुनर्भवम् ।
कामये दुःखतप्तानां प्राणिनामार्तिनाशनम् ॥"

आ—"आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥"

इ—"मातृदेवो भव। पितृदेवो भव॥ आचार्यदेवो भव॥

ई—"तन्मे मनः शिवसङ्कल्पमस्तु ।"

उ—"सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥"

ऊ—"सत्यमेव विजयते नानृतम् ।"

ऋ—"सह नाववतु सह नौ भुनक्तु सहवीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥"

इत्याद्याः शतशोऽध्यात्मोपदेशा अवतारयितुं शक्यन्ते ये पीडितां, कदर्थितां, विडम्बितां, दयनीयां, त्रस्तां, भौतिकवादभयाक्रान्तां, क्रन्दन्तीं, कान्दिशीकां रोरुद्यमानां च मानवतां सान्त्वयितुं सुधाकल्पा दिव्यौषधिरसाः परिणमेयुः । नाहं वेद्म्यंशतोऽप्यत्र क्व नु कुत्र किरूपो वा सम्प्रदायाग्रहगन्धो वर्तते वर्णिकारूपेषूपरिप्रदत्तेष्वध्यात्मशिक्षोपदेशवाक्येषु ?

कामं भवतु स्वतन्त्रं राष्ट्रमेतद्भारतं वर्षम् प्रवर्ततामखण्डप्रभुतासम्पन्नं स्वायत्तशासन, विराजतां स्वराज्यमत्र देशे यावच्चन्द्रदिवाकरम् स्वाधीनं चेष्टन्तां किमन्यस्मन्नव्यनेतारो देशमिममुन्नेतुम्, जोघुष्यतामुन्नतिर्देशस्यास्य भौतिकी, विज्ञानाविष्कारकलाकौशल चरमां कोटीमाटीकताम्, अर्थशास्त्रसिद्धयोऽत्र पदे पदे सुलभा जायन्तां, विजयन्तां चान्ताराष्ट्रियराजनीतिस्वयम्बररङ्गमञ्चे भारतीया लोकनायकाः सर्वसम्पल्लक्ष्मीम्, शस्त्रास्त्राणुशक्तिप्रयोगपाटवाञ्जीयन्तां दिग्दिगन्ता भारतीयैः शूरवीरैर्नरकेशरिभि, परन्तु यावद्दूर विश्वशांतिस्थापनायाः सम्बन्धस्तावत् संस्कृतभाषासाहित्यं विहायान्यन्नास्तेवोपायान्तरमितीदमित्थं ध्रुवं सत्यमिति प्रसभ ब्रूमो वयमत्र प्रसङ्गोपात्तम्। भारतीयैर्महर्षिभिर्मुनिप्रवरैर्महात्मभिर्महापुरुषैर्महामनोभिश्च सद्भिः संसारस्य हिताय ये हि किलाध्यात्मोपदेशाः कृपया व्यतीर्यन्त ते सर्वे सुरभारत्याः संस्कृतवाण्याः साहित्ये सन्निहिताः सन्ति। तदुपयोगाय संस्कृतज्ञानमतीवावश्यकं भारतीयानां विशेषतो नेतृप्रवराणाम्! अस्तु।

राष्ट्रभाषाया हिन्द्याः साहित्यादपि केचित् स्तुतिस्तोत्रप्रार्थनारूपा अध्यात्मोपदेशशिक्षोचिताः दिव्या भव्याश्च भद्रा भणितयो लभ्यन्ते। ततोऽपि संगृह्याध्यात्मशिक्षापाठ्यक्रमो विधातुमुचितः। भक्तशिरोमणेः कविकुलकलाधरस्य महात्मनो गोस्वामिनः श्रीतुलसीदासस्य रामचरितमानसे यथा काश्चिद्भक्तिरसमधुराः प्रार्थना वयं पश्यामस्ताः सर्वा अन्याश्च तथाविधा हिन्दीकवीनां रचनाभ्यः संगृहीतुमुचिता अध्यात्मशिक्षापाठ्यक्रमे। दृश्यताम्—

अ—"नमामि भक्तवत्सलं, कृपालुशीलकोमलम्।
भजामि ते पदाम्बुजमकामिनां स्वधामदम्॥"

इतीयं सुविख्याता स्तुतिः—

आ—"जय राम सदा सुखधाम हरे।
रघुनायक सायक चापधरे॥"

इ—"जय राम रमारमन शमनं,
भवतापभयाकुल पाहि जनम्॥"

इत्याद्याः शतशोऽध्यात्मोन्नतिकारकाः स्तुतयो वर्तन्ते या अत्र कर्मण्यन्तर्ग्रहीतव्या भवन्ति।

न केवलं संस्कृतात् हिन्दीभाषाया एव किन्तु स्वदेशस्य सर्वप्रान्तीयभाषावाङ्मयस्था सदुपयोग्याध्यात्मसाहित्यसामग्री पाठ्यक्रमेऽत्राध्यात्मिकेऽन्तर्ग्रहणमर्हति नूनम्। सर्वोदयभावनया महाराष्ट्रीवङ्गीयभारतीगुर्जरीत्यादि सर्वप्रान्तभाषाभ्यो योग्याः सामग्रीर्नीत्वा शोभनः पाठ्यक्रम आध्यात्मिकशिक्षाकर्मण्युपयोगमर्हति। पर्यन्ते वैदेशिकभाषाभ्योऽपि च "यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वेति" सर्व संगृह्याखिलविश्वप्रजानां कल्याणायाध्यात्मोपदेशाय पाठ्यक्रमो निर्मातुं युज्यते।

स्वीकृते हि खल्वध्यात्मोपदेशशिक्षादानेन विश्वशांतिस्थापनाया मूलसिद्धान्ते, पाठ्यक्रमयोजनायां कृतायां सत्यां, सर्वदेशभाषाभ्यः पाठ्यक्रमोपयुक्ताः प्रार्थनाः, स्तुतयः, स्तोत्राणि, सदुपदेशाः, नीतिन्यायनिर्देशकानि वाक्यानि, सदाचारास्तिक्यचरित्रनिर्माणसक्षमा सूक्तीरन्यच्च यदुपयोगि तत्तत्सर्व सुखं 'सत्यं शिवं सुन्दरम्' सगृह्य-सगृह्य, सुचारु सम्पाद्य, नवसंस्करणानि मनोहराणि सम्मुद्रय च प्रकाशनीयानि भवन्ति।

यदि च विश्वशांतये, 'बहुजनहिताय, बहुजनलाभाय', लोकसेवायाः शुद्धभावेन, स्वदेशस्य भारतवर्षराष्ट्रस्याधिकाभ्युदयकामेन, सर्वविधप्रजानां समाजहितकाम्यया, निखिलजनमङ्गलेच्छया, विश्वबन्धुत्व-

प्रतिष्ठापननिष्ठया, सत्येन, श्रद्धया, प्रीत्या, वात्सल्येन, निर्मलान्तःकरणवृत्त्या, भूतदयाधर्मानुरोधाद्वा वयं भारतीया लब्ध्वानुत्तमं मानवं जन्मात्र किमपि शोभनं कर्म कर्तुमभिलषामश्चेन्महत्त्वाकांक्षामन्वात्मविकाशश्रियै, तदा तु हित्वा सर्वान् वृथावादविवादान् दुस्तर्कान् वा दूरेऽपास्य 'हंसः क्षीरमिवाम्भसः !' इति सर्वतः सारभूतं सत्त्वमावर्ज्य, फल्गून् क्षुद्रान् दोषदर्शनावेशानपहायादौ स्वदेशबन्धुभ्यो—विशेषतस्तरुणेभ्यो ह्यध्यात्मशिक्षोपदेशान् शिक्षयाम, तदनु समस्तविश्वमनुजेभ्यो विश्वशांतिस्थापनोपदेशान् दातुं वयं सक्षमा भूयास्म ! अतो विरुद्धं केवलं पशुप्रायं भौतिकभोगवादश्रयादात्मप्रतारणायैव बद्धोद्यमा अज्ञानान्धकारतमिस्रायामेव मोमुह्यमाना वयं छलनां, लाञ्छनामनीतिमन्यायं, चौर्यं, लुण्टाकत्वं, पापपरायणत्वमधमत्वं, भीरुत्वं, पामरत्वमेवान्तर्हृदि स्थिरीकृत्य विज्ञानशक्त्युन्मदानामन्यान्यराष्ट्राणां राक्षसप्रायाः प्रजाजना इव मात्स्यन्यायमपकौशलाल्लोकनाशायैव वर्गसङ्घर्षमाचरन्तो जीवितुमुत्सहेमहि, तदा तु विरमत्वेषा कथाध्यात्मोपदेशस्यात्रैवेत्यलं सुज्ञेषु बहुना ! अथवा धन्या वयं स्वतन्त्राः स्वच्छन्दा भारतीया येषां पक्षे—

"चित्रं वटतरोर्मूले, शिष्या वृद्धा, गुरुर्युवा ।
गुरोस्तु मौनं व्याख्यानं, शिष्याः संछिन्नसंशयाः !!
इत्युक्तिरियं सर्वांशतो घटते !

---

[३ दिसम्बरदिवसे राष्ट्रपतेः डा० राजेन्द्रप्रसादस्य जन्मदिनोपलक्ष्ये भारत्याः शुभकामनाभिः सह]

# ★ श्रीराजेन्द्रो विजयताम् ★

(ले० श्रीसत्यव्रतशास्त्री, प्राध्यापकः, हन्सराजकालेज, जयपुर)



देशस्याङ्गलवागुरासु पतितस्योन्मोचनार्थं पुरा,
संग्रामे ह्यतिभीषणे हुतवतः सर्वं प्रियं पार्थिवम् ।
दिव्यं यस्य यशोऽनिशं प्रसरति त्यागात्मनः स व्रती,
'राजेन्द्रे'ति सुविश्रुतो विजयतां सौम्याकृतिर्धार्मिकः ॥१॥
यश्चार्वीः परिषेवते प्रयतधीश्चर्याः सदा लौकिकी-
र्यस्य स्वं करणं परोपकरणं स्नेहश्च लोकोत्तरः ।
अर्थे यः परमामगाद्विमुखतां सोऽक्लिष्टकर्मा कृती,
'राजेन्द्रे'ति सुविश्रुतो विजयतां सौम्याकृतिर्धार्मिकः ॥२॥
देवानां महनीयतामुपगतस्याप्यन्तिकाल्लब्धवान्,
वात्सल्यं युगपूरुषस्य सुतरां श्रीगान्धिनो यो व्रती ।
यो लोके प्रथतेतमाञ्च यशसा सोऽकृष्णकर्मा कृती,
'राजेन्द्रे'ति सुविश्रुतो विजयतां सौम्याकृतिर्धार्मिकः ॥३॥
कृषकसखः श्रमिसेवी पतिताधनचर्मकारसहकारी ।
हरिजनविधवोद्धारी जयति स चेतोहारी गुणौघधारी॥४॥

# कालिदासाभिमतं राजतन्त्रम्

(प्रेमशंकरमिश्रः अध्यापक संस्कृतपाठशाला भुकेही, जि० सतना [वि०प्र०])

"कविः युगगायकनाम्ना स्मर्यते, तदुक्तिषु धार्मिक-सामाजिक-राजनैतिकविचाराणां छाया दृश्यते।" इति सर्वैः स्वीकृता सिद्धान्तसरणिः। इदमपि तथ्यमपह्नोतुं न शक्यते यत् कविः स्वीयसमुन्नतविचारद्वारा युगे नवीनमार्गं ददाति। तदीयविचाराणां परिज्ञानं तत्साहित्यस्वाध्यायतो जायते।

प्रस्तुते निबन्धे महाकविः कीदृशं शासनतन्त्रं स्वीकरोति स्म इति प्रतिपिपित्सितं विद्यते। राजपदस्य निर्वचनं "राजते शोभते" इति दृश्यते। राष्ट्रस्य शौर्य्य-तेजःप्रभृतीनामेकत्र समवायो भवति स्म इति वक्तुं शक्यते। अतएव "महती देवता ह्येषा राजरूपेण तिष्ठति।" इत्युद्घोषः कृतः आसीत्। प्रजासंमतः, धर्मभावसमन्वित एव "राजा" इति मन्यते स्म।

धार्मिकपरम्पराणां पोषणं राज्ञः परमो धर्म इति महाकविना अपि रघुवंशे प्रतिपादितम् यथा—

"रेखामात्रमपि क्षुण्णादा मनोर्वर्त्मनः परम्।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तय.।"

राज्ञः व्यक्तिगतं जीवनमतीव शुद्धं भवति इति प्रतिपादयति कविः पद्ये अस्मिन्—

"जुगोपात्मानमत्रस्तो भेजे धर्ममनातुर।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत्।"

"स्थित्यै दण्डयतो दण्ड्यान् परिणेतुः प्रसूतये।
अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः।"

तदानीं शासनस्य मूलस्रोतो जनता एव आसीदिति तत्कालीनेतिवृत्तविलोकनेन निश्चीयते। शासनं स्वाम्यायत्तं मन्त्रिमण्डलायत्तम्, गणद्वारा चालितमिति त्रिधा श्रूयते। कालक्रमेण मदमत्तेषु राजसु मन्त्रिमण्डलेन कार्यं चाल्यते स्म, किन्तु कतिपयकालानन्तरं मन्त्रिणामुच्छृङ्खलशासनेन जनता संत्रस्ता इति राज-प्रतिनिधि-प्रजासमतगण-सहयोगेन राज्यव्यवस्थापनं भवति स्म। गणतन्त्रे यादृशं स्वातन्त्र्यं जनतायां भवति तादृशी स्थिति रामस्य काले लभ्यते। युवराजचयने, राजपरिवारचारित्र्यविषये च उन्मुक्तकण्ठं निगद्यते स्म कालिदास प्रजानां शिक्षणव्यवस्थायाः नैतिकतायाः आध्यात्मिकतायाश्च समुन्नतेर्भारं राज्यस्यैव प्रतिपादयति यथा—

"प्रजानां विनयाधानाद्रक्षणात् भरणादपि।
स पिता पितरस्तासां केवल जन्महेतवः॥"

सेना विनीता, शौर्य्यपूर्णा आसीत् परकीय-राज्यलुंठनं कदापि न प्रोत्साह्यते स्म। अन्यदेशीयव्यवहारे तेषामुपरि स्वकीयविचारावलिर्बलान्नारोप्यते स्म। तत्तद्राष्ट्रीयसंस्कृत्यनुसारं तत्प्रतिनिधिद्वारा शासनं भवेदित्येव तदानीन्तनदिग्विजयस्याभिप्रायो भवति स्म। यथा—

"आपादपद्मप्रणताः कलमा इव ते रघुम्।
फलैः संवर्धयामासुरुत्खातप्रतिरोपिताः।" इति

"गृहीतप्रतिमुक्तस्य स धर्मविजयी नृपः।
श्रियं महेन्द्रनाथस्य जहार न तु मेदनीम्॥"

इति च पद्यं तदानीन्तनवैदेशिकनीतिप्रदर्शनं करोति।

न्यायनाटकं विरचय्य प्रतिपक्षिवर्गकृते दण्डप्रदानं न्यायप्रवृत्तिर्नासीत्। प्रजाकल्याणमेव दण्डनीतेरुद्देश्यमासीत् यथा—

"द्वेष्योऽपि संमतः शिष्टस्तस्यार्तस्य यथौषधम् ।
त्याज्यो दुष्टः प्रियोऽप्यासीदंगुलीवोरगक्षता ॥"

करादानं कोषवृद्धये न भवति स्म अपि तु प्रजावर्गहितायैव भवति स्म, यथा—

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥

एवं च प्रजा अपरिपीडयत् करग्रहणं तासां हितविधानं च करग्रहणस्योद्देश्यमासीत् यथा—

"प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥

एवं विचारे कृते आयातं भवति यत् कविः प्रजाहिताधायकत्वं नृपस्य सर्वोपरि मनुते, एतदेव कारणं विद्यते सः रघुविषये कथयति—

यथा प्रह्लादनाच्चन्द्रः, प्रतापात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरंजनात् ॥" इति

राज्ञ लोकप्रियत्वे सः युक्तदण्डतामपि मन्यते यथा—

स हि सर्वस्य लोकस्य युक्तदण्डतया मनः ।
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥"

इति । राजा स्वकीय–लोकहितकारकैः कर्मभिः आपामरं परिचितः भवति यथा—

"इक्षुच्छायनिषादिन्यस्तस्य गोप्तुर्गुणोदयम् ।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः ॥"

शिक्षणप्रभृतिव्यवस्था राज्यतः स्यादिति स्वीकुर्वन्नपि सः राज्यस्य हस्तक्षेपं शिक्षानीतौ न स्वीकुरुते । विद्यातपोवयोवृद्धा मुनय एव शिक्षाधिकारिण आसन् । तेषां समीपे दिलीपः, दुष्यन्तश्च आश्रमव्यवस्थाविघात परिहर्तुकामौ स्वल्पपरिच्छदौ गच्छतः । तत्र च ग्राम्यसामग्रीभिरेव वर्तयति ।

प्रजानां हितसाधन तदानीं नरेन्द्राणां परमो धर्मः इति स्वीक्रियते स्म । विनयादिगुणानामभावो हि राष्ट्रव्यवस्थोन्मूलनाय प्रभवति, अतएव प्रजासु विनयाधानमतीवावश्यक भवति स्म । रक्षायाः भरणस्य च भारं स्वय नरपतिरेव वहति स्म, एतदेव प्रतिपादयन् कविः कथयति—

प्रजानां विनयाधानाद्रक्षणाद् भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥

शाकुन्तले दुष्यन्तः घोषणां कारयति यत् प्रियजनवियुक्तानां जनानां रक्षकः दुष्यन्तः अस्ति । एतेन अपि ज्ञायते यत्प्रजानां संरक्षणस्य सर्वा अपि व्यवस्था राज्यतो भवति स्म ।

राज्ञः धर्मवृत्तित्वं, प्रजानां विनयपूर्णत्वम्, उभयोः सदाचारपूर्णत्वं च तदानीं भवति स्म । एतदेव कारणं वर्तते यत् ईति–भीति,–चौराग्निरोगभय,–दुराचारप्रभृतीनां तदानीं नाममात्रं नावलोक्यते स्म । दिलीपस्य कारागारे बन्दी न बभूव ।

एतावता विचारणेन एतदायातं भवति, कालिदासविचारे राजा देवांशसमन्वयरूपः संयत–मनोवृत्तिः दयालुः, वीरः, न्यायप्रियः, प्रजावत्सलः, धर्मरक्षकः भवति । सर्वोच्चसत्ता यद्यपि राजा एव भवति, किन्तु सः प्रजाविचाराणामवहेलनां कदापि नैव कुर्यात् । प्रजाप्रतिनिधिवर्गविचारग्रहणं सर्वेष्वपि कार्येषु कर्तव्यम् । प्रजाप्रतिनिधीनां चयनं कथं करोति स्म इति सकेतस्तु न प्राप्यते, किन्तु एतदवश्यं परिज्ञायते यत्–लोकप्रियराज्यगौरवं वहमाने सांप्रतिके युगे यादृशी त्रुटिपूर्णा चयनप्रणाली वर्त्तते तादृशी तदानीं नैव आसीत्, तथापि प्रजा अधिकस्वतन्त्रतया स्वीयं वाचिकस्वातन्त्र्यमुपभुङ्क्ते स्म । राज्ञः व्यक्तिगत

नवयुगसाहित्यम्

# मस्तिष्कम्

—सहसम्पादकः

डाक्टरप्राणजीवनः नगरस्य सुप्रतिष्ठितश्चिकित्सक आसीत्। सर्वैरन्यैश्चिकित्सकैः पराङ्मुखीकृता रोगिणस्तस्य चिकित्सया उल्लाघा भूत्वा गच्छन्ति स्म। डाक्टरमहाशयोऽधुना जीवनस्य संध्यामवलोकयन्नासीत्। वार्द्धक्यमागतम्। परं शल्यक्रियायामधुनाऽपि स भृशं प्रगल्भोऽभूत्। एकदा विचित्र एको रोगी डाक्टरस्य चिकित्सालये प्राप्तः। अस्य शिरसि प्रायो महती वेदना वर्त्ततेस्म। तेषु दिनेषु मानसी चिन्ताऽपि तस्य भूयसी अभवत्। पत्न्याः प्रत्येकं कृत्ये स प्रातिकूल्यं पश्यति स्म। यदि पत्नी मार्गे कमपि जनं पश्यति स्म, स इदमेव शङ्कते स्म यत्सा तस्मै स्निह्यति। एवं तस्य महती मानसी चिन्ता आसीत्।

डाक्टरेण निदानं कृतम्। विविधयन्त्रयोजनानन्तरं तेन निश्चितं यद्रोगिणो मस्तिष्के नैर्बल्यमागतमस्ति। तेन कथितं, भवान् मनश्चिकित्सालये कतिपयदिवसान् यावद्वसतु। भवतो मस्तिष्कं निर्बलं जातम्। श्वः अहं शल्यक्रियां कृत्वा शिरसि मस्तिष्कभागस्योपरि एकेन विशेषप्रकारकेण मर्द्दनेन (मालिश massage) मस्तिष्कस्य पुष्ट्यै प्रयत्नं विधास्यामि। आशासेऽनेन प्रयोगेण भवान् उल्लाघो भविष्यति।

रोगी यथाकथितं डाक्टरस्य चिकित्सालये निवासमकरोत्। द्वितीय एव दिने डाक्टरेण शल्यक्रियादिक विहितम्। प्राणजीवनेन सोऽयं नवीन एव प्रयोगः कृतोऽभूत्। एतस्य प्रयोगस्य साफल्ये सति जगतः सम्मुखे नवीना क्रान्तिः स्थापिता भविष्यतीत्यासीत्तस्यानुमानम्। अतएव शल्यक्रियायाः समये सोऽयं भविष्यतः कल्पनयाऽऽक्रान्त, सुभृशं प्रसन्न आतुरश्चाऽभूत्। भगवत्कृपया शल्यक्रिया शीघ्रं समाप्ता। रोगी स्वप्रकोष्ठे प्रेषितः।

अपरस्मिन् दिने यथैव डाक्टरमहाभागश्चिकित्सालये समाजगाम, शल्यचिकित्सालयं दृष्ट्वा सोऽयं सुमहानाश्चर्यचकितोऽतिष्ठत्। रोगिणस्तस्य मस्तिष्कं, यद्धि शल्यक्रियायाः समये बहिः निःसारितमासीत्, तत् सुरक्षौषधपात्र एव पतितमासीत्। आतुरतायामन्यमनस्कतायां च तस्य योजनं डाक्टरेण विस्मृतमासीत्।

---

चर्या अपि प्रजानां समालोचनापात्रमासीत्। इति वक्तुं शक्यते, यद् राज्ञां व्यक्तित्व समष्टौ लीनमासीत अधिकाराणां घोषणमन्तरा अपि सर्वे अधिकाराः प्रजा हस्ते आसन्। राज्ञां समीपे गन्तुं कश्चिदपि एतादृशः प्रतिबन्धः न भवति स्म येन स्वकीयआवश्यकतानिवेदने तत्पूर्तौ च व्याघातो भवेत्। राजा स्वयमपि यदा कदा प्रजाजनेषु साधारणतमैरपि जनैः स्वीयं सम्पर्कं स्थापयित्वा स्वीयव्यवस्थात्रुटिं निश्चिनोति स्म। चारा अपि सर्वान् जनान् राज्यविरोधिनो मत्वा सूक्ष्मेक्षिकया तदवलोकनस्थाने एतद्विलोकयन्ति स्म। यद्राज्यं प्रति तेषामसन्तोषे को हेतुः? एतस्य कारणमिदमासीत् यतः राजा प्रथममेव कथयति स्म "दोष तु मे कथय येन प्रतिविधीयत"। स्वल्पैः शब्दैः कथयितुं शक्यते यत्—

प्रजानां चतुरस्रसमुन्नतिकारणीभूतं राज्यतन्त्रमेव महाकविकालिदासस्वीकृतम् आसीत् इति।

——

अनर्थः सञ्जातः ।। यं प्रयोगं सफलं द्रष्टुं डाक्टरेण सोऽयं सुमहान् श्रमः कृतोऽभूत्, तस्य साफल्यं तु दूरे, तस्य विधिरेव पूर्णो न जातः । सर्वः स्वप्नो भग्नः ! यस्य रोगिणो मस्तिष्के दौर्बल्यमासीत्, तस्य मस्तिष्के पुष्टिकारकद्रव्याणां मर्दनं तु दूरे तिष्ठतु मस्तिष्कमेव शरीरादपगतम् । किमधुना भावि ! शरीरस्य सर्वाधिको मूल्यवान् भागः तस्य वराकस्य शरीरादपसृतः ।

किन्तु भगवत्कृपया मस्तिष्कमिदं सुरक्षकौषधिप्रभावात् (Preservative Mixture) यथावत्, अविकृतमासीत् । डाक्टरो रोगिणः प्रकोष्ठे अधावत् । किन्तु आश्चर्यमासीद्यत् प्रकोष्ठं तदभूत् रिक्तम् । हन्त ! यदि रोगी अभविष्यत्तर्हि तस्य शिरसि पुनर्मस्तिष्कं योजयितुमासीत्सुशकम् । किन्तु सोऽपि गतः । प्रकोष्ठरक्षकेण कथितं यद्रोगी स्वस्थो भूत्वाऽधुनैव गतः । परं डाक्टरो नैव विश्वासमकरोत् । ज्ञातं तेन यद्रोगी रात्रावेव मृतो भवेत् । एतस्मिन् वार्धक्ये तदिदमपयशोऽप्यभूल्लिखितं भाग्ये ।

× × ×

व्यतिगतो भूयान् कालः । व्यस्मरत्सर्वामिमां घटनां डाक्टरमहाभागः । एकदा स नद्यां स्नानार्थं ग्रामपरिसरे गतोऽभूत् । यथैव वस्त्रादिकमुत्तार्य स स्नातुं सज्जोऽभूत्तथैव स्वस्थ एको मनुष्य पृष्ठतः समुपासरत् । डाक्टरेण परिचितं यदयं तु स एव रोगी ! स शीघ्रमपृच्छत्—"किं भवानधुनाऽपि जीवति ? मस्तिष्कसदृशस्यामूल्यस्याङ्गस्याऽभावेऽपि किं भवान् प्राणिति ? आश्चर्यं यन्मया भवतो मस्तिष्कं पुनः स्थापयितुं विस्मृतम् । किं भवान् स एव ? शीघ्रं वदतु । सुमहादाश्चर्यं मे ।"

"न मया ज्ञायते यद्भवता मम मस्तिष्कं न पुनः स्थापितम् । किन्त्विदं निश्चितमनुभवामि कृतज्ञः सन् यद्भवता चिकित्साऽनन्तरं होराद्वयेनैव मम सर्वोऽपि रोगः पलायितः । नाऽहमधुना चिन्ताऽकुलस्तिष्ठामि । अहं स्वदयितया सह प्रगाढं प्रेमाणं करोमि, किन्तु कदापि ईर्ष्या, व्याकुलता च मां न बाधेते । कस्यचिदपि कार्यस्य करणीयत्वे नाऽहं भारमनुभवामि । जीवनस्य स्वस्थमानन्दमुपभुञ्जे । ऋतूनां नृत्यमहं पश्यामि, पुष्पाणि लतिकाश्च मम हृदयं मयूरवन्नृत्यं विधातुं विवशयन्ति, किन्तु भविष्यतश्चिन्ता सर्वदाऽर्थं नष्टा । पूर्वापेक्षया मम स्वास्थ्यं नितरामुन्नतिमभजत इति भवानेव पश्यति । नाहमधुना पठितुं प्रभवामि, परं तदहं वाञ्छाम्यपि न । अधुनाऽहं प्रकृतेः स्वस्थमुपभोगं कर्तुमत्रैव नद्यास्तटे स्वच्छन्दं विचरामि । ममास्या उल्लाघतायाः कृते भवतः उपकारं नाहं कदापि विस्मरामि ।"

डाक्टरमहाशयः सर्वमिदं श्रावंश्रावं चकितोऽतिष्ठत् । निश्चितमेव रोगी नितरां स्वस्थः प्रफुल्लश्चादृश्यत । डाक्टरः कथितवान्—"मया यन्मस्तिष्कं योजयितुं विस्मृतं तदधुनाऽपि मदीये चिकित्सालये वर्त्तते । यदि भवान् मया सह चलेत्तर्हि तत् पुनरपि योजयिष्ये ।"

"नाहमधुना कामपि चिकित्सां वाञ्छामि । विना मस्तिष्कमेवाऽहं सुखी अभूवम्, अस्मि च । शरीरस्य सर्वाधिकं मूल्यवन्तं भागमादाय भवानेव प्रसन्नस्तिष्ठतु । अन्यस्मै वा कस्मैचन ददात्वेतत् । अहं तु यस्याङ्गस्य कारणादियदवधि दुःखमनुभूतवान्, यस्य निर्गमानन्तरं च जगदेतत् सुखानामालयमनुभवामि, तस्याङ्गस्य पुनर्दर्शनमपि नेच्छामि"—इति कथयन्, मन्दमन्दं गायन् सोऽयमपक्रान्तः ।

आश्चर्यचकितो डाक्टरः प्राणजीवनोऽपि विना स्नानमेव चिकित्सालयं परावृते ।

# संस्कृतसमाचाराः—

**राजस्थानसंस्कृतसाहित्यसम्मेलन-षष्ठाधिवेशनम्—** राजस्थानसस्कृतसाहित्यसम्मेलनस्य षष्ठाधिवेशनं शेखावाटीभूभागस्य मुख्यतमे नगरे सीकरे दिसम्बरमासस्यान्तिमे सप्ताहे भविष्यति । सम्मेलन-विषयकोपक्रमः सर्वोऽपि सज्जीभूतः । स्वागत-समितिनिर्माणं सम्पन्नम् यस्या अध्यक्षः सीकरजिलाकांग्रेसाध्यक्षः प्रभविष्णुर्नेता श्रीलादूरामजोशीमहाभाग.।स्वागतसंयुक्तमन्त्रिणौ च क्रमशः सीकरनगरपालिकाध्यक्ष: सार्वजनिककार्यकर्ता पं०मन्मथकुमारमिश्रः, प्रसिद्धोऽभिभाषकः (एडवोकेट) श्रीशरद्प्रसादरावतश्च सर्वमनेन निर्वाचितौ । अर्थसंग्रह-प्रचार-प्रकाशनादिसमितिरपि घटिता ।

इदमधिवेशनमभूतपूर्वमैतिहासिकञ्च भवेदिति स्वागत-समितिसदस्यैर्भृशं प्रयत्यते । अस्मिन्नवसरे संस्कृतिदर्शन, कवि-पुराणेतिहास-छात्र-महिलासम्मेलनान्यतिरिच्य निबन्धप्रतियोगिता, संस्कृत-प्रदर्शनी, शलाका परीक्षा-सस्कृतनाटकादीनामपि समायोजनं भविष्यति ।

शलाकापरीक्षायां व्याकरणे सिद्धान्तकौमुद्यां सर्वोत्तमपदभाजे उपाध्यायछात्राय, साहित्ये साहित्यदर्पणस्य प्रौढयोग्यतायां प्रथमतां प्राप्तवतेऽभ्यर्थिने सम्मेलनेन क्रमशः ५१)–१०१) रूप्यकाणां पुरस्कारौ प्रदास्येते । निबन्ध-प्रतियोगितायामपि उत्तमनिबन्धलेखकाय पारितोषिक-प्रदानयोजना पूर्ववत् व्यवस्थिता । निबन्ध-सूचयोऽविलम्बमेव प्रकाश्यन्ते ।

अस्य सम्मेलनस्येयं भविष्यति विशेषता यदस्मिन् संस्कृतानुरागिभिस्सह तदितरभाषाभाषिणामन्यक्षेत्रजुषामपि पूर्णः सहयोगः प्राप्स्यते । सम्मेलनोद्घाटनाय भारतगणतंत्रस्योपाध्यक्षाः श्रीसर्वपल्लीराधाकृष्णन्महोदया अभ्यर्थ्यन्ते ।

**सम्मेलननिबन्धविषयाः—** दिसम्बरमासे भाविनः राजस्थानसंस्कृतसाहित्यसम्मेलनस्यावसरे समायोजितायै सस्कृत-निबन्धप्रतियोगितायै निम्न-विषया निर्धार्यन्ते, येषु कमप्येकमवलम्ब्य लिखद्भिः स्वनिबन्धः २० दिसम्बरं यावत् स्वागतसमितिकार्यालये सीकरे प्रेषणीयः—

[१] संस्कृतं प्रति संस्कृतज्ञानां, जनतायाः सर्वकारस्य च कर्तव्यम् ।

[२] स्वतंत्र-भारतस्य शिक्षा-प्रणाल्यां सस्कृतस्य स्थानम् ।

[३] राष्ट्रिय-चरित्र-निर्माणे सस्कृतस्य महत्वम् ।

[४] संस्कृतं विश्वशान्तिश्च ।

[५] राजस्थाने सस्कृतस्य भविष्यत् ।

साधारण्येन निबन्धो मौलिकः, गवेषणापूर्णः सरलसुन्दरभाषानिबद्धो नातिस्वल्पदीर्घो वाच्यलिपियुतो भवेत् । निर्णायकानां मतमविरुध्य प्राप्तप्रथमपदवीको लेखः पुरस्करिष्यते ।

**शलाका-परीक्षा-विवरणम्—** संस्कृत - सम्मेलनावसरे सस्कृतसाहित्यस्य, व्याकरणस्य च प्रौढज्ञानसुरक्षार्थम् तदर्थमुत्साहनाय चैका शलाका-परीक्षा आयोजिता यस्यां राजस्थानीयस्वीकृत-विद्यालयच्छात्राः समवेतुमर्हन्ति ।

(१) सिद्धान्तकौमुद्यां समासाश्रयप्रकरणं यावत् प्राथम्य भजमानेन छात्रेण एकपञ्चाशन्मुद्राः पुरस्कारस्वरूपं प्राप्स्यन्ते ।

(१) साहित्य-दर्पणस्य संपूर्णभागे सर्वोत्तमतां प्राप्नुवता प्रतियोगिना एकोत्तरं शतं पुरस्कारत्वेन लप्स्यते ।

प्रतियोगितायां भागमिच्छद्‌भिस्त्वरितमेव स्वागत-समितिकार्यालये विद्यालयाध्यक्षानुमतपत्रेण स्वनामानि प्रेषणीयानि ।

**कालिदासमहाकवेः स्मृतिदिनम्**—अस्मिन् नवम्बर-मासे विश्वविश्रुतकीर्तेः कविकुलगुरोः कालिदासस्य स्मृतिदिनानि (जयन्ती वा) ससमारोहं देशस्य विभिन्नभागेषु समायोजितानि । अमरकाव्यप्रणेतुः चिर-जागरूकप्रतिभावन', भारतीयस्यापूर्वस्यैकस्यात्मन. स्मरणं देशस्य कृते कियदावश्यकं कर्त्तव्यमिति नास्ति कथनीयम् । हर्षस्य विषयो यद्भारतसर्वकारस्यापि निर्देशोऽस्मिन् महत्त्वपूर्णे कार्येऽभूत् । आकाशवाणी (आल-इण्डिया-रेडियो) अपि स्वकीयेषु विभिन्नेषु केन्द्रेषु कालिदासजयन्त्या विशेषायोजनानि अकरोत् । १४ नवम्बरदिवसे देहलीकेन्द्रात् महाराष्ट्रलेखकेन वारेरकरेण, डा० रामकुमारवर्मणा, के० एम्० पणिक्करेण, अन्यैश्च देशस्य मान्यैः साहित्यकारैः कविगुलगुरवेऽस्मै श्रद्धाञ्जलय' समर्पिताः । जयपुरकेन्द्रादपि १५ नवम्बरदिने भारत्याः सहसम्पादकेन, श्रीइन्दुशेखरेण च कालिदासकवितानां सङ्गीतमयं पाठं कृत्वा कालिदासस्य स्मृतिर्जागरिता । अन्येषु आकाशवाणीकेन्द्रेष्वप्येवंविधाः कार्यक्रमा अभवन् ये अभिनन्दनार्हा एवाऽसन् । अन्येषु प्रदेशेष्वपि तादृशा समारोहाः समभवन् येषां संक्षिप्तं विवरणं प्रकाश्यतेऽस्माभि· ।

इदमपि सहर्षं सूच्यते यदस्य महाकवेः संपूर्ण-ग्रन्थावली, यस्या अभावो भारते बहोः कालात्पूर्वत अनुभूयतेस्म संयुक्तराष्ट्रसंघस्य शिक्षाविज्ञानसंस्कृति-संस्थया (यूनेस्को) प्रकाशयितुं निश्चिता ।

राजस्थानीयसंस्कृतसाहित्यसम्मेलनस्य जोधपुर-शाखया महाकविकालिदासस्य जयन्ती महात्मागांधी-स्कूलमध्ये कार्तिकशुक्लैकादश्यां (२५-११-५५) महता समारोहेण सम्पादिताभूत् । श्रोतॄणां सख्या अपि चतुः-शतं यावदासीत् । नगरस्य उच्चाधिकारिणोऽपि कियन्तः संस्कृतानुरागिण इत्यपि च आसीद्दर्शनीयम् ।

उत्सवस्य सभापतित्वं अलंकुर्वद्भि' जस्टिसश्रीदुर्गा-शंकरमहोदयैः कालिदासस्य ऐतिहासिकीं चर्चां कुर्वद्भिः महाकवे काव्यानां सौन्दर्ये पातितः समीचीन प्रकाशः। अन्ते च उक्तं—संस्कृतभाषां विना अस्माक सस्कृतेः रक्षाया. न सभव' । जाने, अद्य सर्वोऽपि जन विज्ञानं अनुधावति । मन्यामहे च इयं स्वाभाविकीप्रवृत्तिः जनानां परं इतोऽपि प्रवृत्तिः विधेया एव । यदि अस्माभिः सर्वैं मिलित्वा प्रयत्नः क्रियेत चेत् अस्माकं अभिलषितं न दूरे ।

श्रीमद्भिः महाकविनित्यानन्दमहोदयैः संस्कृत-भाषायां कालिदासस्य काव्यानां माहात्म्यं वर्णितम् ।

डा० देवराजउपाध्यायेन महाकविं प्रति श्रद्धांजलि अर्पयता उक्तं जीवनक्षेत्रे इतस्ततः पलायमानानां अस्माकं न कुतोऽपि सस्कृतं विहाय शान्तिः इति ।

श्रीमत्या गार्गी अनुसूयया सस्कृतभाषायां संस्कृत-भाषायाः गौरव प्रदर्शितम् ।

डा० सोमनाथगुप्तमहोदयेन च शाकुन्तलगतं प्रण-यमाहात्म्य कालिदासस्य च शिवभक्तिप्रियत्वं प्रतिपादितम् । प्रिंसिपलरामचन्द्रमिश्रैः, पं० कालूरामशर्मभिः कवे ग्रन्थानां साहित्यदृष्ट्या लोकदृष्ट्या च कियन्मा-हात्म्यमिति श्रावितम् । मणिशंकरशास्त्रिभिः मेघदूते मेघपर्यायवाचिशब्दानां प्रयोगे कवेर्नैपुण्यं तथा च तात्कालिकीनां स्त्रीणाम् दिनचर्या च मेघदूतमाश्रित्य वर्णिता।

अन्ते च श्रीनारायणसिंहभाटी-महोदयेन मेघदूतस्य राजस्थानीभाषायां अनुवादः श्रावित. ।

इमं कालिदासजयन्त्युत्सवं सविशेष सफलयितुं श्रीजगदीशचन्द्राचार्येण सितारवादनेन श्रीआशाकरणशर्मणा च शास्त्रीयसंगीतेन सम्यग् अभिरंजिता श्रोतारः।

स्थानीयश्रेष्ठिप्रमुखेन श्रीगोवरधनदासकाबरा महोदयेन अभीष्टसहयोगप्रदानेन उत्सवस्य शोभा वर्धितेति साधुवादार्हः।

सम्मेलनस्य मन्त्रिमहोदये श्रीमणिशंकरशास्त्रिणा स्वप्रयासेन अद्यावधि अपरिचिताः नगरस्य विभिन्नक्षेत्रेषु वसन्तः संस्कृतानुरागिणः संस्कृतस्य विद्वांसः अन्विष्य समामन्त्रिताः इति प्रशंसनीयः प्रयासः।

डीडवानास्थ – श्रीरामानुजसंस्कृतमहाविद्यालयीयछात्रपरिषदस्तत्वावधाने २५।११।५५ तारिकायां प्रधानाचार्य पं०श्रीरामेश्वरप्रसादजीशास्त्री विद्यालकाराणामध्यक्षत्वे "श्रीकालिदासजयन्तीमहोत्सवः" सोल्लासं सम्मानितः।

एतस्मिन्नवसरे विदुषां विविधभावभूषितेषु भाषणेषु सत्सु छात्रैः अभिज्ञानशाकुन्तलस्य चतुर्थाङ्कस्याभिनयोऽपि विहितः। अभिनयस्य कलात्मकरूपदाने श्रीकृष्णचन्द्रशास्त्रिणः परशुरामशर्मणश्च आसीत् महान् सहयोगः।

राजस्थानसंस्कृतसाहित्यसम्मेलनादेशानुसारं सीकरेऽपि २५दिनाङ्के महता समारोहेण कालिदास-जयन्त्याः समायोजनं राजकीयश्रीरघुनाथसंस्कृतकालेजभवने सायं पं०बजरंगलालजीजोशीमहाभागस्य साभापत्ये सम्पन्नम्। तत्र पं०शुकदेवभाज्यौतिषाचार्येण विहितस्य मंगलस्यानन्तर महाविद्यालयाध्यक्षाः पं०श्रीरघुवीरदत्तशास्त्रिणः कविसम्राजोऽस्य जीवने-साहित्ये च प्रकाशमपातयन् अन्यैश्च पं०मनोहरमिश्रएम.ए, सत्यदेवशास्त्री, श्रीसत्यनारायणदीक्षितमहोदयैरपि कविवर्येण कृतां संस्कृतसेवाम्प्रति श्रद्धाञ्जलयोऽर्पिताः, वक्तव्येषु च सुन्दर भविष्यतः आशा व्यक्तीकृता।

# सम्पादकीयम्—

**राजस्थान-विश्वविद्यालयस्योपाधिवितरणोत्सवः**-कतिपयवर्षेभ्य संघटितो राजस्थानप्रान्तीयो विश्वविद्यालय शनैः शनैरुन्नति भजते इति भवेद्विदितं धार्मिकाणाम्। दिसंबरमासस्याऽस्य ३ तारिकायां विश्वविद्यालयस्याऽस्य अष्टम उपाधिवितरणोत्सवो जयपुरनगरीय-महाराजाकालेजस्य विशाले प्राङ्गणे महता समारोहेण सवृत्त.। एतस्मिन् द्विसहस्रामिताः स्नानकाः, द्विशतमिता महिलाश्चासन् उपाधिग्राहिणो नूनम्। भारतप्रसिद्ध श्रीमान् के० एम्० पणिक्कर-महोदयो दीक्षान्तभाषणमकरोत्। महोदयेनानेन शिक्षा-विषये समयोचितं यद्वक्तव्यमासीत्तत्प्रोक्तमेव, किन्तु 'अय जयपुरीय', एप उदयपुरीय इत्यादि संकुचितां भावनामुल्लङ्घ्य सप्रति राजस्थानीयाभिमान. सर्वैरावहनीय' इति भृशमशिक्षयत्। वर्तमानां परिस्थितिमालाच्य मार्मिकमिदमुक्तं पनिक्करमहाभागेन। न केवलमधीयानानां शिक्षार्थिनामेव, किन्तु राजस्थानेऽमुष्मिन् अधिकारपदमारूढानां शासकानामपि हृदये सेयं संकुचिता भावना समये समये प्रबला भवति, इति बहुधाऽनुभूतम्। ईदृशे उदारशासने सेय संकीर्णा भावना वस्तुतो हानिकरी। यदा हि सपूर्णस्यैव भारतस्य पुनर्निर्माणं संमुखगतमस्ति तदा यत्किञ्चित्प्रदेशसबद्धा सेय संकीर्णता कथ वा हितावहा सिध्येत्?

संस्कृतभापाविषये महोदयेनाऽनेन भूयस्तरां मार्मिकमुदीरितम्। संस्कृतभापायां साहित्यादिगतां महत्तां सस्थाप्य. जयपुरराज्यस्य संस्कृतसेवा विशेषत समुल्लेखनीया सूचिता। यतो हि सरदारमहाभागेन प्रोक्तं यद् जयपुरराज्यमिदं ४०० चतुःशतवर्षेभ्य संस्कृतसेवामविरतमाचरत्। अत्रत्या राजानः संस्कृतपण्डितेभ्यः परस्सहस्रमुद्रावार्षिकीं ग्रामादिजीविकां प्रदाय तेषां द्वारेण संस्कृतभाषाया, शास्त्राणां, धर्म-संस्कृत्योश्च संरक्षणमकार्षु। अत्रत्येन पण्डितदुर्गाप्रसादेन 'काव्यमाला' प्रकाशिता, यद्द्वारा अनेकानेकदुर्लभग्रन्थानां परिचयः संस्कृतसेवकानामभूत्। ये किल महोदया संस्कृतभाषां भारतस्य कृते द्वितीयां भाषां मन्यन्ते, ते हि प्रमाद्यन्ति। संस्कृतं हि भारतस्य सर्वप्रथमा भाषा। ये हि भारतस्य सस्कृतिं, भारतीयां परम्परां च जिज्ञासन्ते तेषां कृते संस्कृताध्ययनं सर्वथा अनिवार्यम्। विशेषतस्तु राजस्थानीयानां कृते, येषां

---

**ऋषिकुले वार्षिकोत्सवः**— लक्ष्मणगढस्थश्रीऋषिकुलब्रह्मचर्याश्रमसंस्कृतमहाविद्यालयस्य द्वात्रिंशत्तमो वार्षिकोत्सवो नानाविधकार्यक्रमसमन्वितः आश्विनशुक्लपूर्णिमामारभ्य दिनत्रय यावत् महता समारोहेण सम्पन्न। आरम्भदिने प्राभातिकपरिक्रमणानन्तरं दशवादनवेलायां विद्यामार्तण्ड पं०श्रीघनश्यामचन्द्रशास्त्रि-प्रिन्सिपलमहोदयानामाचार्यत्वे आश्रमसञ्चालकश्रेष्ठि श्रीतोलारामचूडीवालामहोदयेन वैदिकं श्रीगणपतिसरस्वत्यादिपूजन षोडशोपचारविधिना संपादितम्। रात्रौ ससङ्गीत श्रीहरिकीर्तनं च सञ्जातम्। द्वितीयदिने संस्कृतविजयध्वजारोहणानन्तर कल्याणसंपादकस्य श्रीहनुमानप्रसादपोद्दारमहाशयस्य साभापत्ये वार्षिकोत्सवकार्यं श्रीवेदभगवतः शोभायात्रा साहित्यप्रदर्शिनीउद्घाटनञ्च समभूत्, यत्र बहूना विद्वज्जनमहात्मनां भाषणानन्तरं सभापतिना भारतीयसंस्कृतेः संस्कृतभाषायाश्चोन्नत्यै स्वविचारान् प्रकटीकृत्य साहित्यप्रदर्शिन्याः संस्कृतसाहित्यनिर्देशकचित्राणि छात्रप्रतिभाकल्पतानि प्रशंसितानि। रात्रौ श्रीरामेश्वरप्रसादशास्त्रिसाहित्याचार्यसभापतित्वे कविसंमेलनं समपद्यत यत्र राजस्थानीयैरनेककविभिः स्वकविताः श्राविताः। तृतीयदिने वृन्दावनवास्तव्य – श्रीवैष्णवाचार्यश्रीचक्रधरस्वामिनामाध्यक्ष्ये साहित्यपरिषदश्चतुर्थवार्षिकाधिवेशन विविधकार्यक्रमसमन्वितमभूत्तत्र ब्रह्मचारिच्छात्रैश्चारुमित्रानाटकं साधु अभिनीत व्यायामप्रदर्शनादिकं च सम्पन्नम्।

योग्या अभिनेतारो राजतपदकैः पुरस्कृताः। इत्थमय महोत्सवः संस्कृतोन्नतिविधायकः सानन्द सोत्साहं च सम्पन्नोऽभूत्।

हि संमानः, प्रतिष्ठा. जीवनसर्वस्वं च संस्कृतेतिहासे एव निहितम् । सरदारमहाभागेन साग्रह सूचित यद् विश्वविद्यालयस्याऽस्य प्रधानं कर्तव्यं यत्सोयं निजपाठ्यक्रमे सस्कृतभाषायै महत्त्वपूर्णं स्थानं दद्यात् ।

यत्किञ्चिदस्तु, उपाधिवितरणोत्सवः सुमहता समारोहेण समपद्यत । महामहान्त. प्राघुणिकाः समभिलन् । अनेकानेके स्नातका उपाधिपत्राणि, पदकानि चाऽलभन्त । किन्तु उत्सवस्याऽस्य सपूर्णोपि कार्यक्रमः आङ्गलभाषया संपन्नोऽभवत् । आङ्गलशैलीनिर्मितानि कृष्णवर्णानि 'गाउन'वस्त्राणि धारयन्त' स्नातका महोत्सवमिम वैदेशिकमिव प्रादर्शयन् । एका त्रुटिरन्याऽपि मार्मिकाणां हृदये आस्खलद् यद् विश्वविद्यालयस्य मुख्यसरक्षकस्य स्वर्गतस्य महाराणाश्रीभूपालसिंहमहाभागस्य देहावसाननिमित्तको न कोपि शोकप्रस्तावो, न च, कोपि सदेशो वा समपठ्यत । अस्तु, विश्वविद्यालयोय प्रतिदिनमधिकाधिकामुन्नति कीर्तिं च समधिगम्यादिति परमेश्वर प्रार्थयामहे ।

**सोवियतप्रधानमन्त्रिणो जयपुरे विशिष्टं स्वागतम्**—सोवियतरूसराष्ट्रस्य प्रधानमन्त्री श्रीवल्गाननस्तत्सहचर. श्रीख्रुश्चेवमहोदयश्च भारतस्य दिल्लीप्रभृतिषु प्रधान-प्रधानसंस्थानेषु स्वागतसम्मान स्वीकुर्वन् विद्याकलामन्दिरेऽस्मिन् जयपुरनगरेऽपि समागच्छत् । जयसिंहमहाराजाधिराजेन कस्मिश्चित् अभूतपूर्वे शुभमुहूर्ते संस्थापितमिद नगर सर्वदैव उच्चतमं समानमेव समभ्यगच्छदिति स्पष्टमितिहासपाठकानाम् । सांप्रतं भारतस्य पुनः संघटनावसरेऽपि तदिद नगरं नवीनतया संघटितस्य विशालराजस्थानस्य राजधानीपदमध्यगच्छत् । अस्मिन् हि नगरे प्रायः "अष्टवारा नवोत्सवाः*" इति किंवदन्ती चरितार्था भवति । एतदनुसारमेव दिसबरमासस्य सेयमष्टमी तारिका (८।१२।५५) जयपुरनगरस्य उत्सवपरम्परायां नवीनामेव लहरीं प्रावाहयत् । प्राघुणिकरूपेण समागतस्य ससहचरस्य श्रीवल्गाननमहोदयस्य स्वागतसमारोहो महता समुत्साहेन समभवत् ।

अष्टमतारिकायां अपराह्णस्य सार्द्धद्विवादने महाभागो 'अलूश्किन' नामकाद् व्योमयानादवतीर्य राजस्थानीयजनतायाः स्वागत स्वीचकार । राजस्थानस्य महामाननीयो राजप्रमुख. श्रीजयपुरनरेन्द्रः, प्रधानमन्त्री श्रीसुखाडियामहोदयश्च रूसराष्ट्रनेतुः स्वागतसमानमकुरुतां सर्वप्रथमम् । ततो रूसस्य राष्ट्रीयगानं, भारतस्य राष्ट्रीयध्वनिश्च मङ्गलवादित्रेषु सर्वत्र समगुञ्जत् । मङ्गलवाद्येनाऽनेन सहैव, राजस्थानीयबहुमूल्यवेषभूषासज्जिता मङ्गलकलश पुरस्कुर्वत्यः कुमारिका मङ्गलगानमगायन् । कुमारिका इमा भारतीयरीतेरनुसारं प्राघुणिकयोर्द्वयोरेव ललाटे कुंकुमतिलकमकुर्वन् , यद्धि तिलक गौरेऽस्मिन् वैदेशिकानां ललाटे परमां शोभा परिपुष्यत् भारतीयैः सह शुभमैत्र्या शुभां घोषणामकरोदिव । ततः प्राघुणिकानां समारोहः साङ्गानेरसंस्थानात् "रामबाग" हर्म्ये व्यश्राम्यत् । मार्गे लक्षमिता जनता सोत्कण्ठ ससमादरं च महाभागमिम विलोकयन्ती ' हिन्दी रूसी भाई-भाई" (भारतीयाः रूसवासिनश्च मिथोभ्रातर ), 'भारत-रूसयोर्मैत्री चिरस्थायिनी भूयात्' (भारत रूस मैत्री जिन्दाबाद) इत्यादिभिर्हर्षनादैरागन्तुकानां स्वागतमसूचयत् । श्रीवल्गाननमहाभागाः श्रीख्रुश्चेवमहोदयश्च कृताञ्जलिः सन् जनताया हर्षप्रकाशस्योत्तरमददात् ।

अर्द्धहोरां यावत् रामबागोद्याने विश्रम्य सोवियतमन्त्रिमहोदयः 'पोलो' चतुरङ्गणे समागच्छत् यत्र मुख्यमन्त्रिणा श्रीसुखाडियामहोदयेन प्रीतिभोज्यस्याऽऽयोजनमक्रियत । अर्द्ध घण्टां यावत् पोलोक्रीडामपश्यन्महाभागोयम् । पञ्चवादनोत्तरं मान्यमहोदयोऽय नगरदर्शनाय प्रातिष्ठत । तत्र सकलनगरस्य सज्जासविधानादिकमालोक्य रामनिवासोद्यानस्य पृष्ठभागाज्जनसाधारण सभायामागच्छत् । सेयं सार्वजनिकसभा रामनिवासोद्यानस्य हर्म्याग्रभागे (म्यूजियम) निवेशिताऽभूत्, यस्यां पुष्पगुच्छान् संग्रथ्य सुदृश्या आसन्दी निर्मिताऽऽसीत् । आसन्द्यामस्यां यथैव सोवियतमन्त्रिमहोदयेन

*'आठ वार नौ त्यौजार ।'

पादन्यास कृतोऽभूत्तथैव अपारायां जनतायाम् —'हिन्दी रूसी भाई-भाई' इति निनाद सर्वदिक्षु प्रतिध्वनितोऽभूत् । अनुमानतः सार्द्ध लक्षद्वयमिता जनता सभायामस्यां समवेताऽऽसीत् । अस्यां सभायामुपागतस्य माननीयप्राघुणिकस्य अपरिमितयाऽनया जनतया गगनगुञ्जके करतलध्वनिभिः सप्रमोदमक्रियत स्वागतम् । श्रीयुतमेवराज 'मुकुल' महोदयेन सोच्चैस्वर हिन्दीकविताद्वारा स्वागतमक्रियत । राजस्थानस्य मुख्यमन्त्रीश्रीसुखाडियामहोदयो राजस्थानीयजनतायाः प्रातिनिध्येन समागतानां मान्यमहाभागानामभिनन्दनमकार्षीत् ।

रूसराष्ट्रस्य द्वावपि नेतारौ अञ्जलिबन्धपुरस्सर हिन्दीभाषया जनतायाः समुखे 'नमस्ते' इत्यभिवादनमकार्ष्टाम् ।

ततो राजस्थानसघेन समर्पिता, ६७ तोलकमितेन सुवर्णेन घटिता, रत्नजटिता मञ्जूषा समार्पित मन्त्रिमहाभागाय । ततो जयपुरराज्यस्य सुप्रसिद्धेन मूर्तिकारेण प गोपीचन्द्रमिश्रेण तथा नारायणलाल–जैमिनिना सकौशल निर्मिता श्रीवल्गाननमहोदयस्य एव ख्रुश्चेवमहाभागस्य च मर्मरघटिता प्रतिमा पूर्वोक्ताभ्यां प्राघुणिकाभ्यां ससमादर समार्प्यत । सेयं मूर्तिः स्वच्छपाषाणे घटिता अनयोः प्राघुणिकयोरुपरितनस्य अर्द्धाकारस्यासीत् मूर्तिकला अतिप्रशसनीयाऽभूद् यां दृष्ट्वैव प्राघुणिकसमूह. प्रासदत् । एतदनन्तर जोधपुररगकलाकलिते 'जॉरजेट' पटनिर्मिते, द्वे राजस्थानीये उष्णीषे (साफा) द्वयोरपि प्राघुणिकयोः शिरसि निवेशिते अभूताम् । ययो. स्थापनसमकालमेव कौतुक-हर्षविनोदसम्प्रेरिता जनता करतलध्वनिभि परिहासप्रमोदैश्च सभामण्डपमगुञ्जयत् ।

उष्णीषपरिधानोत्तर द्वयोरपि सम्मुखे विशालो दर्पण. समानीयत, यस्मिन्नात्मन प्रतिबिम्बं विलोक्य द्वावपि मुहुर्मुहु. स्मितमकुरुताम् । वक्षसि सुवर्णतन्तुभिर्निर्मितो हार', शिरसि राजस्थानीयशैलीघटितमुष्णीषम् गौर मांसल च शरीरम्, अतएव द्वावपि प्राघुणिकौ वेषविन्यासेन साक्षाद् राजस्थाननिवासिनौ प्रतीतावभूताम् । अस्यां दर्शनीयपरिस्थित्यां सभामण्डपे छायाचित्रशिल्पिनाम् (फोटोग्राफर) मण्डलमतितमामुत्साहितमभूद् येन हि वारं वार विद्युत्प्रकाश कृत्वा प्राघुणिकानां छायाचित्रमगृह्यत ।

एतदनन्तर वल्गाननमहोदयो द्विलक्षपरिमितजनतायाः प्रमोदोत्साहपूर्णे विशाले मण्डले सादरमुत्थाय भाषणमकरोत "भवन्तो मामाज्ञापयन्तु यद् अहम् सोवियतजनतायाः प्रातिनिध्येन भवतां शुभकामना प्रकटयेयम् । भवद्भिर्येन प्रेमभावेन मे स्वागतमकारि तदर्थमह हृदयस्याऽन्तस्तलेन कृतज्ञतां प्रकटयामि । भवन्तो नूनमतितमां मे आतिथ्यं च समानं चाऽकार्षुः य हि न कदाचिदह विस्मरेयम् । सोवियतनेता अग्रे प्राऽभाषत—यत् जयपुरराज्यस्येतिहास. संमाननीयोऽस्ति । भारतवर्षस्य स्वातन्त्र्ययज्ञे जयपुरेणानेन भूरि भूरि योग. कृतोऽभूत । अहं बहोः कालाज्जानामि यज्जयपुरस्याऽस्य भारतीयेतिहासे प्रमुखतमं स्थानम् ।

ततो राजस्थानस्य मुख्यमन्त्री श्रीमोहनलालसुखाड़ियामहोदयो राजस्थानस्य पुरातनमितिहास सक्षेपेण प्रस्तुत्यातिथीनां समाने राजस्थानीयजनताया हार्दिकमभिनन्दन प्रकटयामास ।

सोवियतप्रधानमन्त्रिणः श्रीवल्गाननस्य तत्सहचरस्य च समाननायां यः किल प्रीतिभोजो राजप्रमुखेन

## संस्कृतछात्राणां कृते "भारती" !!

सहर्ष वय सूचयामो यद् देहलीनगर्या एकेन संस्कृतविद्यार्थिना "भारती" कार्यालये रूप्यकशतक प्रदाय 'संस्कृतछात्राणां कृते भारती स्वल्पमूल्येन प्रदीयेत इति मनीषा प्रकटीकृता । अतः ये संस्कृतछात्राः [संस्कृतपाठशालासु अन्यकालेजेष्वपि च संस्कृतविषयमधीयानाः] स्वपाठशालाया अध्यक्षस्य हस्ताक्षराङ्कितम् आवेदनपत्रं भारतीकार्यालये प्रेषयिष्यन्ति, ते एकवर्षस्य कृते मुद्राद्वयेनैव २) भारतीं लप्स्यन्ते । आवेदनेन सह मुद्राद्वयप्रेषणमावश्यकम् ।

व्यवस्थापक.

श्रीजयपुरधराधीशेन "चन्द्रमहल" प्रासादे दत्तस्तस्याऽवसरे श्रीमता संक्षिप्तमपि राजनीतिपूर्णं भाषितम्। प्रोक्तं यत्—भारतमिदं सर्वैरेव राष्ट्रैः सह मित्रतापूर्णं सम्बन्धं वाञ्छति। वयमनया वार्तया सर्वतोभावेन प्रसीदामो यत्पञ्चशीलसिद्धान्तः सोवियतसंघेन तथाऽन्यान्यैश्च राष्ट्रैः स्वीकृतः। अनेन हि अन्ताराष्ट्रिये मिथो विरोधे भूयसी न्यूनता सम्भवेत्।

वयमिदं जानन्तो भृशं सन्तुष्यामो यत् सोवियतसंघेन विज्ञाने, व्यवसायोद्योगे, कृषिक्षेत्रे च प्रगतिरवलम्बिता। तत एव वयं विश्वसिमो यद् राष्ट्रनिर्माणकार्ये श्रीमतामनुभवेन कश्चिन्महत्त्वपूर्णो लाभः सम्भवेत्। अन्ते प्रोक्तं श्रीमता—यद् भवतां राष्ट्रस्य तत्ताभिर्घटनाभिः भारतीयानामस्माकं पूर्णं मनोऽभिरुचिरभवत्। भवतामनया भारतयात्रया द्वयोरपि देशयोः सम्बन्धाः पूर्वतोऽप्यधिकं सुदृढाः सम्पद्येरन्, येन हि विश्वशान्तेः स्थापनायां भूयस्तरां सौकर्यं सम्भवेत्।

## भारतसर्वकारः शिवाजीचरित्रात्स्फूर्तिं शिक्षेत

सोवियतप्रधानमन्त्री श्रीवल्गाननो यदा पूनानगरे गतः (२६ नवम्बर) तदा प्रीतिभोजाऽवसरे मन्त्रिमहोदयेन राजनीतिपूर्णं भाषितमभूत्। महाराष्ट्रीयेतिहासस्य सौष्ठवेन विश्लेषणं कुर्वता श्रीमता प्रोक्तं यत् शिवाजिना देशभक्तं निजानुयायि दलं सगृह्य अद्भुता वीरता प्रकटिताऽभूत्। शिवाजिनः संघर्षे उपनिवेशवादस्य, अत्याचारस्य च विरोधे समभवन्। महाराष्ट्रैः शिवाजिनो नेतृत्वे स्वतन्त्रतायाः सङ्ग्रामः प्रवर्तितोऽभूत्। अतएव भारतीयो राष्ट्रियसर्वकारः शिवाजिनः सकाशात् स्फूर्तिं प्राप्तुं शक्नोति।

## श्रीवल्गाननस्य प्रत्युत्पन्नमतिता संस्कृतस्य महान् विजयश्च

सोवियतप्रधानमन्त्री यदा हि मद्रासप्रान्तीये कोयम्बतूरनगरे (२७ नवम्बर) गतस्तदा महाभागेनाऽनेन तत्र स्फुरद्बुद्धिताया परिचयो दत्तः। कथा सेयमेवमस्ति—यदा हि सार्वजनिकसभायां सोवियतमन्त्रिणा "हिन्दी रूसी भाई भाई" इति हर्षनादः सोच्चैःस्वरं घोषितस्तदा तत्रत्यायां जनतायां न तादृशो हर्षनादः समश्रूयत। कारणमासीत्—यत्तत्रत्या जनता हिन्दीभाषां न जानाति। अतएव हर्षनादस्यास्य तामिलभाषायामनुवादः कारितोऽभवत्। इदानीं 'भाई'शब्दस्य संस्कृतपर्यायवाची शब्दः प्राप्तो वल्गाननमहोदयेन। अतएव तेन महता उच्चस्वरेण घोषितम्—"हिन्दी रूसी सहोदरे" एतच्छ्रुत्वैव अपारायामस्यां जनतायां तादृशो महान्नादः प्रासरद् येन गगनं च दश दिशश्च सर्वतः प्रतिध्वनिता इवाऽभवन्। अनेन संस्कृतस्य राष्ट्रव्यापितया न किं महान् विजयः सिध्येत्?

## भारतीया संस्कृतिः सर्वतः प्राचीनतमा सोवियतनेतुः क्रुश्चेवमहोदयस्य स्वीकारः

सोवियतसंघस्य कम्यूनिष्टदलस्य मुख्यसचिवः श्रीख्रुश्चेवमहोदयो नवम्बरमासस्य २५ तारिकायां यदा मोहमयीनगरे गतस्तदा महाभागेनाऽनेन प्रकाश्यभाषणे स्वीकृतं यत् भारतस्य संस्कृतिः सभ्यता च रूसराष्ट्रस्याऽपेक्षयाऽपि सुतरां प्राचीना। एतदपि तेनाङ्गीकृतं यत् रूसराष्ट्रीयैः पशूनां रक्षणाऽवेक्षणं भारतीयानां सकाशादेव शिक्षितमभूत्। नवशिक्षितमहाभागा भारतीयसंस्कृतेर्महत्त्वमधुनाऽपि किं न परिचिनुयुः?

एवं भारते सम्पूर्णमपि मासं भ्रमणं कृत्वा रूसीयातिथयः सम्मिलितं वक्तव्यमेकं प्रचार्य १४ दिसम्बर दिवसे अफगणस्थानयात्रायै प्रस्थिताः। ततस्ते रूसं प्रस्थास्यन्ते। एषु दिनेषु भारते विदेशीयानां महान्त स्वागतसमारोहा समभवन्। अरबस्य सम्राट् शाहसऊदोऽपि परःशतसामन्तैः सह भारतमागमत्। अनेन अलीगढविश्वविद्यालयीयछात्रसङ्घाय पञ्चसहस्रमुद्रादानं कृतम्। नेपालमहीन्द्रो महेन्द्रो भारतयात्रां विधाय नेपालं प्रस्थित एव। न्यूजीलैंडस्य कृषिमन्त्री अपि भारतं भ्राम्यति।

# भारती

प्रमुखं संस्कृतमासिकपत्रम्

ककारपञ्चकबलाद् हिन्दुसंस्कृतिरक्षकः ।
गुरुगोविन्दसिंहोऽयं म्लेच्छवंशमृगाधिपः ॥


वर्षम् ६ | तृतीयोऽङ्कः | मूल्यम् वार्षिकम् २) रु० एकस्याङ्कस्य ।=—

राजस्थान-मद्रास-मध्यप्रदेश-सौराष्ट्र-भूपाल-उत्तरप्रदेश-बहार-पञ्चनद-आन्ध्र-सर्वकारैः स्वीकृता—

# ❀ विषय-सूची ❀



---

## संस्कृतसेवकानां कृते सुवर्णावसरः ! प्रतियोगितात्रयम्

देहलीवास्तव्यैः श्रीकैलासचन्द्रमहोदयैः 'भारती' पत्रिकायै लघुकथा-एकाङ्किनाटककविताप्रतियोगितानामायोजनाय १७ ()रूप्यकाणां राशिः प्रदत्त । अल्पेन स्वकीयव्ययेन सह भारती एताः प्रतियोगिता आयोजयितु वाञ्छति।

१ भारते भारताद् बहिश्च निवसन् कोऽपि नरो महिला वा प्रतियोगितायामेतस्यां भागं ग्रहीतुं क्षमा ।

२ लघुकथाया एकाङ्किनाटकस्य कविताया वा (एकस्य कस्यचन) प्रेषण भारतीकार्यालये पौषपूर्णिमामनुल्लंघ्य कार्यम् । तदनन्तरं लब्धा कृतिर्नाभिरोच्येत ।

३. लघुकथा भारत्याः पृष्ठचतुष्टयात् पृष्ठषट्कपर्यन्तमितकाया स्यात् नाऽतोधिक, न्यूना वा । शब्दसंख्या न्यूनान्न्यूनं सहस्रद्वयात्मिका, अधिकाधिक च त्रिसहस्रात्मिका भवेत् ।

४. एकाङ्कनाटकं भारत्याः पृष्ठचतुष्टयात्सप्तपृष्ठपर्यन्तं विस्तृत भवितुं शक्यं, शब्दसंख्या एकसहस्रं सहस्रद्वय ।

५. कविता प्रशस्यरूपेण वीररसप्रधाना न्यूनान् न्यूय दशपद्यात्मिका अधिकं च त्रिंशत्पद्यात्मिका स्यात् ।

६. लघुकथाप्रतियोगितायां, एकाङ्किनाटकप्रतियोगितायां च लब्धप्राथम्याय विदुषे प्रत्येकम् एकपञ्चाशद्रूप्यकमितो द्रव्यराशि द्वितीयस्थानमधिगतवते च प्रत्येकं पञ्चविंशतिरूप्यकाणि ससम्मानं प्रदास्यन्ते ।

७ कविताप्रतियोगितायां सर्वप्रथम्यमुपेयुषे विदुषे एकविंशतिमुद्रा प्रदास्यन्ते ससम्मानम् ।

८. भारतीनिर्णायकसमितेर्निर्णयोऽन्तिमरूपेण मान्यः स्यात् । एतस्यां समितौ त्रयो निर्णायकाः सन्ति ।

१—म० म० प० गिरिधरशर्मा चतुर्वेदः । २—भट्टश्रीमथुरानाथशास्त्री भारतीसम्पादक ।

३—वैद्यराजजयरामदासस्वामी आयुर्वेदकालेजाध्यक्ष ।

९. लब्धपुरस्काराः कृतयः, अन्याश्चापि योग्याः रचना भारत्यां प्रकाशमेष्यन्ति ।

वयं सर्वानपि संस्कृतज्ञान् सोत्साह प्रतियोगितास्वेतासु भागं ग्रहीतुमामन्त्रयामहे ।

—प्रबन्ध-सम्पादकः

सम्पादकः—
कविशिरोमणि
भट्टश्रीमथुरानाथशास्त्री
सहसम्पादक —
देवर्षिकलानाथशास्त्री B. A.
जयपुरम्

# भारती

प्रबन्ध सम्पादकः—
गिरिराजशर्माशास्त्री

भानुवद् भारतीयानां भास्वद्भवनभासिनी ।
भागीरथीव भावाढ्या भारते भातु भारती ॥

वर्षः ६ | पौषशुक्लप्रतिपत्, सं० २०१२ | अङ्कः ३

## त्याग-पत्रम्

( श्रीशिवशरणझा, झाँसी )

नाथ मम दोषो वक्तव्यः, प्रभो, यतस्त्वा त्यजाम्यहम् ।

बहु-बाधाऽऽकुलितो दलितोऽह हृदि वाञ्छामाधाय ।
त्वामाश्रित्य सपर्यां चरितः सर्वेत्तरान् विहाय ।
अधुनाऽतश्च प्रतिष्ठे प्रेयो, रिक्त-पाणिरिति चेन् ?
कथमभिधास्ये—'महान् त्वमासी'रिति सित-सुन्दर-काय ! ॥१॥

अभ्यामे निवसन् कटु कष्ट नक्तन्दिवमनुभवाम्यहम् ॥

भूत-काल-भीरिव चरणयोरानीता किल माम् !
आतङ्कित-मनसा चरणौ शरणीकृतवानभिराम !
अप्राप्यैव प्रसाद तावकमद्य निवर्ते नम्य !
त्वामाश्रयतो वयो व्यतीत, महिमा जयतुतराम् ॥२॥

त्वय्यासक्त निजमनुराग स्वेन सहापनयाम्यहम् ॥

अहमथ किञ्चिद् विवक्षुरास, श्रोतृ-जनस्याभावे—
मनसो भावा मनसि म्रियन्ते दग्ध्वा दुर्गति-दावे ।
दीन-गिरामपि श्रोतारः के जगति मिलन्ति सुखेन
उपेक्षका विधिनैव विरचिता', सरला ये प्रस्तावे ॥३॥

अस्ति च चेतसि बहु वक्तव्य यन्न कदाचिद् वदाम्यहम् ॥

त्वयि चाक्षेपो मम मिथ्या स्यादह जातु कुर्याम् ।
कश्चिन्नो मम पक्षे ब्रूयाद्, यस्मात्त्वमसि महान् ।
स्वस्वामिनोर्विभेदे कष्टान्मुक्तिर्नभःप्रसूना ।
साम्य-सिद्धये मनसा वपुषा प्रयतिष्ये चाब्दान् ॥४॥

यावदसिद्ध कार्यं तावत् शान्ति नैव दधाम्यह ॥

गच्छाम्यह, किन्तु कुत्रे-ति किञ्चिन्नो जानामि ।
श्राम्याम्यग्रेऽपीत्याशासे नैव, पुरः सर्पामि ।
मृत्युपायीव पतिष्याम्यसमे ध्वान्तेऽध्वनि चिरकालम्
नैव मिलेदिह शाला काचित् क्षण यत्र विरमामि ॥५॥

वाञ्छाऽभूत् तव निकटे स्थातु . त्वत्तो दूर व्रजाम्यहम् ॥

यामिन्यामाकाशे ताराः छवि-रुचिरा राजन्ते ।
यान्ति प्रभाते सत्येवास्त, नैव दिवा दृश्यन्ते ।
मनोरथा मे मनसि तथोत्पद्यन्ते नाम क्षणाय ।
अभिघातादस्त गच्छन्तः पीडायै कल्पते ॥६॥

भूत्वाऽभाव वशे मधु-काल चिन्ताया गमयाम्यहम् ॥

विश्रुतवैभव, स्वजनोपाहृत-कुसुमावृत-पद-कञ्ज ?
ईप्सित-भावनया लोभनया वशीभूत-जन-पुञ्ज ?
भूत भय-कारकमासीन्मम भवदपि पुरो विनश्यति
भविश्यतः कल्पनामकुर्वन् इतो यामि निर्बन्ध ! ॥७॥

कम्पित-कायः चिन्तितचेताः त्रातर्भूयो नमाम्यहम् ॥

# धर्मशास्त्राणां परमाश्रयिण्युपादेयता

( श्रीमाधुराम एम० ए०, करोडीमल्ल-कालेजे सस्कृताध्यक्षः )

'स्वधर्मे निधनं श्रेयः' इति हि समादिदिशु धर्म-शास्त्राणि प्रत्युत धर्म-निरपेक्षता एव केवलम् अद्वितीया नीतिः साम्प्रतिकविश्वस्येति विचारणास्पदं तावद् एतत्। कोऽवकाशोऽद्यत्वे धर्मस्य धर्मशास्त्राणां वा ?

एव किल अर्थवृत्ति-परताम् उपगतेऽद्य लोके, का गतिर् विषमाद् एतस्माद् अपाकृष्य पुनरपि जनं जनगणं वा सन्मार्गं आधातुम् ? दीक्षान्तकालेऽनयैवा-शङ्कयाऽभिभूत आचार्यः शिष्टं शिष्यम् उपदिशति— "धर्मान् न प्रमदितव्यम्। स्वाध्यायान् न प्रमदितव्यम्।" अस्यार्थः—विषमे (धर्मकृच्छ्रे) समुपस्थिते, न जातु धर्म-स्वाध्यायाभ्याम् ऋते जनस्य सम्भवत्युद्धारः। धर्म-स्वाध्याययो' अथवा धर्मशास्त्राणां लोकाश्रयत्वाद्, अन्यासां सर्वासाम् अपि वृत्तीनां पतनाभिगामित्वाच्च, प्रवचनस्यैतस्योपादेयता शिष्टैः प्रमाणीक्रियते ! तच्छक्यं नु अर्थव्यसनाद् उद्धृत्य धर्मकथा-दरिद्र कलिं शास्त्राणाम् आश्रयेण पुनरपि सस्थापयितुम् ? इति हि नोऽधुना विचिकित्सा विषयः।

प्रकृते—द्वयी वृत्तिर् जनस्य दिश्यते, तत्र प्रथमाऽर्थपरा, धर्मपराऽपरा। या वै अर्थस्य, केवलस्यार्थस्य पराकाष्ठा—यथा उ 'केवलाघो भवति केवलादी' इति हि शसन्ति—स एव पापाभ्युदयः। स एव कालोऽधर्मस्य, दुष्कृतां च विनाशानन्तरं धर्मसंस्थापनस्य धर्मावतारस्य च। एवं च धर्मार्थयोश् चक्रपरम्परा प्रवर्तते। लोके धर्मानन्तरम् अर्थ-युगम् अपेद्यतेऽर्थानन्तरं च धर्म-युगम्।

उक्तं च धर्म-शास्त्रेषु, काव्याख्यानेतिहासेषु च यद् आदौ धर्म एव जगताम् अनुशासको बभूवेति। अयं च चतुष्पाद् वृषो लोकं धारयामास—'स दाधार पृथिवीम् उत द्याम्'—कृते चतुष्पाद् भूत्वा, त्रेतायां त्रिपाद् भूत्वा, द्वापरे द्विपात्, कलावेकपात्। अथ यदाऽस्यायम् एकोऽवशिष्ट पादः कथा-शेषतां प्रयाति, तदा किल लोकोऽर्थ-वृत्त्याः परावृत्य धर्मं प्रत्युन्मुखो भवेत्।

राजा प्रजापतिर् वै अस्य धर्मस्यावशिष्ट एकः पादो, यतो ह्यसौ 'धर्मवृद्ध' इति संज्ञां गृह्णाति। 'धर्मपाल' इति च दण्डस्यापरः पर्यायः कोशेषु दृश्यते। इयं चानुश्रुतिः शान्तिपर्वणि भीष्म-पितामहानां च मुखात् प्रसृता समाम्नायते—आदौ तावद् धर्मो राजा बभूव। अनन्तर मत्स्य-न्यायेन प्रवृत्ताः प्रजा मिथो निश्चिक्यिरे "कमपि दैवशक्ति-सपन्न पुरुषं 'स्वय-वृत्य' प्रजापति-रूपेण व्यवस्थार्थम् अभिषिञ्चाम" इति। ब्राह्मणाः किलैतस्यां राज-व्यवस्थायाम् अदण्ड्या बभूविरे, दुष्टो राजाऽथ ऋषिभिर् दण्डार्होऽमन्यत। प्रकृत-धर्माद् अपगते, राजधर्मस्य प्रवर्तनाव्यवस्थे कौटिल्यार्थशास्त्रे समुपदिष्टे, सम ब्राह्मण-क्षत्रियादीनां 'स्वधर्म'-'आपद्धर्म'-प्रभृति-विभाग-दर्शनादिभिः। इत्थं कलियुगे साम्प्रतम् इह-पर-लोक-विषयकं निखिलम् अपि धर्म-कर्म-जातम् अर्थशास्त्र-समाख्यया प्रस्तूयते। ते हि नो दिवसा गताः– ते हि धर्म-दिवसा गता इति, यतो हि धर्माह् इत्यपरा संज्ञा ह्यस्तनस्य कालस्य।

अपरं च—कलहो वै अद्यत्वे कलेः परमो धर्म। धर्मक्षेत्र कुरुक्षेत्रत्वेन परिवर्तते। सदाचारिणोऽपि विभज्य युयुत्सव संपद्यन्ते। अन्यथा धर्मक्षेत्रेऽस्मिन् भारते वर्षे (आर्यावर्ते) सत्यस्यैव धर्मापर-पर्यायत्वात् सुकरम् इदं

समाधातुं यत् सत्यमेव परमो धर्म सममन्यतेत्यत्र याज्ञवल्क्योपनिषत् प्रमाणम्—

"स नैव व्यभवत्। तच्छ्रेयो रूपम् अत्यसृजत धर्मम्। तद् एतत् क्षत्रियस्य क्षत्र यद् धर्मः। तस्माद् धर्मात् परं नास्ति। अथोऽबलीयान् बलीयांसम् आशंसते धर्मेण यथा राज्ञा। एवं यो धर्म सत्यं वै तत्। तस्मात् सत्यं वदन्तम् आहुर् धर्मं वदतीति। धर्मं वा वदन्तं सत्यं वदतीति। एतद्ध्येवैतद् उभयं भवति।"

सत्येनोत्तभिता भूमिः—इति च वेदेषु ऋषिभिः क्रान्तदर्शिभिर् दृष्टम्। सत्यं वाचि प्रतिष्ठितम्। वाग्घि धर्मस्याधिष्ठात्री देवी मातेव, यावद् इतरथा—अहिंसा, श्रद्धा, मैत्री, दया क्षान्तिः, तुष्टिः, पुष्टि, क्रिया, उन्नति, बुद्धिः, मेधा, तितिक्षा, ह्रीः—इति त्रयोदश भार्या मूर्त्तयश्च धर्मस्योपसंख्यायन्ते। चतुर्दशैते गुणा धर्मस्य, अन्यत्रात्मनो गुणा उच्यन्ते। एवं दृष्टे आत्मनो धर्मेणैकीभावः, यो वै स्वः (आत्मा) स एव धर्मः—अर्थात् 'स्वस्य च प्रियम् आत्मनः' इति हि तुरीयं लक्षणं धर्मस्य मूलात् प्रसूतम्। अस्य निष्कर्षः—स्व-भाव एव धर्मः।

एतद् एव तथ्यं भगवतो बुद्धस्य बालकथासूपनिबद्धम्। सत्यान् न प्रमदितव्यम्। धर्माश्रयिणः सत्या वाक् प्रागेवापनुदति व्यापदम्, इत्यादि वाक्यं पुरस्कृत्य तथागतस्य ताभिस्ताभि कथाभिः परिपुष्टा जातक-माला, वस्तुतो धर्मनीतिकथामालैव।

चतुर्वर्ग-फलप्राप्तिर् नरस्य जीवन-लक्ष्यम् इवोपदिश्यते। तत्र का व्यवस्थाऽर्थ-काम मोक्षाणाम्? अर्थ-कामौ तु सामान्येन प्रवर्तेते एव.नन्तर्येण। तयोर् अन्यतरस्मिन् आत्यन्तेनासक्तिः काम-वृत्तिः। वैपरीत्येनाऽनासक्तिर् मोक्षः। धर्मार्थयोर् उभयोर् अपि मध्ये यथा कामोपभोग-संगतिः स्यात् तत्र कौटिल्याचार्या उपदिशन्ति—"धर्मार्थाविरोधेन कामं सेवेत। न निःसुखः स्यात्। समं वा त्रिवर्गोऽन्योन्यानुबन्धी। एको हि अत्यासेवितो धर्मार्थकामानाम् आत्मानम् इतरौ च पीडयति। 'अर्थ एव हि प्रधानः' इति कौटिल्यः। अर्थमूलौ हि धर्म कामौ।"

अर्थ-मूलौ हि धर्म कामौ—कथं वाऽयमुपदेशः साधारण-जनायाद्यत्वेन रोचेत? एष वै ऐहिकप्रधानायाः कलिवृत्ते सत्यं स्व-धर्मः। एनाम् एवार्थनीति कलियुगस्य युगधर्ममिव धर्मावतारा श्री-गाँधि-महात्मानः सममन्यन्त। एषु शब्देषु रामराज्याभिधानेन—सत्य-अहिंसा-अर्थशुचिता-स्वदेशिता-गृहोद्योग-हरिजनसेवा-इत्यादिभिर् आधारैर् उत्तभितां लोक-यात्राम् उपदिश्य स्वजनेभ्य एष एव युगधर्मो 'विश्वम् एक-नीडम्' इति बुद्ध्या 'विश्व-प्रेम'-नाम्ना प्रख्याय धर्म निरपेक्षो मानव-धर्म इदानीं प्रवर्तते। वेदा आहुर् 'मनुर् भव' अर्थात् मनुष्यो भव।

एवं किल धर्मे लोक-यात्रा प्रतिष्ठिता विप्रकृष्टानां प्रजानां, विप्रकृष्टस्य च प्रतिजनस्य। का विधा जनं जनम् उपागमय्य समाज-व्यवस्थाधारेणैकत्र समाम्नातुम्? तत्र यथा किल न समाजः प्रवर्तते विना गृहाश्रमं, न वै धर्मव्यवस्था प्रवर्तते ऋते गृह-धर्माद् ऋते सह-धर्माद्—ऋते सह-धर्मिण्याः। एषा वै धर्मोपनिषद्, एषा वै धर्मस्य गृहस्थाश्रमरूपता।

धर्म एष यो गृहस्थाश्रमः। सत्यमित्थपर-नाम्ना धर्मोऽत्र गृहपतिः। अहिंसा तस्य धर्मचारिणी गृहिणी। यथा उ गृहाश्रमिणौ दम्पती गृहमेधाग्निना निरग्नीन् अन्याश्रम-वासिनः सर्वानपि पोषयतस् तथैव सत्याहिंसे संकल्पाग्निना दीक्षिते पृथिवीं लोकाचारं चोत्तभ्नीतः।

# आसुरी आकाङ्क्षा

( पं०वासुदेवशास्त्री बागेवाडीकर, साहित्याचार्यः, काव्य-वेद-तर्क-तीर्थस्, शोलापुरम् )

"आः का यूयम्। कस्या अय परिग्रह"। अपसरतेतः। अस्माक महादेवी विभावरी अत्र विवत्सति। कापि ग्रामेऽन्यदाश्रयस्थानं समाश्रीयताम्"। इति वादिनीं दासीं विलोक्य नचिरादेव तत्रागत्य कृतवासा कुलूताधिपपत्नी यशोधरादेवी साकूत साश्चर्यं पृच्छति–"अयि भद्रे, का त्वम्। का च तवेय महादेवी। न

गृहे गृहि-गृहिण्योर् धर्मतुचा वेदिः। यज्ञे देवपूजा-संगतीकरण-दानैर् देवाधानम्। धर्म-दीपिका, धर्म-चारिणी, धर्म-गृहिणी--इति च पत्न्या अपर-नामानि श्रूयन्ते।

वेदेषूपनिबद्धं सकलमपि ऋषि-दृष्टं गृहस्थस्य पर प्रमाणम्। धर्म-साक्षात्काराद् ग्लायद्भ्योऽवरेभ्य स्मृतय, स्मृतिभ्यः परायद्भ्यः सदाचारः–'यद् यद् आचरति श्रेष्ठो लोकस् तद् अनुवर्तते,' परत्र सतां हि सन्देहपदेषु वस्तुषु प्रमाणम् अन्तःकरण-प्रवृत्तय.।' एतद् एव धर्मस्य स्वम्।

धर्मार्थाद् परावृत्य धर्म-ध्वजा धर्म-लिङ्गिनश् छद्मिनो धर्म बहिरङ्गम् एव धर्म-सर्वस्वं कृत्वाऽसि-पत्रेणैव धर्मप्रचारेण लोक-यात्रां दूषयामासुः। काले काले धर्मावनारा. प्रमाण पूरुषा दिवो भुवम् अवतीर्य अर्थ-वृत्त्या उदात्तीकरणेन धर्मं पुनर् अवस्थापयामासुः। दूषिताम् अर्थवृत्ति तता धर्मानुदानेनाऽपरेऽर्थावतारा निर्व्याज इव पुपुविरे। बुद्ध इव धर्म-कायाम् ते प्रतिष्ठां स्मृतिं च लेभिरे। इति हि लोकस्य सतीत्वं यद् एतान् महाभागान् स्मृतिगतान् सर्व-कालीनान् इव स्मारं स्मार प्रेरणां लभते, भूयो-भयश् च स्वात्मानं धारयते।

वयमन्यत्र जिगमिषामः। तव स्वामिन्येव गच्छतु कापि"। इति ब्रुवाणायां तस्यां स्वयमेव तत्र समागता विभावरी महाराज्ञी वीक्ष्य क्षणमिव विलम्बिता तस्थौ। झटित्यात्मान व्यवस्थाप्य महादेव्या पादयोर्पतत्। अब्रवीच्च–"देवि, इयं युष्मद्दासी विभावरी'। तदवस्थां तां विलोक्य यशोधरा बभाषे–"अये विभावरि, किं त्व महाराज्ञी सञ्जाता'। सा प्रत्युवाच–"जना मामेव वदन्ति"। साऽपृच्छत्–"कथमिव"। सा च पुनर्ब्रूते–युष्माकं प्रधानामात्यो मे भर्ता संप्रत्यस्य देशस्य राज्यासनमधिनिष्ठति। देवि, किं करोमि का गतिः। तेन यथा राजसिंहासनं समासादितं तदुच्चारयितुमपि वाणी मे न प्रसरति। सतीधर्मवशात् सर्वमेतन्मया सोढव्यम्। अरिमन्त्रवशगेन महामन्त्रिणा राज्यमधिगतम्"। इति। इद वज्रपातसम दारुणं वचो निशम्य परमविस्मिता यशोधरादेवी प्राह–'अस्माकं प्रधानामात्यो विश्वास-भङ्गं कृतवान् इत्यत्र न मे मनो विश्वसिति। न वा कोऽपि श्रद्दध्यात्। अधुना महाराजस्य का वार्ता। कथ्यतां सत्वरम्"। इति वदन्ती चिन्ताकुलमानसां महाराज्ञीं प्रेक्ष्य नितान्तं सन्तोषं मनसि दधाना सा दुष्टाशयाऽलीक शोकावेग प्रदर्शयन्ती प्रत्यब्रूत–"अम्ब, सुगृहीतनामधेयस्य तत्रभवतो महाराजस्य करुणकरुण घोरतम वृत्तान्तं निवेदयितुं न मे जिह्वा प्रवर्तते"। इत्येवं ब्रुवाणां तामाक्षिप्य यशोधरा सावेग समगिरत्।'न खल्वत्याहितं देवस्य'। सा कथयति–न केवलमत्याहितम्। अवज्ञानमपि। सावज्ञं महाराजस्य वधो जातः"। इमामशनिपातविषमां वार्ता श्रुत्वैव सा कुलिशाघातभग्नात् पादपाल्लतेव सपदि भूमि-

मापेदे। ततः परिजनप्रयत्नात्प्रकृतिमापन्ना सा विभावरीप्रेरिता स्वभर्तारमनुगन्तुं प्रवृत्ता। अनुगमने कृतमतिं तां विलोक्य सकलोऽपि परिवारः शोकार्णवे मग्नः। निश्चलमानसां तां स्वोद्यमाच्चालयितुं न कोऽपि शशाक। •

तदनुरचितां प्रज्वलितां चितां सम्पादितसहगमनविधाना गृहीतसौभाग्यवायनाभिः सुवासिनीभिः सत्कृता सा सोत्साहं सानन्दं यावत् प्रविशति तावत्कोऽपि परिव्राट् सम्राडिव शतशो दण्डकमण्डलुधारिणां काषायवाससां सन्यासिनां कुलेन परीतः कुतोऽप्यागत्य सहसा वह्निज्वालावलीढां चितामुत्पतिष्यन्तीं तां महाराज्ञीं न्यरौत्सीत्। अवादीच्च—"नायं विहितस्ते चिताप्रवेशो भर्तरि जीवति सति। नेदं सहगमनं प्रत्युतात्मघातः। अलमलं महापातकेनानेन"। एतद्वच प्रतीता सा राज्ञी प्रदीप्ताग्निप्रवेशादात्मानं निवारयन्ती समीपगताभिर्ज्वालाभिः प्रज्वलितवासाः दग्धावयवा निःसंज्ञा भुवि पपात।

अथ तथाभूतां तां तत्परिचारिकाभिः शिबिकामारोप्य वनमनाययत। तत्र चाल्पैरेवाहोभिर्व्रणारोपणोपचारेण दाहव्रणोपशमनेन सा नीरोगतां नीता। अथैकस्मिन् दिवसे सर्वेषां विरक्तानां मध्ये प्रोच्चासनमधिष्ठितः स परिव्राट् पत्युर्जीवतो वृत्तान्तं जिज्ञासमानां यशोधरां यथार्हमासने समुपवेश्य तत्रभवतो महाराजाधिराजस्य सकलमुदन्तजातं तस्यै न्यवेदयत।

अयि भोः प्रियपाठकाः, केयं विभावरी? कैषा महाराज्ञी? एवं तस्या व्यापादनेऽनुगमननिमित्तेन विभावर्याः को वा हेतुः? इत्येषा महती समुत्कण्ठा युष्माकं मनसि समुत्पन्ना स्यात्। तत्सर्वं कथयामि। सावधानं समाकर्ण्यताम्—

आसीत् पुरा किल दयादाक्षिण्यादिनैकगुणगणालङ्कृतो नयेन प्रजापालनतत्परो यशोवर्मा नाम कुलूतानां भूपालः। एकदा दिग्विजयं संपादयता तेन मलयनरपतेर्महाग्रहस्य युद्धे हतस्य सर्वस्वमपहरता रूपसंपन्ना पितृविहीना मलयराजदुहिता समासादिता। आनीय च साऽन्तःपुरमध्ये विनिवेशिता। अनाथा राजदुहितेति कृत्वा राज्ञ्या यशोधरया दुहितृनिर्विशेषं पोषिता पालिता च। गच्छता कालेन सा यौवनमुपारूढा। यौवनेन सार्धं प्रवृद्धा सम्राज्ञीपदाभिलाषा तस्याश्चेतसि बलवत् पदमकरोत्। प्रवृद्धकामा सा जातु रहसि महाराजस्य पुरतः स्वकामनां व्यवृणोत्। सम्राजा चावधीरितप्रणयप्रार्थना सा सपदि प्रतिजज्ञे यत् "कुलूतानां सम्राज्ञीपदमनधिगम्य नाहं स्वस्था भवामि"।

अनन्तरमल्पैरेवाहोभिः प्रधानामात्यस्य सिंहनादस्य द्वितीयपत्नी परलोकं गता। स चानपत्य आसीत्। दारकस्य कारणात् स पुनर्दारग्रहणं चिकीर्षतिस्म। सर्वैर्विशेषतो महाराज्ञ्या प्रतिषिद्धाऽपि विभावरी साग्रहा स्वयं तेन वृद्धेन निजमनोरथावाप्तिसाधनेन समं परिणिनाय।

अथैकदा राज्यलोभाकृष्टैर्गौर्जरैस्सह प्रवृत्ते कुलूतानां घस्मरे समरे सम्राजा प्रत्याख्याता तत्पूर्वमवमानं मानसे सुचिरं समुद्वहन्ती विभावरी रिपूणां साहाय्येन वैरं निर्यातयितुं राज्ञीपदं च समधिगन्तुं निरचिनोत्। निजकपटप्रबन्धे स्वभर्तारमनुकूलयितुं कञ्चिदुपायं योजयामास। एकदा एकान्तेऽरिप्रतीकारोपायचिन्तने निमग्नमानसं स्वपतिं निभृतमुपगम्य प्रेम्णा स्कन्धे निहितपाणिर्मधुरया वाचोवाच—"रिपुमर्दनः प्रजाधर्षणत्राणेऽपि आर्यपुत्रो भार्याधर्षणत्राणमपि न चिन्तयति। किमुत प्रेमसम्भाषणम्। यद्येव परिणयस्तु किमिति

विहितो न जाने"। इत्युक्त्वा किञ्चिदिव प्रकटितप्रणयकोपा नातिदूरे भूम्यां समुपाविशत्। अननुभूतप्रणयचेष्टोऽमात्योऽनया प्रणयिन्या प्रणयचेष्टया प्रणयाकुलितहृदयो बभूव। यदुक्तं च—

"सुभाषितेन गीतेन युवतीनां च लीलया।
मनो न भिद्यते यस्य स योगी ह्यथवा पशुः"॥

तेन हि स तां यथा यथाऽनुनेतुं प्रावर्तत तथा तथा तस्याः प्रणयकोपः समधिक एव प्रवृद्धो दृष्टः। अन्ततः कथञ्चिदनुनीता सा वशगतं पतिमधिकतरमेव वशमानेतुमेवं निजगाद—"नाथ, मम धर्षकस्य नामश्रवणेनालम्। श्रुत्वापि भवान्न किमपि प्रतिकर्तुं शक्नोति"। ततः स प्राह—"प्रिये, कथय तं नामधेयतः। येन प्रतिकर्तुं नूनं शक्नुमः। कुलूतानां प्रधानामात्यः स्वभार्याधर्षणं न कदापि सहिष्यते। को वा तादृशो जगति तिष्ठति यं दण्डयितुमसमर्थोऽहम्। न कोऽपि मां सामर्थ्येऽतिशेते। सत्वरं कथय तम्। येनाचिरादेव तस्य शिरो मे खड्गेन लूनं भुवि पतितं द्रक्ष्यसि"। एवं वादिना प्रवृद्धमन्युना पत्या भूयोभूयः सनिर्बन्धं पृष्टाऽपि सा कुटिला कुटिलप्रबन्धं न चिरेण वक्तुं प्रचक्रमे—"जीवितेश, यदहं विवक्षुस्तत् ते न रोचिष्यते। अपि च तं दण्डयितुं त्वं न शक्ष्यसि। तथापि यदि ते निर्बन्धः कथयामि। श्रूयताम्। कुलूताधिपस्तव सम्राट कामयते माम्। अभीक्ष्णं रहसि मामुपलक्ष्य प्रणययाचनां कुरुते। मया सह रन्तुं प्रयतते। अद्य यावत् कथमपि मया स्वशीलं रक्षितम्। इत ऊर्ध्वं तथाकर्तुं सर्वथाऽसमर्थाऽहम्। कलत्रत्राणे भवतः समय एव नास्ति। एवं प्राप्ते प्राणत्याग एव वरं न जीवनम्"। इति निवेद्योच्चैः प्रारोदीत्। अनेन परमविस्मितोऽमात्यः क्षणमिव विचार्य गम्भीरया वाचा ब्रूते—"विभावरि, अशक्यमेतत्। महाराजो नैतादृशः। प्रथितं किल तस्य चरितं जगति। नैतत्तत्र लक्ष्यते। न वा कोऽपि विश्वस्याच्छपथशतेन कथितमपि"। एवमादि ब्रुवतस्तस्य वचनमाक्षिप्य सा तमुक्तवती—"नाथ, प्रथममेव सङ्कल्पितं मया, मयि न ते विश्वास इति। परमेतदेव पृच्छामि तस्मिन्नुपकारिणि मिथ्यारोपेण मे को वा लाभः। किं मामीदृशीं कृतघ्नां गणयत्यार्यपुत्रः। भवतु। प्रत्यक्षीकरोत्वद्यैव भवान्। "राजकार्यवशादद्य सायं निभृतं ग्रामान्तरं गमिष्यामि। श्वः प्रत्यागन्तास्मि"। इति मिथो राज्ञे निवेद्य निगूढं मन्दिर एव तिष्ठतु भवान्। ततस्तवानुपस्थितिं समुपलभ्य नूनं स निशीथ एकाकी मन्मन्दिरं समागमिष्यति। ततो मे वचनं प्रत्यक्षमेव भविष्यति भवतः। अनन्तरागारात् सर्वं विलोक्यताम्। नान्तरोपस्थातव्यं भवता"। इति। अमात्येन 'तथा' इति प्रतिपन्नं तस्या कुलटाया वचनम्।

अनन्तरं कपटनाटकपटीयसी सा विभावरी स्वदासीमुखेन साम्रज्ं रहसि विज्ञापितवती—'तात, युष्माकमियं बालिका भवद्वचनमननुरुध्यमानाऽधुना स्वचापलस्य फलमनुभवति। गलितयौवनो जरठो मे भर्ता सदैव मां साधुवृत्तामन्यथा शङ्कते। संप्रति न मे जीविताशा। मरणात्प्राग् भवद्दर्शनमपेक्षते मे चेतः। दर्शनेनानुगृह्यतामेषा दुहितृकल्पा बालिका मुग्धा। अद्यैव मध्यरात्रे एकाकिना भवता मन्दिरं मे समागन्तव्यम्। प्रतिपालयामि भवदागमनम्"। इति। अनेन संदेशेन भूपतेश्चित्तं किञ्चिदिव संभ्रान्तम्। क्षणं विचार्य तेन यथाप्रार्थितं स्वदर्शनं तस्यै प्रतिश्रुतम्।

यथाप्रतिपन्नं पृथ्वीपतिरेक एव निशीथिन्याममात्यभवनं प्राप्तो दास्या तया निर्दिश्यमानमार्गो विभावरीमन्दिरं प्रविष्टः। समागतं नृपं वीक्ष्योत्थिता निर्विण्णव-

दनां तां करे धृत्वा प्रेम्णा नृपतिः स्वसमीप उपवेशयन्नवदत्—"अलमत्यादरेण। स्वकन्यकागेहे नेष्यत एवंविधमातिथ्यं पित्रा"। विभावरी तु नेत्राश्रूणि चेलान्तेन प्रमृजन्ती मन्दं मन्दमुवाच—"किं ब्रवीमि। विवक्षितं हि वक्तुं न मे वाचा प्रवर्तते। चेतस्याहितसंशयो मे भर्ता पितृसन्निभं भवन्तं बलवदाशङ्कते। श्रीमता समं संभाषणादिकमनपहरन्तीं मां सततं विप्रलभते। उपपादयन्तीं चापि सदैव प्रताडयते। भवदङ्कलालिताऽहं दर्शनं भाषणं च कथमिव परिहर्तुं पारयामि। मां पुंश्चलीं मन्यमानः सततं निर्भर्त्सयति पतिः। एवंविधायां दशायां जीवनान्मरणमेव वरम्। कृतनिधननिश्चयाऽनेन चरमेण भवद्दर्शनेन भृशमनुगृहीतास्मि"। इति ब्रुवाणैव समीपस्थां कक्षां झटिति प्रविश्य द्वारं दृढं पिहितवती। मरणव्यवसायात्तां नियंस्यन् भूमिपालोऽङ्गुल्या चिरं कपाटं प्राहरत्। परं सा न द्वारमुद्घाटितवती, न वा किञ्चिदपि प्रत्युत्तरं प्रदत्तवती। अन्ते निराशतां गतः प्रतिनिवृत्तः।

अनन्तरप्रकोष्ठे स्थितोऽपि ध्वनिप्रवेशप्रतिबन्धकत्वादश्रुतसंवादः सिंहनादः काचमयेन गवाक्षमार्गेण दूरेण केवलेन प्रेक्षणेनैव 'सत्यमेव सम्राट् स्वकामिनीं कामयते। मम ग्रामान्तरगमनं निशम्य तया सह रन्तुं तन्मन्दिरं प्रविष्टः। पतिव्रतया स्वभार्यया कथमपि स्वशीलं रक्षितम्। तया यत्कथितं तत्सर्वमवितथम्"। इत्यालोच्य क्रोधाध्मातोऽपि दयितावचनान्निरुद्धचेष्टो मन्त्रौषधिरुद्धवीर्यो भुजग इवान्तर्भृशमतपत्।

अथ निर्याते नृपतौ स वृद्धो युवत्या अगारद्वारं समागत्य तया द्वारमुद्घाटयामास। ततो रमणीवशग एव वञ्चितः स वृद्धमन्त्री तत्प्रेरितो रिपुसाहाय्येन स्वस्वामिनमुद्धर्तुं निश्चिकाय। स स्थविरः स्वराज्यनिष्ठां परित्यज्य, राजकुले भक्तिविशेषं दूरीकृत्य, स्वकर्तव्यं च विस्मृत्य स्त्रीबुद्धिः "निःसंशयं तव वचनं करिष्ये" इति तस्यै प्रत्यश्रृणोत्।

अथ बहुधनप्रदानेन हूणैः संधाय जातु सा विभावरी विभावर्यां कयाञ्चित् तत्सैनिकप्रवेशं निगूढं नगरे कारयित्वाऽनवधानतया सर्वे कुलूतसैनिकाः सहसा ग्राहिताः। सर्वत्र नगरे स्ववशगान् रक्षापुरुषान् स्थापयित्वा सकलं राज्यतन्त्रं स्वायत्तीकृतम्। अनन्तरं राजवधं चिकीर्षन्ती सा निभृतं राजगृहं प्रविष्टा। प्रथममेव विदिततत्कपटप्रबन्धो राजगुरू राजमन्दिरं प्रविश्य मूलसैनिकैः रक्षितमवरोधं सुरङ्गया नगराद्बहिः सुदूरं प्रेषयामास। तदनु च राजशयनागारं गत्वा गाढप्रसुप्तं भूवल्लभं प्रबोध्य नगरममित्रायत्तं श्रावयामास। आनीतानि च वस्त्राणि समर्प्य प्राह—"राजन्, राजवस्त्राण्यपतार्यैतानि च वासांसि परिधायास्मात् स्थानादविलम्बितमपक्रम्यताम्। पूर्वमेव मया परिवारः सान्तःपुरो मूलबलाभिरक्षितोऽपवाहितः"। इत्याभाष्यानिच्छन्तमपि तं धरणीधरं ततो बलान्निष्कासितवान्। निर्गतमात्र एव राज्ञि प्रविष्टा सा तत्र पुरोधसं वीक्ष्य राजानं चानवलोक्य व्यर्थश्रमत्वात् कुपितोज्जगर्ज। "रे ब्रह्मन्, क्वास्ति ते भूपतिः। दर्शय। नो चेत् त्वमचिरादेव न भविष्यसि"। इत्युदीर्य कृपाणपाणिस्तं हन्तुं प्रवृत्ता। तथाऽऽयान्तीं तां स सदर्पमाह—"रे कुटिले, अलमनेन साहसेन"। तस्य तेन वचसा वर्चसा च क्षणं स्तम्भिता सा किञ्चिदिव विचार्य "गृह्यतामयम्" इति सेवकानादिदेश। अनन्तरं कस्यापि शिरोविहीनं शवमुपलभ्य 'पुरोधसाऽनेन राजवधो विहितः" इत्युद्घोष्य तं कारायां रुरोध। तदनु च राजविहीने शून्ये राजसिंहासने प्रजानुमत्या स्वभर्तारं स्थापयामास। इत्थं च तया सम्राज्ञीपदमधिगतम्। चिराच्च सम्पन्नमनोरथाऽऽत्मानं

कृतकृत्य मेने। संचारिताश्च तया सर्वत्र राज्ञो राजपरिवारस्य चान्वेषणाय नानाव्यञ्जना प्रणिधय। आत्मन सम्राज्ञीवैभव दर्शयितुकामया तया राज्ये सर्वत्र सञ्चारो विहित.। पथि तु यदृच्छया महाराज्ञी यशोधरां विलोक्यालीकां भूपतिनिधनवार्तां श्रावयित्वाऽनुगमननिमित्तं तस्या अपि मरण साधयितुं प्रवृत्ता।

राजधान्या अपक्रान्तो नरपतिरङ्गनाजनविरुद्धेन तादृशेन विभावरीचरितेन चकितचकितोऽप्यनिमित्तेन प्रधानामात्यस्य तथाविधेन विश्वासभङ्गेन परं विषादमुपगतोऽसुरक्तं सुरक्तं विरक्तवेष विधाय निभृतं तत्र तत्र सञ्चरमाणः संगृहीतैर्गृहीतविरक्तवेषैर्वीरजनैरनेकशतसंख्यैः समं पौरेषु जानपदेषु चामात्येऽरुचि वर्धितवान्। संचरणशीलः स चितां प्रवेष्टुकामां महिषीमकस्मादवालोकयत्। न्यरौत्सीच्च। संप्राप्तशरीरस्वास्थ्यां तां जीवतो महाराजस्य श्रवणेन स्वस्थमानसां विधाय समुचितावधिना तद्दर्शनेन च भाविना तां विरक्तवेषधारी समाश्वासयत् अवासयच्च प्रच्छन्नं क्वापि गिरिगुहायाम्।

अथैकदा प्रजासु समुत्पादितोपजापः स विरक्तप्रमुखो राजवधापराधं निमित्तीकृत्य शूलमारोप्यमाण राजगुरु शुश्रूवान् प्राणव्ययेनापि स्वस्वामिन प्रियचिकीर्षया प्रयतमानैः प्रच्छन्नवीरै शतशो विरक्तैः सार्ध कुलूतराजधानीं समागः। यदि सत्यमेव राजगुरुणा महाराजस्य वध. कृतः, ततोऽयं महानधर्म। अस्मादृशैर्विरक्तैरपि धर्मप्रवणैः प्रजाजनै सहास्य विमर्शोऽवश्यं कार्यः। अस्मिन् विषये नोदासीनैर्भाव्यम्"। इत्युद्घोष्य तेन महती धर्मसभाऽऽकारिता। तत्र च नैके धर्माचार्याः, निखिलाः पण्डितप्रवराः, सशिष्या मुनय., सकला विरक्तपुरुषाः, एवमादयः सहस्राणि जना. सम्मिलिताः। विभावर्यपि सामात्या समुपस्थिता। राजगुरुरपि समुपस्थापितः। सर्वानुमत्या स च विरक्तप्रमुखः सभाध्यक्षपदे नियुक्त। तत्र प्रचलितायां न्यायसभायां 'राज्यलुब्धेन राजगुरुणा प्रबलेन शत्रुणा सधाय राजगृह निभृत प्रविश्य न. सुगृहीतनामधेयस्य महाराजस्य वधो विहित.। तदनु च स्वानुचरैस्तस्योत्तमाङ्गमपहारितम। गूढद्वारवेदिना तेनैव नगरे शत्रुबलप्रवेश. कारितः। विदितशत्रुबलप्रवेशया महाराजस्य प्रबोधनेच्छया राजभवनं प्रविष्टया मया सर्वमेतत् प्रत्यक्षीकृतम्। अनेनैव राज्ञोऽवरोधजनोऽप्यदर्शनतां नीत.। एतासां सर्वासामनर्थपरम्पराणामयमेव मूलकारणम। इति कृत्वैष प्राणदण्डेनायोजितः। न्याय्यमेतत्"।

इत्थं विभावर्या निवेदिते राजगुरुरब्रवीत्– "अयि भोः श्रेष्ठा सभाध्यक्षा, गरिष्ठाश्च सभोपस्थायिन, अलीकं सकलमेतत्। बाल्यात् प्रभृति सम्राज्ञीपदलंघनोत्सुक्यमेवास्य महतोऽनर्थस्य निदानम्। यदा महाराजेनास्याः पाणिग्रहणमवधीरित तदाऽनयैव वृद्धयाऽमुया वृद्धामात्येन सह परिणयो विहित। ततः, "महाराजो मां कामयते। बलाच्च रन्तु रहसि प्रवर्तते"। इत्यादिनाऽनृतवचसा महामन्त्रिणो मनसि सशयः समुत्पादित.। त च प्रत्याययन्त्या निशीथे सम्राडाहूत। अविदिततत्कपटप्रबन्धः स च ऋजुमतिस्तदागार रात्रौ प्रविष्ट.। प्रविष्टमात्राय तस्मै "तव महामन्त्री मां दुःशीलां मन्यते। आवां च सदैव शङ्कते। एवमपमानत्रस्ताऽह जीवितमुत्स्रक्ष्यामि"। एवमादि निवेदितम्। ततोऽश्र तत्संवादोऽनन्तरकक्षास्थोऽमात्य. पूर्वमेवाहितसंशयो मनसि सानुक्रोशं वात्सल्यात् तां वक्षसि कृत्वाऽनुनयन्तं भूपतिमन्यथाऽमन्त। तां च सर्वथाऽनुमेने। स्वाधीनपतिकामेनां निगूढ नगरेऽरिप्रवेश कारयित्वा राजवधप्रवृत्तां विदित्वा राजमन्दिरं प्रविश्य प्रथम

# चिन्ताकुलो लेखकः !

विद्याभूषणः प० श्रीगणेशरामशर्मा, साहित्यरत्नम्, ज्योतिषोपाध्यायः,
हिन्दीसंस्कृताध्यापकः, श्रीगजेन्द्र-इण्टर-कॉलिज, झालावाड ( राजस्थानम् )

वक्तव्यं कथमन्यथानुभवतः सत्यं शिवं सुन्दरं
मर्मस्पृक् च मिथो विरोधि सहसा तथ्यं च पथ्यं वचः ?
तत्त्वग्राहिणि ! मा विमुञ्च तरलं दृष्टिं प्रमाणाधिक
कान्ते, लेखनि ! हा ! सर्वाविस्मृतो !!! चिन्ताकुलो लेखकः ॥

स्वभावत एव ये निसर्गसिद्धाः क्रान्तिकारिणो युगपरिवर्तनकरा साहित्यस्रष्टारो भवन्ति लेखकास्ते सहैव गूढाभिप्रायवन्तो गम्भीरविचारकाश्चिन्तनशीलाश्च भवन्ति । कवयस्तु भुवि भावुका अनुभूतिप्रवणा ललितकलितानन्तकल्पनालोके यथेच्छं स्वच्छन्दं विचरन्तोऽभिनवां भुवनमोहिनीं नव्यां निर्मितिं विधातुं कोमलानि, मधुराणि, सरसानि च काव्यानि प्रतिभोन्मेषाद् भावोन्मादवशाच्च सृजन्ति । परं लेखको भूतकालीनं सर्वं करतलस्थामलकवज्जानन्नपि, वर्तमानजगज्जालसूत्रतन्तून् सूक्ष्मं विवृण्वानोऽपि स्वानुभवसिद्धान् विचारान् सिद्धान्ताश्रयप्रौढान् लिपिबद्धान् कुर्वन् लोकानामात्मनश्च भविष्यन्निर्माणे सावधानं विमृशन् भास्वरमक्षरं च साहित्यं स्रष्टुं चिन्तयति ।

कवयः क्रान्तदर्शिनो लेखकाश्च प्रत्यक्षं सूक्ष्मं निपुणं च पश्यन्ति किन्तु लेखकाः कल्पनापेक्षया स्वानुभवं बहुमन्यन्ते । सुदूरदृष्टयः परिणामदर्शिनोऽपीमे लेखकाः सदा सर्वदा सर्वतः सर्वजनैरनुभूयमानान् गूढान् गम्भीरानतिप्रौढान् विचारान् सटीकं, सटिप्पणं, मर्मस्पृक्, स्पष्टं च व्याख्यान्ति । अथ पुनः कविरात्मनो लोकस्य चान्तर्मानसमनुरञ्जयन्, आनन्दाह्लादसुखवादं समाश्रयति, मनोविनोदं च वितनुते । परं लेखकधुरीणो जगत्प्रपञ्चव्यवहारे जायमानाः सर्वा अपि मानसीर्वृत्तीर्निपुणं बुध्यन्नानन्दातिरिक्तं तिक्तं कट्वनुभवमपि याथार्थ्येन विश्लेषयन्नुपदिशति जनेभ्यो न्यायनीतिरससारसर्वस्वम् । तत्त्वमीमांसां विधत्ते, राष्ट्रधर्मान् प्रवक्ति, समाजचेतनोद्बोधं जागरयति, विचारविमर्शादानप्रदानसौकर्यं निर्दिशति, जीवनोत्कर्षसाधनाध्यव-

---

राजावरोधजनमपवार्य वेषान्तरं कारयित्वा भूमिगतं निभृतमतिसत्वरं हठाद्राजभवनान्निष्कासितवान् । अनन्तरं तत्र प्रविष्टेयमनधिगतभूगर्भनिर्माणा निगृहीतवती । न मया नान्येन वा केनापि राज्ञो वधः कृतः" । इति निगद्य विरतवचसि तस्मिन् सा कुटिला सकोपं प्रोवाच-"सर्वोऽपि कृतागा आत्मानं निरागसमेव प्रतिपादयति । स्वयं कृतं दुष्कृतं चान्यस्मिन् पातयति । आस्तां तावदेतत्सर्वम् । यदुक्तमनेन तत्सर्वमनृतम् । अस्माभिर्निर्णीतो दण्डो युक्त एव । अलमन्यथा विचार्य" । एवं भाषमाणा सा सभाया निर्यातुं प्रावर्तत ।

अत्रान्तरे सभाध्यक्षो झटिति निजवेषं परित्यज्य निजं रूपं प्रकटितवान् । तदनु सकला अपि विरक्ताः स्वं स्वं रूपमाविष्कृत्य शस्त्रपाणयः कृतकसम्राज्ञीं तस्या योधपुरुषांश्च सपदि न्यगृह्णन् । तत्क्षणं सम्राजं विजज्ञुषी सभा सकला क्षणमिव स्तम्भिता हर्षोत्फुल्ला चासीत् । अमात्यस्तु सर्वमेतत्स्वरमणीचरितं सदृश्य सव्रीडं सम्राजश्चरणयोर्न्यपतत् । तं च क्षमामयाचत । न केवलममात्यस्य परं विभावर्या अप्यपराधो महान् भूभुजा क्षान्तः ।

सर्वेऽवदन्—"अहो स्त्रियाश्चरित्रम्" ।।

साय्यं दृढयति, राजसमाजतन्त्राणि परिष्करोति, साहित्यसेवामर्यादां संस्थापयति, वाङ्मयविस्तारं तनुते, शांतिसन्देशान् वितरति, क्रान्तिवह्निज्वालास्फुलिङ्गकणान् विकिरति, भ्रान्तिमज्ञानं च निवारयति।

लेखको यथार्थवादमात्मनः कर्तव्यं निश्चित्य प्रजानां जीवनयात्रासु प्रकृष्टं दिग्दर्शनं, पथः प्रदर्शनं च करोति। स खलु 'हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्' इति तत्त्वतो जानन् तत् सत्यमपावृण्वानः सत्यज्योतिःसाक्षात्कारं कारयितुं प्रचेष्टते। लेखको दार्शनिको, विज्ञानवेत्ता, नेता, समाजसुधारकोऽन्यायद्रोही, ध्रुवमिदमित्थमिति ब्रुवन्, स्फुटवादी लोकान् कर्तव्येषु नियुङ्क्ते। साहित्यसेवाव्रतमाचरन् सर्वजनसमीहितं साध्नोति, विचारसम्पदं सुरक्षति, चिन्तनशीलानां जनानां मार्गनिदर्शनं विदधाति, योग्यकर्मानुष्ठानाय प्रेरयति च सक्षमान् मनुजान्। अतश्चिन्ताकुलो भवति लेखकः।

'कथमहं लेखकः स्याम्?' इति सर्वादौ समुदेति चिन्तनशीलता लेखकमस्तिष्के। लेखकत्वसिद्धयेऽसौ शिक्षां समाश्रयति, भूतकालीनैर्वर्तमानैश्च लेखकैर्विचारकैश्च सहात्मनो मानसं विचारविनिमयसम्बन्धं परोक्षं प्रत्यक्षं च संस्थाप्य तदनु लेखनोपादानसम्पदं सङ्गृह्णीते। रहस्यमयं, विचित्रं, विभिन्नवृत्तिवृत्ताकारप्रकारं जगदेतत् सूक्ष्मं निरीक्ष्य तत्स्वरूपं वास्तवमनुभवशक्त्याभिव्यङ्क्तुमुत्सहते, प्रवर्तयति चात्र कर्मणि द्विजिह्वां कुशलां लेखनीं, पञ्चाङ्गुलीनामैक्यसाधनया खल्वेकाग्रतासमाधियोगमभ्यस्यति! कविर्जगतः सौन्दर्यं व्यावर्णयति, परन्तु लेखकः सारासारौ विविच्य निर्मथ्य च मनीषामात्मनोऽनुभवसिद्धानव्यभिचारिणोऽभिप्रायान् व्यनक्ति। सत्यं, तथ्यं, पथ्यं च तत्त्वं मीमांसितुमुल्लसति लेखकस्ततोऽसौ सावधानः सतर्को जागरूकश्चिन्ताकुलश्च बोभूयते।

साहित्यपरिष्कारं कुर्वाणोऽपि च लेखको हंसक्षीरन्यायमाश्रयन् समालोचयति निर्भीकम्, विकृतां समाजव्यवस्थामनुदारां कार्यपद्धतिं प्रति क्षोभमात्मनः प्रकटयन्नपि नवनिर्माणाभ्युपायान् प्रस्तौति, समुन्निनीषते लोकानां जीवनस्तरोन्नतिविषये स्फीतां, विशुद्धां, प्रबुद्धां च दृष्टिम्, भ्रष्टाचारान् रुणद्धि, लेखन्यग्राङ्कुरै राजनीतितन्त्रधुरमुत्तोलयितुमुत्सहते। एकान्ते निवसन् सुखं स्थिरमासनं निपद्य नेतृत्वं प्रौढं व्यक्तित्वं च कामयते निष्कामम्। सिद्धासनः सिद्धलेखनीको लेखकः किल सर्वजनशिक्षादीक्षासंस्कारदाने स्वस्याचार्यत्वमुत्तरदायित्वं सुयोग्यं मन्यमानो राष्ट्रस्याग्रदूतत्वमभिलषति, दुर्धर्षां विचारक्रान्तिमभूतपूर्वां प्रवर्तयति, लोकविप्लवं स्थगयति, प्रजानामभ्युदयं, क्षेमं, कुशलं, कल्याणं, सुखमारोग्यं, स्वास्थ्यं, मङ्गलं, श्रियं, सम्पदं, विद्यां, शांतिं च कामयमानश्चिन्तयति गभीरमुपायांस्तांस्ताञ्छुभोदर्कान् प्रयत्नान्, सार्वजनीनोत्थानवादांश्च श्रयति; ततोऽसौ मर्मस्पृक् वदति, प्रभावजुष्टमाचरति, निष्पक्षपातं निर्णीते, स्वमनोमन्थनसम्भूतं वाङ्मयं सारभूतं नवनीतमिव प्रयोगशास्त्रसिद्धं सञ्जीवनं रसायनमिव वितरति प्रजानां पुष्टये तुष्टये च!

सत्यसिद्धान्तान् समाश्रयँल्लेखको राष्ट्रसमाजसाहित्यसेवासाधनविधौ सर्वस्वार्पणमात्मोत्सर्गं बलिदानं च समर्थयते। रूढिवादं तिरस्कुर्वन् अपि त्रिकालाबाधितां सनातनीं मर्यादां समभिरक्षितुं प्रयतते, व्यक्तिपूजामपमन्यमानोऽपि गुणविशिष्टेषु महामानवेषु सेवासपर्यां समाचरन्मोमुद्यते, श्रद्धाजडत्वमपाकुर्वाणोऽपि देशभक्तिं भजति, तन्त्रशैथिल्यमाक्षिपन्नपि सहयोग-

# अस्य युगस्य वञ्चनाचातुर्यम् !

श्रीकृष्णदत्तशर्मा शास्त्री, बी० आर० ट्रेनिंग कालेज, आगरा

द्वे नार्यौ वस्त्राणि क्रेतुमगच्छताम्मयराष्ट्रनगरे (मेरठ) एकस्मिन् वस्त्रापणे। तत्र प्रसिद्धवस्त्रविक्रेतुरेकस्य समीपे गत्वा ते अतिष्ठताम्। ते तत्र दृष्ट्वा स वणिक् उवाच 'मातरौ! किमिच्छथ ?''

एकाह—''क्षौमवस्त्राणि क्रेष्याव। अतस्तान्येव दर्शनीयानि।''

वणिक्—(असख्यानि बहुमूल्यवस्त्राणि तयोः सम्मुखे संस्थाप्य) ''यानि वस्त्राणि युवाभ्यां रोचन्ते तानि ग्रहीतव्यानि।'' ताभ्यामनेकानि बहुमूल्यवस्त्राणि गृहीतानि। वस्त्राण्यादाय तयोरेकोवाच—वस्त्रादानात्पूर्वं गुरुजनानामाज्ञा विचारणीया। अतो मया गृह गन्तव्यम्। श्रुत्वेद सानुमोदिता तेन वणिजा। सा स्वसखीं पुत्रवतीं तत्रैव विहाय तानि वस्त्राण्यदाय ततोऽगच्छद् गृहम्। बहुकालो जात। परन्तु सा नायाता। सा पुत्रवती नारी निजसखीमनागतांदृष्ट्वा तं वस्त्रक्रेतारमवदत्—''न जाने किम् घटितम् ? कथन्नायाता सा ? मया सा प्रतीक्षिता, परञ्च नायाता। अतो मया ज्ञातव्यन्तस्या अनागमनकारणम्। इदमुक्त्वा सा स्वपुत्र तत्रैव स्थापयित्वा त वस्त्रविक्रेतारमवोचत्—पुत्रोऽयम्मे शेतेऽत्र। ममानुपस्थित्यामसौ यदि विनिद्रो भवेत्तदा त्वयायम् रक्षणीयः।'' ततो गता च सा।

होराद्वय जातपरञ्च नैकापि समायाता तयोः। नापि स शिशुरेव प्रबुद्धोऽभवत्, तदा सः बणिक् संशयारूढो जात। सः तस्य शिशोर्मुखाधानमपसार्य तं दृष्ट्वा चोच्चै प्रारोदीत्—अकथयच्च—''हा! हा! हतोऽस्मि, वञ्चितोऽस्मि ताभ्याम्। नायं शिशु। नायं जीवितो बालः। अयन्तु 'रवड़' इत्याख्यस्य द्रव्यविशेषस्य 'बबुआ' अस्ति।

( २ )

कलिकातानाम्नि नगरे लब्धप्रतिष्ठो वर्तते एकः स्वर्णकार। तस्य व्यापारो विदेशेष्वपि विस्तृतोऽस्ति। तस्मिन्नेव नगरे श्रेष्ठ्यप्येको निवसति। तस्य श्रेष्ठिनः पत्नी व्यवहारकुशलातीव धूर्ता चास्ति। तयोः मुद्राः राजकीयमुद्रागारे (बैंक) न्यस्ता सन्ति।

एकस्मिन्नहनि सा स्त्री मुद्रागारे गता। तया लक्षद्वयात्मिका मुद्रा गृहीतास्ततः। मुद्रादाता कर्मचारी तया तासाम्मुद्राणां क्रमाङ्कान् लिखितु प्रार्थितः। तेन कर्मचारिणा क्रमाङ्काः लिखिताः तासाम्।

अन्यस्मिन् दिने स्वर्णकारस्यापणे पुरुष एक अमूल्यानि रत्नानि क्रेतुमाजगाम। तेनामूल्यानि रत्नान्यनेकानि दृष्टानि। तेषु तेन कानिचिद्रत्नानि निर्वाचितानि, येषाम्मूल्य लक्षद्वयं जातम्। पुरुषस्त स्वर्णकार-

---

भावनां दृढयति, नवनिर्माणोत्साहे साहस विदधदपि भोगपरायणतामधिनायकत्वमेकाधिकार, विचारसङ्कीर्णतामन्धविश्वासं, वर्गसङ्घर्षवाद, कूटज्ञतां, मिथ्याप्रवाद, कार्पण्य, प्रमादमालस्य, दुःशीलत्व, चारित्र्यदौर्बल्यमौढ्यत्य, देहाभिमान, भौतिकार्थवादांश्च समूलमुत्पाटयितु प्राणपणं चेष्टते। सभ्योऽपि, सुसस्कृतोऽपि, सक्षमोऽपि, मनुष्यताभक्तोऽपि, मर्यादामनुपालयन्नपि, सरलोऽपि, व्यग्रतारहितोऽपि च सदासर्वदा जगद्धिताय चिन्ताकुलो भवति लेखक ॥

# पं० लक्ष्मीकान्तनाडकर्णीमहोदयानां संस्कृतभाषणम्

संस्कृतविश्वपरिषदः द्वितीयाधिवेशने राष्ट्रपतिभिः राजेन्द्रप्रसादशर्मभिः प्रतिपादितम्—"अस्माकं संस्कृति साहित्यम् प्रादेशिकभाषाः कलामतप्रभेदाः इतिहासाश्च इत्येव सम्पूर्णजीवन संस्कृतज्ञानेन विना अस्मदर्थं अबुद्ध-अज्ञात-प्रहेलिका इव स्थास्यति।" इति। पं० गाडगिल शर्मभिः च एकस्मिन् समये कथितं—स्वसंस्कृतिपरिचयार्थम्, तत्संवर्धनार्थं, जीवनशुद्ध्यर्थं चारित्र्यसंवर्धनार्थं, भाषाविकासनार्थं न केवल एतावदेव, परंतु राष्ट्रैक्यसाधनार्थमपि संस्कृतस्य विद्यते अत्यावश्यकता, अनिवार्यत्वेन अध्यापनम्, यत् सांप्रतं उपेक्ष्यते इति। महाभागैः राष्ट्रपतिभिः गाडगीलवसन्तशर्मभिः च अस्मिन् सदर्भे मे मतैक्यं विद्यते।

संस्कृतवाङ्मयमहोदधेः सम्यग्मंथनेन न केवलं वेदब्राह्मणोपनिषत्स्मृतिइतिहासकाव्य-इत्यादीनां ज्ञानमुपलभ्य किंतु वर्ण-लेखनव्याकरणव्यवहारज्योतिषवैद्यकधर्मपुराणवस्तुशास्त्र-अंकगणितबीजगणितभूमिति-अर्थशास्त्रराजनीति इत्यादीनां सन्निपातमपि सम्पादयितुं शक्यं भवति। एवंविधायाः सर्वाङ्गसुन्दरभाषायाः महत्त्वस्मरणात्प्रश्नः समुत्पद्यते, अनया भाषया व्यवहर्तुं वक्तुं शक्यं अशक्यं वा। देवकालिकी भाषा सुलभा

---

मकथयत् यदि त्वं रत्नविक्रयस्य प्रमाणपत्रं (रसीद) ददासि तदा तु द्वयोरेव हानिर्भविष्यति। मया 'विक्रयकरः' तथा त्वया 'आयकरो' दातव्यः स्यात्।

तेन हेमकारेण सोऽनुमोदितः। उवाच च त्वया सम्यगुक्तम्, एतदेव करणीयम्। कृतमप्येवमेव ताभ्याम्। पुरुषः स विना विक्रयपत्रमादाय रत्नानि गृहीत्वा, लक्षद्वयात्मिकाः मुद्राः दत्वा च यानारूढो (मोटरकार) भूत्वा गृहं प्रत्याजगाम।

तदैका स्त्री रत्नानि क्रेतुमागमत्। तयापि लक्षद्वयमूल्ययुक्तो रत्नहार एकः क्रीतः। तया विक्रयपत्रम् लब्धुमिच्छया स स्वर्णकारस्तद्दातुमादिष्टः। तेन विक्रयप्रमाणपत्रं दत्तम्। प्रमाणपत्रं स्वायत्तं कृत्वा सा यानारूढा जाता। यातुं समुद्यता सा तेनावलंकिता। स तस्या रत्नहारमूल्यमैच्छत्। परन्तु तयोक्तम्—"मया मूल्यम् दत्तम्।" सः कथयन्नासीन्न दत्तन्त्वया।

तयोः कलहो जातः। सा त भर्त्सयन्ती तत्र राजपुरुषाणामुपस्थितिमैच्छत्। राजपुरुषाः आययुः। तैः स्थितिः परीक्षिता। सा तु कथयन्ती आसीत् मया मूल्यं दत्तम् परन्तु स कथयन्नासीन्नानया दत्तं किञ्चिदपि। तयोक्तम्—मया लक्षद्वयं रूप्यकाणां दत्तम् येषाम् क्रमांका अपि सन्ति इमे। तया क्रमांका आख्याता। ते राजपुरुषैर्निवेदिता सा दातुं प्रमाणम्।

निवेदितन्तया—"मयाद्यैव लक्षद्वयात्मिकाः मुद्राः राजकीयमुद्रागाराग्निष्कासिता', तत्र तासाम् क्रमांकाः कर्मचारिणा अनुलिखिताः। ता एव मुद्राः मयास्मै दत्ताः। ताः वर्तन्ते कोपे अस्य। भवद्भिरन्वेषणीयाः।" तैः तया कथितं लक्षद्वयमन्वेषितम्। तथा तासाम्मुद्राणाम् क्रमांका अपि तैः राजमुद्रागारात्परीक्षिताः। त एव क्रमाङ्काः आसन् यत्क्रमांकाङ्किताः मुद्राः तत्रासन्। सः स्वर्णकारस्तैर्धृतस्तथा कारागारे प्रेषितः। सापि गृहं जगाम।

यद्यपि तया न दत्तं किञ्चिदपि, परञ्च तस्य स्वर्णकारस्य पार्श्वे नासीत् किमपि प्रमाणपत्रम्। पुरुषोऽसौ, येन विना विक्रयप्रमाणपत्रं मूल्यं दत्तं, रत्नानि च गृहीतानि, स आसीत्तस्याः स्त्रियाः पतिः।

अकृत्रिमा च। दिनेषु गच्छत्सु वृद्धिगतव्याकरणशास्त्रविशारदानां पाण्डित्यप्रकर्षेण नूतनधातुसाधितैः शब्दप्रयोगैश्च वेदकालीनभाषायाः रूपान्तरं अनिवार्यं जातम्। पाणिनेः नियमबंधनात् अस्याः भाषायाः संस्कृत इति संज्ञा जाता। दण्डिनः काव्यादर्शे पुनरपि इयं हि संज्ञा। आर्यावर्ते प्रचलिता हि संस्कृतभाषा। न केवलं विद्यापीठेषु विद्वद्गोष्ठीषु वेयमुपयोजिता किन्तु इतरे जना अपि संस्कृतभाषायां व्यवहारं कुर्वाणा आसन्। नाटकेषु स्त्रियः हीनपात्राणि च प्राकृतस्य उपयोगं चक्रुः। संस्कृतभाषाप्रवीणैः भाषाप्रकर्षैः सामाजिक-आर्थिक-उच्चतरस्थानं प्रतिष्ठा च समासादिता। इतरेषां तु नीचस्थानसमुत्पन्नः मत्सरः वृद्धिं गतः। पाश्चात्त्यदेशेषु अपि लॅटिनभाषायाः ईदृशी एव स्थितिः। धर्ममंडलस्था विरोधप्रदर्शिका आंग्ल-फ्रेंच-इटालियन इत्यादयः तत्र प्राकृतभाषाः समुत्पन्नाः। भारते कालक्रमेण क्रांतिकारकः प्राकृतभाषाणां उद्गमः। संस्कृतभाषायाश्च क्रमेण व्यवहारे लोपः अनिवार्यतया समभूत्। परन्तु प्राचीनलोकभाषायाः अस्याः सापेक्षत्वं युक्तस्वरनिर्गतिः अन्त्यस्वरयोजना च प्राकृतभाषासु दृश्येते। आद्यवार्द्धिकहीनयानपद्धतिग्रथाः प्राकृतभाषायां रचिताः। महायानपद्धतिग्रथास्तु संस्कृतभाषायाम् प्राकृतशिलालेखेषु अपि, क्वचित् संस्कृतभाषायाः अन्तर्भावः। प्रायेण तु प्राकृतभाषाणां विकासः वर्धमानासु दृग्गोचरः। अपभ्रंश-शौरसेनी मागधी-अर्धमागधी-महाराष्ट्री-पैशाची अवती इत्यादयः प्राकृतभाषा व्यवहारे सरूढाः। तासां स्वरूपं न विभक्तिकार्यप्रचुरं किन्तु वाक्यपदपृथक्कृतिमयम्। प्राकृतभाषाविकासप्रारम्भकालात् नवशतकानि पूर्णानि। एवंविधरूढेः बलात् निर्मूलनं अद्य अशक्यमेव। पाश्चात्त्यदेशेषु लॅटिनभाषायाः ईदृशी एव स्थितिः। केवलं धर्मविधिषु संस्कारकार्येषु क्वचित् न्यायदानसभासु च केवलं अस्याः उपयोगः। आंग्लभाषालोपात् अस्माकं राष्ट्रभाषा हिन्दी इति घटनायां निश्चितम्। पूर्वोक्तकारणैः व्यावहारिकदृष्ट्या संस्कृतभाषा राष्ट्रभाषा भवितुं अर्हति इति न संभाव्यम्। किन्तु इदं निःसंशयमेव यत्संस्कृतभाषा संश्रयद्रुमः प्राकृतभाषास्तु लता इव। उक्तं हि- अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरी इति। एवंविधमहत्त्वसंपन्नायाः शब्दसंपत्समृद्धायाः संस्कृतभाषायाः ज्ञानं लाभकारकं एव। वर्तमानेन कालेन वर्तयन्ति विचक्षणाः इति साधु वचनम्। तदस्माभिः अनुसर्तव्यम्। परिस्थितिं अविचार्य कृतः क्लेशः निष्फलतां व्रजति। परिस्थितिविपर्यासस्तु दुष्कर एव। परन्तु प्रत्यहं उचितेषु संस्कृतभाषायाः उपयोगः न शक्यः इति विषादः न कर्तव्यः। संस्कृतभाषाध्ययनं जीवनहितवर्धकं लोकयात्रार्थसाधकं लोकसंग्रह-समाज-धारणवृद्धिकारकं निर्विवादमेव। देववाणीमूल्यमापनं केनापि कविना वर्णितं हि—

केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वलाः,
न स्नानं न विलेपनं न कुसुमं नालंकृता मूर्धजाः।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते,
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम्॥

मङ्गलदेवशास्त्रिभिः भारतीयसंस्कृतेः कानिचिद्वैशिष्ट्यानि प्रतिपादितानि। तानि—आध्यात्मिकी भावना, पारलौकिकी भावना, आत्मसंयमः, मातृसंमाननं, परस्परं विचारसहिष्णुता च भवन्ति। एतेषां परिपालनं अस्माकं कर्तव्यम्। भारतीयसंस्कृतिः तत्कालभेदेन तत्तदवस्थितिभेदेन विविधप्राकृतभाषावैपुल्येन च भिन्नापि गङ्गायाः धारेव सततं प्रगतिशीलापि एकसूत्ररूपेण वर्तमाना स्वस्या एकात्मतां पवित्रतां च न जहाति।

अत एव भारतवर्षे चिराय प्ररूढासु अनुदारसांप्रदायिक-भावनासु विद्यमानासु अपि तत्वविदो विचारशीलाः विद्वांस परोक्षप्रियाः देवाः प्रत्यक्षद्विषः इति श्रुतेरादेशमनुसरन्तः इव तेषु तेषु सम्प्रदायेषु व्यापिन्याः एकस्या भारतीयसंस्कृते भावनया एव भावितचित्ताः उदार-हृदयाः सर्वत्र समदृष्ट्या न कुत्रापि सम्प्रदाये पक्षपातिन. भवन्ति न च अन्यायेन कदाऽपि व्यवहरन्ति । परस्पर विचारसहिष्णुता बहुमूल्या । भगवद्गीतायामपि अन्तिमे अध्याये विचाराचारमुक्तिवर्णन-विमृश्यैतदशेषेण यथेच्छसि तथा कुरु । इति ।

प० गाडगिलवसंतशर्मणां प्रचारसाफल्यद्योतकं इद मंडल संस्थाप्य युष्माभिः ऐतिहासिके अस्मिन्करवीरपत्तने महत्कार्यं सम्पादितम् । यद्यपि युष्माक प्रारम्भे स्वल्पक्षेत्रविशिष्ट अधिष्ठानं लब्ध तथापि कालक्रमेण लोकप्रेम्णः विस्तृततर अन्यस्थानं अनिवार्यमेव स्थास्यति । केलकर-कवीश्वर-गाडगीलशर्मभिः उपलब्धं करवीरपत्तनस्थ-संस्कृतभाषाभिमान-सदभिरुचि-महत्वाकांक्षेतिहासं ज्ञात्वा भृशं प्रमोदितं मे मनः । श्रीमच्छङ्कराचार्यैः स्थापितं करवीरपीठं बहुश्रुत हि । छत्रपतिभिः शाहुमहाराजैः अपि बहुजनसमाजे वेदविद्याप्रचारकार्यार्थं वैदिकशालागृहं स्थापितं । प० राशिवडेकर अप्पाशास्त्रिभि मासिक-मुद्रितसंस्कृत-चन्द्रिका-अभिधान-पत्रिकाया पुनरुज्जीवन कृतम् । तथैव सूनृतवादिनी-नाम्नी पत्रिका अपि प्रारम्भिता । पं० बालाचार्यखुपेरकरशास्त्रिणः तथैव आस्थानपडिताः जेरेशास्त्रिणः विद्यालङ्कारधारिणः । राजाराम-महाविद्यालय-संस्कृतभाषा-प्राध्यापकैः ग. श्री. हुपरीकरैः तथा डॉ श्रीखडेभिश्च ग्रन्थलेखनरूपेण संस्कृतवाङ्मयस्य स्तुत्या सेवा कृता । दीर्घप्रवासिनः व्यवहारदक्षाः संस्कृतभाषामर्मज्ञा, अस्माक सर्वेषां प्रियाः गाडगीलवसन्तशर्माणः मूलतः करवीर-निवासिनः इति स्वयमेव महादरभावनया प्रस्थापयन्ति । मण्डलस्य कार्यकर्तारः उत्साहपूर्णाः अङ्गीकृत-कार्यनिर्वाहनिपुणा वाङ्मयरसिकाश्च । तेषां सर्वेषां वय सर्वे उपकृताः स्मः । योग्यं सहकार्य च दत्वा तेषां सङ्कल्पसिद्धि वय सुलभां करिष्यामः । तेषा विविधकरणानि पृथक्चेष्टाश्च प्रशसनीया एव भवन्तु । दैवमपि तेषां नित्यं अनुकूलं एव भवतु इति अस्माकं सर्वेषां श्रीगणेशाय प्रार्थना । दिनेषु गच्छत्सु शाला विश्वविद्यालयेषु छात्राणां संस्कृतभाषायां वर्धमान अभिरुचिलोप प्राध्यापकेभ्यः ज्ञात्वा नितरां विषण्ण मे मन, मया पूर्व कथितं हि यत् संस्कृत-भाषा सर्वासां भारतीय-भाषाणां संश्रयद्रुमः । तस्य संश्रयद्रुमस्य संरक्षण अस्माक सर्वेषां पवित्रं कर्त्तव्यम् । तस्मिन्न भवतु कदापि दोष । भौतिकव्यवहारेषु नैपुण्यं आध्यात्मिकप्रगति-संहति-शान्तिमूलिका सात्विकवृत्तिप्रधाना संस्कृतिराजनीति—विषयकज्ञानेन इय भाषा सुसमृद्धा अस्ति । तस्यां प्रावीण्य-सम्पादने छात्रैः कृतः क्लेशः कदापि निष्फलो न भविष्यति । राष्ट्रभाषा-हिन्दी अपि संस्कृतभाषामूलिका एव । संस्कृतभाषाया ज्ञानेन हिन्दीभाषायां प्रावीण्यं सुलभमेवेति निश्चिततत्वेन प्रतिपादयामि ।

पुनरपि अद्य उद्घाटितस्य करवीर-संस्कृत-प्रसारक-मण्डलस्य सदैव शुभेच्छाः दत्वा करवीरनिवासिभिः अस्य मण्डलस्य वृद्ध्यर्थे बद्धपरिकरत्वेन वर्तितव्यं इति आशां प्रकटीकृत्य सुखकर्तार, दु खहर्तार विघ्नघ्नं ज्ञानदायक श्रीविनायक नमस्कृत्य—"सा नः पातु सरस्वती भगवती निःशेषजाड्यापहा" । इति च प्रार्थ्य युष्माक सर्वेषां सुहृदां सावधानमनसा मद्भाषणं श्रुत इति धन्यवादं कृत्वा—

सा नो माता भारती भूर्विभासतां—इति च प्रेम्णा प्रघुष्य विरमामि अहम् ।

# भारतीयानां मन्त्रविद्याविज्ञाने ह्रासः

भिषग्मणि, प्राणाचार्य, वैद्यमणिरामशर्मा गौडः श्रीगंगानगर

वेदेषु शास्त्रेषु पुराणेतिहासेषु च मन्त्रविद्यायाः महद् आश्चर्यकरं वर्णनमुपलभ्यते। मन्त्रप्रभावेण रावणादिराक्षसा अजेया अभवन्। मार्कण्डेयादि-ऋषिगणा मृत्यु तरित्वा अमृता अभवन्। दशरथ-द्रुपदाद्या राजानः पुत्रान् लेभिरे। मन्त्रबलेन सञ्जयः दूराद्दर्शन श्रवण चाकरोत्। यथा साम्प्रत आकाशवाण्या [रेडियो द्वारा] जना श्रवणमात्रमेव कर्तुं शक्नुवन्ति। प्राचीनकाले मन्त्रबलेन शत्रून् हन्तुं समर्था आसन्। तथा मृतान् जीवयितुमपि समर्था बभूवु। यदा कलि-व्यामोहितेन परीक्षिता ऋषिकण्ठे सर्पो निक्षिप्तस्तदा कुपित. ऋषिकुमार परीक्षित शशाप। तेन च मृतः परीक्षित् सम्राट्। येन सर्पदंशेन नृपः पंचत्वं यात. स सर्पः ब्राह्मणरूपं विधाय मार्गे गच्छति स्म। तदा मन्त्र-विद् महाविद्वान् काश्यप. मिलितः। विषवेशस्थेन सर्पेण पृष्ट, भोः! कुत्र गच्छन्ति भवन्तः? उक्त च काश्यपेन - श्रुतं मया, केनचित् सर्पेण राजा परीक्षित् दष्टः, तेन राजा परीक्षित् मृतश्च। अत. मृत नृपं पुनः सप्राण जीवित वा विधाय, पारितोषिकरूपेण पुष्कलं धनं लप्स्ये।

सर्पेण चोक्तं—किं भवान् मृतं नृपं जीवयितुं क्षमः? काश्यपेन बाढमित्युक्तम्। तदा सर्पेण कश्चित् वृक्षो दग्ध्वा भस्मसात् कृतश्चोक्त यदि चेत् शक्तिरस्ति तर्हि वृक्षं जीवय। तदुक्तं महाभारते—तत. स विद्वान् भगवान् काश्यपो द्विजसत्तम. भस्मराशीकृत वृक्ष विद्यया समजीवयत्। अहो किमाश्चर्यमतः परम्। सर्पदष्टचिकित्सा वेदेष्पुपलभ्यते यथा—वचोभिः उग्रैः निरिणामि ते विषम्। अथर्ववेदे। इत्यादि बहवः मन्त्रा वेदेषु सन्ति। महर्षिसुश्रुतेन स्वकीयसंहितायां उल्लिखित—"देवब्रह्मर्षिभिः प्रोक्ता मन्त्रा सत्यतपोमया। भवन्ति नान्यथा, क्षिप्रं विष हन्युः सुदुस्तर। विषं तेजो-मयैर्मन्त्रैः सत्यब्रह्मतपोमयैः। यथा निवार्यते क्षिप्रं प्रयुक्तैर्न तथौषधैः।"

यस्मिन्समये औषधप्रयोगेण विषस्य चिकित्सा विफला भवति स्म, तदा मन्त्रबलेन मृतान् जीवयन्ति स्म। किन्तु वृद्धवाग्भटकाले मन्त्रशक्ति किञ्चित् शिथिला संजाता उक्त च तत्र—विष प्रति विष योज्यं तत्रैर्मन्त्रैरसिध्यति-अतीते पंचमे वेगे सप्तमस्यानतिक्रमे, प्रभो निवेद्य प्रयते नैव व्याख्याय कस्य चित्। सुश्रुतस्तु यथा मन्त्रैः क्षिप्र विषं निवार्यते तथौषधैः प्रयुक्तैः न विष निवार्यते इति मन्यते। किन्तु वृद्धवाग्भट्टः मन्त्रैः तंत्रैः निष्फलैः सद्भि विषंप्रति विष योज्य, इत्याह। किन्तु भावमिश्रकाले मंत्रशक्तिः सर्वथा विलुप्ता संजाता, अतः भावप्रकाशे विषस्य विषमौषधम् इत्युक्तम्। साम्प्रत तु मंत्रचिकित्सायाम् विद्वत्समाजे विश्वास एव न। तथापि क्वचिद् क्वचिद् मंत्रचिकित्सकाः महदाश्चर्य कुर्वन्ति। विंशतिवर्षात् पूर्व मया पांचालदेशे दृष्टं एक ग्रामीण सर्पदष्ट डाक्टरैः परित्यक्तं। एको हरिजनो मृतवत् संज्ञाशून्यं तं ग्रामीण मंत्रबलेनाजीवयत्।

केचन मंत्रज्ञा इदानीमपि केवल मन्त्रबलेन रुग्णान् निरोगान् कुर्वन्ति, अपुत्रकांश्च मन्त्रबलेन पुत्रयुक्तान् विदधति। अहो क्व सा मन्त्रविद्या साम्प्रतं अस्माकम्। अधुना तु सर्वत्र आडम्बरं, धर्मविडम्बना दरीदृश्यते।

# गीतामृतं पीयताम्

परशुरामशास्त्री, श्रीरामानुजसंस्कृतमहाविद्यालयः डीडवाना, राजस्थान

मा रोदी:, किमहं करोमि विपदां जालैः समन्ताद् वृतः
इत्थं कर्मविपाकमात्मविहितं रात्रिन्दिवं चिन्तयन् ।
कर्मण्येव तवाधिकार इति चेन्निश्चित्य धर्मान्वितम्
कृत्वा कर्म लभस्व शान्तिमतुलां "गीतामृतं पीयताम्" ।। १ ।।

चाञ्चल्यं मनसोऽवशित्वमपि चेदित्थं गवां बाधते
त्यक्त्वा धर्मपथं च शुद्धधिषणामुन्मार्गगश्चेदसि ।।
भिन्नं चेत्तव मानसं धनपरैर्धर्मध्वजैः पातकैः
दूरीकर्तुमशेषदुःखनिवहं "गीतामृतं पीयताम्" ।। २ ।।

भो! भो मानव मानवोऽस्यनुपमां प्राप्यापि बुद्धिं पराम्
अज्ञानावृतचेतसा बलवतीं यातो दशां पाशवीम् ।
चातुर्यं परिचिन्त्य चेतसि निजं यातः कथं दीनताम्
लब्धुं शाश्वतिकीं च शान्तिमधुना "गीतामृतं पीयताम्" ।। ३ ।।

विश्वं विश्वमिदं जनार्दनकृतं तेनैव सञ्चालितम्
यत्किञ्चित्क्रियते जगत्यनुपमं दुःखं यथा वा सुखम् ।
तत्सर्वं तदधीनमेव क्रियते सर्वत्र चास्ते हरिः
कृत्वा कर्मपरां निजां मतिमतो "गीतामृतं पीयताम्" ।। ४ ।।

---

अपूज्याः पूज्यन्ते, धर्मशास्त्रशून्याः गुरवः गर्जन्ति । रक्तांबराच्छन्ना विषकुंभपयोमुखा धूर्ता जनान् प्रतारयन्ति । पातिव्रत्यधर्मस्य नाममात्रेण नार्यः कुप्यन्ति, समानाधिकारस्य उद्घोषं घोषयन्त्यो रोषं प्रदर्शयन्त्यो धर्मनिन्दन्त्यः पुरुषान् प्रति वक्रदृष्ट्या विलोकन्ते पाश्चात्यसंस्कृतिसंस्कृताः पुत्राः शिष्याश्च पितरं गुरुं च दूषयन्ति भर्त्सयंति च । अस्माकं शासनसूत्रसंचालकाः शासकाः भारतीयं गणराज्यं धर्मनिरपेक्षमस्तीति उच्चैः उच्चरन्तः सन्तः किमपि गौरवमनुभवन्ति । वराकाः सद्वृत्ताः साधवः दीनहीनदशायां युगधर्मं विचिन्त्य क्लेशान् सहन्ते । नीतिधर्मस्य बंधनानि भग्नानि । अनियन्त्रितसमाजव्यवस्था प्रतिदिनं अधोऽधो याति । देशे भ्रष्टाचाराः अत्याचाराः अनाचाराः विवर्धन्ते न कोपि किमपि कर्तुं शक्नोति । बलीयसी केवलमीश्वरेच्छा ।

# सम्पादकीयम्—

**आयुर्वेदश्च वर्तमानभारतं च**—वेद-उपनिषत्-स्मृत्यादिभिर्यथा प्राचीनानामार्याणां महत्त्वं सर्वस्मिन् भूमण्डले स्थापितमभूत्, तथैव प्राचीनै ऋषिभिर्दिव्यज्ञानेन सर्वाङ्गपूर्णीकृतः सोयमायुर्वेदोऽपि प्राचामार्याणां गौरवं सर्वस्मिन् भूवलये स्थापयामास। एतस्य मूलतत्त्वान्यादाय अरब-ग्रीसादिप्रदेशेषु भैषज्यतन्त्रस्याऽऽविर्भावोऽभवत् भारते-अरबप्रदेशे च सुतरां सफलस्य आयुर्वेदस्यास्य मूलमादाय पाश्चात्यप्रदेशेषु भैषज्यशास्त्रस्य निर्माणमभूत्। तदिदं न केवलं वयम्, अपि तु स्वयं पाश्चात्यगवेषका अपि स्वीकुर्वन्ति यत् पश्चिमराष्ट्रेषु प्रसृतस्य वैद्यकतन्त्रस्य आदिमं मूलं भारतीया आर्या एव इति।

सोयमायुर्वेदो भारतेऽस्मिन् चिरात्प्रसृतो लोकानामसाधारणं हितं साधयामास। मद्रास-युक्तप्रदेश-बङ्गादिप्रान्तेषु आयुर्वेदस्य चिकित्साप्रणाली बहो कालात् लोकानां हितं साधयन्ती, सर्वतः प्रासिध्यत्। राजस्थानप्रदेशे तु प्राचीनसंस्कृतेःसरक्षकैर्भारतीयभूपालैर्निजनिजराज्येषु आयुर्वेदस्य संरक्षणं, प्रचारश्च चिरादक्रियत। एतस्य चिकित्साप्रणाली राजस्थानप्रान्ते बहो कालात् सर्वतः समादरणीयाऽभवत्। अत्र हि शिक्षाविभागे यथा अन्यान्यसंस्कृतविद्यानां पठन-पाठनप्रणाली समादरणीयाऽभवत्, तथा आयुर्वेदस्य शिक्षाक्रमोपि समस्तभारते सुप्रसिद्धः समादरणीयश्चाभवद्। जयपुरस्य आयुर्वेदविभागे पुरा मध्यप्रदेश-युक्तप्रान्त-पञ्जाम्बुप्रदेशादिभ्यो दूरदूरप्रान्तेभ्यः शिक्षार्थिनः समागच्छन्। किं बहुना नेपालादिसुदूरप्रदेशेभ्योपि जयपुरे आयुर्वेदाऽध्ययनार्थं शिक्षार्थिनः समागच्छन्, सफला भूत्वा स्वस्वप्रान्ते आयुर्वेदस्य प्रचारं चक्रुः। सुगृहीतनामधेयैरायुर्वेदमार्तण्डैः श्रीलक्ष्मीरामस्वामिमहाभागैर्जयपुरे आयुर्वेदस्य तथा प्रचारः समुन्नतिश्चाक्रियत यथा भारतस्य प्रत्येकप्रान्ते तेषां महाभागानां शिष्याः, चिकित्साप्रणाली च प्रसिद्धाऽभवत्। न केवलं प्राचीनप्रणाली एव तैः प्रचारिता, अपितु वर्तमानयुगे आवश्यकी या किल नवीनशारीरिकविज्ञानपद्धति शस्त्रचिकित्सा वाऽपि तैस्तया सह संयोजिता। एवं किल राजस्थाने आयुर्वेदस्य चिरात्प्रचारो लोकेषु सफलतया समाद्रियते स्म।

प्राचीना आयुर्वेदीया चिकित्सापद्धतिः भारतस्य ग्रामेष्वपि सफला समसिध्यत्। अतएव जयपुरराज्यस्य जनपदेषु, ग्रामेष्वपि आयुर्वेदीया चिकित्साप्रणाली शासनतन्त्रेण प्रचारिताभवत्। ग्राममण्डलेषु राज्यद्वारा नियमिता वैद्या ग्राममण्डलेषु औषधालयमास्थाप्य प्रजानां चिकित्सामकार्षुः। प्रतिवर्षं च तेषां सफलतामुद्वीक्ष्य अस्मिन् कार्ये अधिकारिभिः समुन्नतिरक्रियत। एवमेव अन्येष्वपि राजस्थानेषु प्राचीना सेयं चिकित्सापद्धतिः प्रजानां रोगहरणे सफला स्वीकृताऽभवत्। मध्यदेशे, युक्तप्रान्ते, विहारादिष्वपि सेयं प्राचीना चिकित्साप्रणाली सफलतया प्रचलति स्म, सांप्रतं प्रचलति च। वर्तमानस्य शासनतन्त्रस्य धार्मिकेषु केषुचिद्विषयेषु प्राचीनभारतीयपद्धत्या सह भवेत् कदाचिद्वैमत्यं, किन्तु आयुर्वेदेन तथा तत्प्रचारितपद्धत्या सह नांऽशतोपि तस्य वैमत्यमिति जानीमः। कांग्रेससंस्था हि भारतीया, भारतीयरीतिनीतीनां पोषिका चेति बहूनां विश्वासः। अथवा यत्किञ्चिदस्तु, किन्तु आयुर्वेदेन सह कांग्रेसीयानां, तथा वर्तमानशासकानां च न नाम विरोधभाव इति निश्चेतव्यं भवति। किन्तु गतमासे अखिलभारतीयस्य

पाश्चात्त्यायुर्वेदिकसंघस्य [आलइण्डिया मेडिकल-कान्फ्रेन्स] द्वात्रिंशद्वर्षीयं यत् अधिवेशनमस्मिन् जयपुरनगरे संवृत्तं तस्मिन् आयुर्वेदीयचिकित्साप्रणाल्याः सुस्पष्टं विरोधं दृष्ट्वा महदाश्चर्यमभूत्, चेतसि विश्वासश्च नाऽभवत्। 'कान्फ्रेंसस्य' अध्यक्षपदमारूढेन डा० उकीलमहोदयेन काश्चिदेवविधा वार्ता कथिता या हि सुस्पष्टमायुर्वेदविरोधिन्यः। "आयुर्वेदार्थं पट्कोटिमुद्राणां नियतीकरणं द्वितीयपञ्चवर्षीययोजनायां रूप्यकाणामपव्ययः"। 'एलोपैथी'पद्धतेः कृते अधिकाधिकरूप्यकाणां याचनं नाऽनुचितमासीत्। किन्तु भारतीयस्य जनतन्त्रस्य शासनयुगेऽस्मिन् "भारतीयचिकित्साया कृते, मुद्राणां व्ययः "निरर्थकव्ययः, नाशो वा ('बरबादी') अस्ति इति कथनं सर्वस्याऽपि भारतनिवासिनः कृते खेदाऽऽवहं, लज्जाजनकं च। "आधुनिकचिकित्सापद्धतिरेव [अर्थात् पाश्चात्यचिकित्साप्रणाली एव] राजकीयाश्रयभुक्ता परिगण्यताम्। प्राचीनाऽऽयुर्वेदीयाः संस्था, तथा यूनानी, होमियोप्रभृतिसंस्थाः सर्वा निरुध्येरन्। नवीनाश्च नाऽग्रे केनचित्परिचाल्येरन्" इत्यपि वाक्यश्रवणं भारतीयस्य कृते हृन्मर्मविदारकम्। अस्तु, एतस्य विरोधो राजस्थानीयवैद्यकसंस्थाभिः स्थाने स्थाने कृतः। "सद्वैद्यसभा, जयपुर"तः कविराजश्रीदेवदत्तभारद्वाजमहोदयस्य पत्रमधिगतं तद्धि स्थानान्तरे विलोक्येत पाठकैः। एवमेव 'राजकीयायुर्वेदमहाविद्यालयस्य' छात्रसंघप्रमुखेन श्रीरमाकान्तशर्मणा ३० दिसम्बरदिवसे 'राष्ट्रदूते' प्रकटितं वक्तव्यमपि निरीक्ष्येत पाठकमहाभागैः।

एतद्धि विचारशीलानामवश्यं विस्मयमुत्पादयेत् यद् भारतस्य प्रायः प्रतिप्रान्तमेव भारतीयवैद्यकपद्धतेरनुमोदनं जनैः क्रियते। कुर्नूल (मद्रासप्रान्ते) नगरे 'अखिलभारतीय-आयुर्वेदकांग्रेसे' "आयुर्वेदद्वारा कियान् लाभो देशस्य, तदर्थं किं किमायोजनम् राष्ट्रस्य कर्तव्यम्" इत्यादिचर्चा श्रूयन्ते। किन्तु यद् राजस्थानं भारतीयसंस्कृतेः प्रधानं क्षेत्रम्, भारतीयताया कृते येन देशेन परस्सहस्राणां मनुष्याणां बलिदानं कृतम्, तस्मिन्नेव राज्ञां जीवनक्षेत्रे भारतीयस्यायुर्वेदस्य विरोधः प्रकाश्यसभासु श्रूयते। अस्तु, देशस्य विवेकिनः शासका भारते जायमानमायुर्वेदस्य असाधारणं लाभं विचारपूर्वकं विमृशेयुः तथा एतस्य कृते अधिकाधिकां प्रचारसुविधां सम्पादयेयुः।

## अखिलभारतीय-आयुर्वेदकांग्रेसे ('कुर्नूल')

अध्यक्षमहोदयेन सप्रमाणं साधितं यत्–वैदेशिकपद्धत्या निर्मितानि औषधानि जनसाधारणस्य कृते न सुलभानि। केवलमायुर्वेदज्ञाश्चिकित्सका एव जनताया वास्तवसेवां कुर्वन्ति। एतद्धि वैद्यानामेव महत्त्वपूर्णं कर्तव्यं यत्ते भारते उत्पन्नानां वनौषधीनामुपयोगं कृत्वा वैदेशिकौषधानामायातम् (देशे आगमनम्) न्यूनं कुर्वन्ति। वैदेशिकौषधानां कृते यो महान् व्ययो भवति तस्य संमुखे वैद्यकौषधानामति स्वल्पो व्ययः। लाभश्च तदपेक्षया दशगुणितः। जनसाधारणस्य स्वास्थ्यलाभाय या देशस्याऽऽवश्यकता तां वैद्या एव पूरयन्ति। अतएव आयुर्वेदविद्यालयानाम्, चिकित्सालयानां च प्रोत्साहनं शासकाः कुर्युरित्यावश्यकं कर्तव्यम्। देशीयौषधानां केन्द्रीयविभागे आयुर्वेदविज्ञस्य विदुषो नियोजनं सुतरां कर्तव्यम्।

सम्मेलनस्योद्घाटनं कुर्वता आन्ध्रप्रान्तस्य सहकारिताविभागस्य मन्त्रिणा श्रीडा०संजीवमहोदयेन सुस्पष्टमुक्तं "यत्—ग्रामीणक्षेत्रेषु चिकित्साकार्यमायुर्वेदस्य सहायतां विना कथमपि न साध्यम्।" इत्यादि।

"सद्वैद्यसभा, जयपुर" तः प्रहितं कविराजश्री देवदत्तभारद्वाजमहोदयस्य प्रकटपत्रम्— "आल-इण्डियामेडिकलकान्फ्रेन्स"स्य ३२ तमे अधिवेशने अध्यक्षपदात् श्रीडा॰ उकीलमहोदयेन या वार्ताः प्रोक्तास्ता सुस्पष्टमायुर्वेदविरोधिन्य —

१ - आयुर्वेदार्थम् षट्कोटिरूप्यकाणि द्वितीयपञ्चवर्षीययोजनाया यानि निर्धारितानि सोय मुद्राणां नाश 'बरबादी'।

२—आयुर्वेदे 'रोगप्रतिरोधात्मक'साधनानि अवर्तमानानीव।

३—यदि अग्रेजीस्थाने 'हिन्दी' नियुज्यते तर्हि वयं संसारस्य विज्ञानभाषात. पृथग् भविष्याम.।

४—चीनदेशोपि स्वीयां प्राचीनां चिकित्साप्रणालीं त्यक्तवान्।

प्रका याधिवेशनेऽपि प्रस्तावः कृत — यत् देशस्य सर्वकार आधुनिकीं चिकित्साप्रणालीमेव राजाश्रितां प्रणाली स्थापयेत्। प्राचीनायुर्वेदीयाः, तथा यूनानी-होमियोप्रभृतिसस्था न स्थाप्येरन्। प्राचीनाश्च निरुध्येरन्।

'सद्वैद्यसभा, जयपुर'स्य विशेषाधिवेशने प्रस्तावः पारितोभूत् - "यत् प्रान्तीयेन तथा केन्द्रीयेण सर्वकारेण निरर्थकवार्तानामुपेक्षा कृत्वा आयुर्वेदीयप्रणाली एव प्रोत्साहनीया। [राष्ट्रदूतः शनि ३१-१२ ५६]

५—'मेडिकलकान्फ्रेन्ससभायाम्' Vital Rob of Ayurbeda in Modern Mediene. शीर्पक एको निबन्ध अंग्रेजीभाषायाम् श्रावितोऽभूत — यस्मिन् आयुर्वेदे रोगप्रतिबन्धात्मकसाधनानां विशिष्य महत्त्व साधितमभूत्। दिनचर्या—ऋतुचर्या—पथ्यापथ्य —विवेक—त्रिदोषसिद्धान्त—जीवाणुसिद्धान्त— रसौषधानां महत्त्वं विशिष्य प्रकटितमभूत्। ५०० प्रतयो निबन्धस्यास्य डाक्टरेषु, अंग्रेजीशिक्षितेषु च वितीर्णा अभवत्।

## भ्रमनिराकरणम्

संस्कृतरत्नाकरस्य कार्तिकमासीयाऽष्टमी संख्या सांप्रतमेव नयनगोचरमुपगता, तस्याः सपादकीयलेखे 'अहो वैषम्यम्' इति शीर्षक प्रदाय संपादकमहोदयेन भारतीसपादकोपरि भूयानाक्रोशो विहितः। स्वयं संपादकमहाभाग एव लिखति—"संस्कृतरत्नाकरोऽयं चिराय भट्टमहोदयानामेव सप दकत्वे प्रचलति स्म। साम्प्रतमपि पत्रेऽस्मिन्श्री भट्टमहोदयानां महत्वपूर्णा लेखाः प्रकाश्यन्ते ?" एव किल संस्कृतरत्नाकरेण सह सर्वथा सुदृढसबन्धे सत्यपि सपादकमहाभागस्य कथमयं भ्रमः समभवद् यत्संस्कृतरत्नाकरस्योपेक्षा भारतीसंपादकेन कृता, इति। अवश्यं किञ्चित्कालात्पूर्वं संमेलनकार्यादिषु परिश्रमबाहुल्येन सारस्वतमहाभागस्य शरीराऽस्वास्थ्यमभूत्। किन्तु कियत्कालात्पूर्वं सारस्वतमहोदयेनैव पत्रे लिखितं यदिदानीमह स्वस्थोऽस्मीति। एव शरीरस्वास्थ्ये संपन्नेऽपि कथमकस्मात्सेयं मनोविकृतिः सवृत्ता ? अस्मिन्नन्तराले भूरिभोजनस्य, अन्धकारे भोजनस्यैव वा, कतम प्रसङ्ग. समुपस्थितो यस्मिन् "जीवितमक्षिकानिगरण" दृष्ट सारस्वतमहाभागेन।

यां 'भारती सख्यामवलोक्य 'संस्कृतरत्नाकरस्योपेक्षा भारतीसपादकेन कृता' इति विज्ञात सारस्वतमहाभागेन, ता पुनरेकवार पठितु विज्ञापयामि। तत्र हि वत्सरारम्भनिवेदने सोयं प्रसङ्गो यत्—"वर्तमानसमये नवीनसाहित्यप्रचारस्य का कथा, प्राचीनमपि साहित्यं विलोपोन्मुखम्। पत्राणि विद्योदयादीनि यान्यतिप्राचीनान्यासन् तानि तु लुप्तान्येव। किन्तु तदुत्तर प्रका-

शयितुमारब्धानि संस्कृतचन्द्रिकाप्रभृतीन्यपि नाममात्रशेषाणि"। एवं किल यानि पत्राणि सप्रति लुप्तानि, यैर्वा संकेतपरिवृत्तिः, किञ्चिद्वैषम्यादिक व. कृतम्, तेषामेव पत्राणां तस्मिन्प्रसङ्गे समभूदुल्लेख.। 'साकेत.' योऽद्यावधि प्राचलत्सोपि सप्रति न दृश्यते" इति विलुप्तपत्राणामेव प्रसङ्गे समभूत्तस्योल्लेखः। 'मधुरवाण्या' स्थानपरिवृत्तिः कृतेति तत्प्रसङ्गेन तस्याः कीर्तनम्।

तथा च संस्कृतभाषाया वैरल्यदशादर्शनार्थं विलुप्तपत्राणामेव समभूत्तत्रोल्लेखः। ईश्वरो मा कार्षीदेवं यत्संस्कृतरत्नाकरस्य भवेत्तत्रोल्लेखप्रसङ्गः। रत्नाकरः संमेलनस्य मुखपत्रम्, वर्तमानपत्रेषु सर्वापेक्षया प्रत्न, संस्कृतसेवने सयत्नश्चेति सवर्धयत्येव भारत्याः सपादकस्तमिमम्। अकाण्डे मा भूद्भ्रमो भारत्या उपरि सारस्वतमहोदयस्येति भूयो भूयो निवेदयामि। "हरियाणा शेखावाटी ब्रह्मचर्याश्रमस्य' विषये 'गवेषणाया ?" तथ्यं परिज्ञाय सारस्वतमहाभागस्य परितोषः प्रादुरभूदिति भूरि भाग्यं भारत्या.।

**काशीस्थानां पण्डितराज--श्रीराजेश्वरशास्त्रि द्राविड़महोदयानां भाषणम्** —केनचित्कार्यप्रसङ्गेन महाभागानाममीषां समभूदागमनं जयपुरनगरे। अतएव दिसम्बरमासस्य विंश्यां तारिकायां "महाराजसस्कृतकालेजे", एकविंश्यां च 'सस्कृतवाग्विवर्द्धिन्यां' समभूद् भाषणसमारोहः श्रीमताम्। सस्कृतकालेजसभायां कालेजाध्यक्षैः श्रीचन्द्रशेखरद्विवेदिमहाभागैः स्वागते, सभापतिवरणे च कृते, प्रारभ्यत पण्डितराजमहोदयानां भाषणम्—"वर्तमानकाले देशस्याऽभ्युन्नतये सस्कृतसेविपण्डितमहाभागैरस्माकं प्राचीना राजनीतिः समाजस्याऽग्रे समुपस्थापनीया। वर्तमानकालिका देशनेतारः सर्वेऽपि पाश्चात्यराजनीति-प्रभावाक्रान्ताः। प्राचीनाऽस्माकं राजनीतिः सर्वाङ्गपूर्णा, देशस्य हितावहा च। अतएव देशस्य कल्याणं वाञ्छद्भिः प्राचीना राजनीति. साम्प्रतं सर्वतः प्रचारणीया" इत्येव सर्वस्य सारः।

द्वितीयदिने [ एकविंश्यां तारिकायाम् ] सस्कृतवाग्विवर्द्धिन्यामपि सरस्वतीवन्दनायां कृतायाम, सभापते. प्रधानवक्तुश्च पुष्पमाल्यादिना समाननाया कृतायाम्, प्राक्रम्यत भाषणं पण्डितराजमहाभागेन—"यद् भारतस्य प्राचीना राजनीतिरेव भारतस्य कृते हितावहा। प्रोक्त श्रीमता यत्—प्राच्यभारतीयानां समाजे केवलो धर्म एव न पाधान्य भेजे। अपि तु धर्म राजनीती द्वे अपि सह शय्यामधिशयाने एव सर्वतः प्रचारणीये आस्ताम्। राजनीतिं विना धर्मः श्रीहीन। धर्मेण च विना राजनीतिर्विधवेव। अतएव द्वयोरेव सहभावो देशस्य हितायेति नीतिग्रन्थानां वाक्यै' साधितमभूत्। राजनीतेस्तत्तद्ग्रन्थाना निष्प्रतिरोध तत्तद्वचनोपन्यासः श्रीमतां मेधाया पूर्णपरिचयायाऽभूत् येन हि सर्वेऽपि विद्वास', श्रोतारश्च प्रकाम प्रासदन्। उभयदिनयोरेव सभापतिपद 'भारत्या.' सोय सपादक एव समध्यतिष्ठत्।

---

( पृष्ठ ७२ का शेष )

स्वीकुर्युः। केवलं वचारिक जागरणम् एव नास्ति अपिपु जाग्रतसमाजस्य कायिकमानसिकद्रव्यात्मिका सम्पूर्णा समर्पणशक्त्यः परमपूजनीयगुरूजीमहोदयाना अनुशासने अस्माभिः स्थाप्येरन्।

अस्मिन्नभियाने सहयोगिनो भूत्वा वय स्वराष्ट्रियैकात्मतां प्रति तथा च तस्या अनन्योपासक प्रति श्रद्धां प्रकटयेम, इदमेव निवेदनम्।

केन्द्रीयकार्यकारिमण्डलम्—

**राष्ट्रीयस्वयंसेवकसंघः**

# भारती

प्रमुखं संस्कृतमासिकपत्रम्



हिन्दुसंस्कृतिरक्षार्थं युध्यमानेन वैरिभिः।
महाराणाप्रतापेन प्रतापी देश एष नः॥


| वर्षम् ६ | चतुर्थाङ्कः | मूल्यम्<br>वार्षिकम् ३) रु०<br>एकस्याङ्कस्य ।=) |
| --- | --- | --- |

राजस्थान-मद्रास-मध्यप्रदेश-सौराष्ट्र-भूपाल-उत्तरप्रदेश-बहार-पञ्चनद-आन्ध्र-सर्वकारैः स्वीकृता—

# ❋ विषय-सूची ❋



---

सम्पादकः—
कविशिरोमणि
भट्टश्रीमथुरानाथशास्त्री
सहसम्पादकः—
देवर्षिकलानाथशास्त्री B. A.
जयपुरम्

# भारती

भानुवद् भारतीयानां भास्वद्भवनभासिनी ।
भागीरथीव भावाढ्या भारते भातु भारती ॥

प्रबन्ध सम्पादकः—
गिरिराजशर्माशास्त्री

वर्षः ६ | माघशुक्लाप्रतिपत्, सं० २०१२ | अङ्कः ४

## "भारती किल भासताम्"

( श्रीधर्मदेवो वेदवाचस्पतिः, एम. ए. )

मञ्जुलैर्मधुरैः पदैः स्वैः संप्रसादं तन्वती ।
भव्यभावैर्भूषितेयं भारती किल भासताम् ॥ १ ॥

शारदीयैः पाणिपङ्कजकलिततन्त्रीनिःस्वनैः ।
सर्वतः श्रुतिशब्दितेयं भारती किल भासताम् ॥२॥

बालकानां वाग्विलासं हृत्प्रकाशं विदधती ।
सन्मनांसि च मण्डयन्ती भारती किल भासताम् ॥३॥

शेमुषीशय्याशयानानां जनानां मानिनी ।
भूरि भद्रं भावयन्ती भारती किल भासताम् ॥४॥

भूषणै रसपाकभावैः स्वात्मगात्रविभूषिणी ।
सूक्तिसारं सिञ्चयन्ती भारती किल भासताम् ॥५॥

# गीताप्रवचनम्

विद्याभास्करः श्रीउदयवीरः शास्त्री, प्रधानाचार्यः श्रीशार्दूलसंस्कृतविद्यापीठ, बीकानेर

संस्कृतवाङ्मये गीता शिरोऽलङ्कारभूतेव विराजते, गीतायाः समादरः समाजे खल्वनेनैवानुभूयते, यत्तस्या व्याख्यानभूताः शतशो ग्रन्थाः साम्प्रतमाबालवृद्धमाद्रियमाणाः समुपलभ्यन्ते। न केवलं देवभाषायामार्यभाषायां वा, न च भारतीयविविधप्रान्तभाषास्वेव, अपि तु वैदेशिकभाषास्वपि गीताव्याख्यानान्यनेकानि दृष्टिपथमायान्ति। अतीते मार्गशीर्षमासे शुक्लपक्षे चतुर्थीतिथिमारभ्य एकादशीं यावत् गीतासप्ताहः सर्वत्र भारते बहुत्र विदेशेऽपि च गीताभिनन्दनोत्सवरूपेण प्रचलित आसीत्। तत्र महतां विदुषां महात्मनां गीताभ्यासिनां गीतार्थप्रतिपादनपराणि श्रोतृजनोल्लासजनकानि भक्तिभावोद्भावकानि प्रवचनानि गीतापाठप्रवृत्तयश्च सततं प्रावर्तन्त। ग्रन्थे यावान् प्रचारः साम्प्रतं जगति गीतायास्तावान्नान्यस्य कस्यचिद् ग्रन्थस्य स्यात्। क्वचिद् गीतामन्दिराणि भवनानि वा निर्माप्यन्ते, क्वचिज्जनैरन्तिकस्थैः सभूय गीतामण्डलानि संस्थाप्यन्ते, अपरत्र पुनः प्रकाशनार्थं गीताया मुद्रायन्त्रालयाः समुद्घाट्यन्ते, अनेकत्र च गीताविद्यालयाः पाठमात्रप्रवृत्तय एव वा प्रचाल्यन्ते प्रतिदिनम्।

किमत्र कारणम्, किन्तदाकर्षणं गीतायाः, कोऽत्र विशेषः, किन्तन्महत्त्वम्, का तत्र शक्तिर्यया प्रेर्यमाणाः पुनः पुनरत्र प्रीतिं प्रदर्शयन्ति पुरुषा इति जिज्ञासायां समुपतिष्ठते खल्वत्र विचारः—प्रतिक्षणं सांसारिकप्रवृत्तिपरम्पराभिः पर्याकुलो भूत्वा मानवो यदा शान्तिक्षणमपेक्षते, विविधसम्पदैश्वर्यसम्पन्नोऽपि सदध्यात्मक्षुत्क्षामकण्ठस्तत्पीडाशान्तये कमप्यलौकिकं शान्तिकरमर्थमभिलषति, प्रतिपन्नपुत्रपौत्रकलत्रादिरपि दुराशयाऽन्तर्दह्यमानः शीतलरसाभिलाषमनुभवति, तदा गीतैव केवलं शरणम्। एवं भूतास्ववस्थासु गीतायाः श्रवणमध्ययनं मननं परमालम्बनम्। कष्टकरस्य व्यामोहरोगस्य महौषधं गीतैव। दुःखशोकभयाद्यगाधसागरसंतरणाय परमोऽयं सेतुः। गीताभ्यासस्तांस्तान् सद्भावान् हृदि समुद्बोधयति, यैर्हि मोहपर्याकुलः समुद्विग्नः परिभ्रष्टो मानवः सन्मार्गमनायासेनैव समाश्रयते, अध्यात्मतत्त्वप्रतिपादनं विस्तरेणोपनिषत्सु वरीवर्त्ति। परमयं गीतासारः सर्वासामुपनिषदाम्। सर्वोपनिषत्सारत्वात् स्त्रीलिङ्गत्वाच्चोपनिषत्पदस्य गीतेति स्त्रीलिङ्गत्वेन निर्देशः श्रीकृष्णप्रवचनानां तदुपदेशानां वा सर्वथा संगच्छत एव। अन्यथा गीतो गीतं वेति कुतो नोच्चार्येत। साक्षाद्भगवतोपदिष्टत्वाच्च सर्वत्र पुष्पिकासु प्रत्यध्यायावसानावसरे 'श्रीमद्भगवद्गीतासूपनिषत्सु' इति समुल्लिखितं दरीदृश्यते। अतएव माहात्म्ये—

> सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।
> पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्॥

इति स्पष्टमुद्घोष्यते। अत्र गीतामृतभोक्तृत्वेन पार्थस्य निर्देशात् केचन शङ्कामातन्वते, पार्थमन्तरा नान्यः कश्चिदत्राधिकारीति मानवमात्रकृते गीताभ्यासोपदेशः सर्वथापि निष्फल एव स्यादित्यत्र विषये विचार्यते।

यद्यपि सत्यमेतत् श्रीमतो भगवतः कृष्णस्याऽयमुपदेशो मध्यमपाण्डवमर्जुनमभिलक्ष्यैव प्रावर्त्तत, परं

कस्मिन्नवसरे कीदृशे प्रसगे किम्भूतायामवस्थायां केषु केषु च समुपस्थितेषु कारणेषु प्रवृत्तिरेषा संजाघटीति चर्चापरम्परामपेक्षते । गीताया प्रथमाध्यायः खल्वमुमेवार्थं विशदीकरोति । यदा हि धर्मक्षेत्रे कुरुक्षेत्रे कौरवपाण्डवानां महती सेना मिथो युद्धमभिलषन्ती समुपस्थिता, कौरवराजो दुर्योधन शस्त्रपाणिमाचार्यं द्रोणमभिगम्य स्वीया पाण्डवीया च सन्नद्धां सेनामभिसम्प्रदर्श्य–सर्वे भवन्त. पितामह प्रधानसेनापति भीष्ममेवाभिरक्षन्तु –इत्यादिदेश, भीष्मप्रभृतयश्च कौरवचमूनेतार शङ्खनादसङ्केतेन स्वीयां युद्धसज्जा समुद्घोषयन्, तादृश युद्धसज्जासङ्केतमङ्गीकुर्वाणाः पाण्डवाः कौरवाणा भीमार्जुनयुधिष्ठिरप्रभृतयोऽपि नैजान शङ्खान् यथावसर सहैव प्रदध्मु । एव सत्यां युद्धघोषणायां सत्युन्मुखे च शस्त्रसम्पातेऽर्जुन श्रीकृष्णं सारथिरूपेण समुपस्थितमुवाच—सम्थापय मदीय रथमुभयोरपि सेनयोर्मध्ये, यावदहं योद्धकामान् समुपस्थितानेतान् द्रष्टुमिच्छामि, मया कैः सह साम्प्रत योद्धव्यमिति । ततः पार्थसारथिर्भगवान् कृष्ण. सेनयोरुभयोरन्तराले श्वेतहयैर्युक्त कौन्तेयस्य रथ सवाहमस्थापयत् । तत्र च सम्मुखे कौरवसेनायां सर्वानपि सम्बन्धिन पुत्रपौत्रादीन् भ्रातॄन् श्यालान् मातुलान् पितॄन् अन्यान् बन्धुबान्धवादीनवलोक्य तेषाञ्च युद्धकामनया तत्रावस्थिति स्वहस्तेनैव तेषां विनाशञ्च सम्प्रधार्य व्यामोहाकुलितान्त.करणोऽर्जुन सशर धनुरेकतः परित्यज्य भीषणान् देशजातिविघातकान् युद्धपरिणामान् पर्यालोचयन्नाहं योत्स्य इति गोविन्दमुक्त्वा तूष्णीं भूत्वा निश्चेष्ट इव तस्थौ।

तदानीमज्ञानितया कर्त्तव्यपथभ्रष्टं व्यामोहकलुषितान्तःकरण कुन्तीपुत्रं परिज्ञाय महायोगेश्वरो हरि सन्मार्गप्रवृत्तये गीतार्थमुपदिदेश । यथा च तादृशार्थप्रतिपादनेन तदानीमर्जुनस्य मोहो नष्टः कर्त्तव्यपथप्रवृत्तिरूपञ्च ज्ञान समुद्भूत्. तथाऽद्यापि किङ्कर्त्तव्यविमूढस्य मोहपर्याकुलस्य मानवस्य प्रतिदिन नियमेन गीताया श्रवणमध्ययन मननं व्यामोहान्धकारमपाकृत्य कमप्यलौकिकं ज्ञानालोकमाकलयति । एवं नियताभ्यासतत्परो गीतोपदिष्टदिशाचरन् कश्चिदपि श्रद्धोपेतोऽधिकारी स्वाभिलषित पदमधिगच्छतीति नात्र सन्देहलवोऽपि ।

गीता भगवता प्रोक्ता वेदव्यासेन वा पुनरिति विचार. कदाचिदुन्नमय्य शिर समुपस्थितो भवति विदुषा पुरत. । तत्र केचन—भगवतैव प्रोक्ता 'धर्मक्षेत्रे कुरुक्षेत्रे' इत्याद्यानुपूर्वीका सकलापि समुपलभ्यमाना गीता इति व्याचक्षते । अतएव लोके न केवल गीता, अपि तु भगवद्गीतेति नाम्ना व्यवह्रियते । पुष्पिकासु च प्रत्येकाध्यायपरिसमाप्त्यवसरे प्रदर्शितासु 'श्रीमद्भगवद्गीतासूपनिषत्सु' इत्येव समुल्लिखितमुपलभ्यते । एवञ्च सप्तशतश्लोकी भगवता स्वमुखेनैवोच्चारिता इति तेषां भक्तिप्रवणानामाग्रहः । परमन्ये तन्न सहन्ते । ते श्रेयमुपपादयन्ति, भगवद्गीता खलु महाभारतान्तर्गता तस्यैवांशमात्रम् । महाभारत हि वेदव्यासेन रचितमित्यत्र कस्यापि सशयो नास्ति। एवञ्च तदन्तर्गता तस्यैवांशभूता गीतापि वेदव्यासनिर्मितैवेत्यत्र सन्देहो न कर्त्तव्यः । कुतस्तर्हि गीता व्यासगीता चेत्येव नोच्यते, कथं भगवद्गीतेत्येव व्यवह्रियते ? श्रूयताम् अयमत्र विवेकः । यदा सेनयोर्मध्ये रथोपस्थ उपविष्टोऽर्जुनः स्वसम्बन्धिनः परितोऽवलोक्य व्यामोहमापेदे, तदा भगवान् सर्वोपनिषत्सारभूतं आत्मानात्मविवेकप्रसाधक त तमर्थं प्रतिपाद्य स्ववाक्यैरेव पार्थं प्रबोधयामास, न च तादृशः स काल आसीत्, यत्र द्वित्रिहोरापर्यन्तं निराकुलो भूत्वा सांख्य–

# अद्यत्वे पुत्रैषणा !

पं० श्रीगणेशरामशर्मा, श्रीराजेन्द्र-इण्टर कालिज, झालावाड़

संसारेऽस्मिन् मनुष्यजातेः पुत्रैषणा नामैकातीव प्राकृता निसर्गसिद्धा सहजा वृत्तिः। यूरोपदेशीयैर्भारतीयैश्च गम्भीरचिन्तनशीलैर्दार्शनिकैस्तत्त्वज्ञानिभिः प्राणिशास्त्रप्रवीणैर्मनोविज्ञानवेदिभिर्नृवंशविद्याविशारदैः सृष्टिविज्ञानविपश्चिद्भिः कामशास्त्रप्रणेतृभिश्च मानवमानसे जायमानानां कासांचित् प्रमुखेच्छावृत्तीनां मध्ये पुत्रैषणा प्राथम्येन परिगण्यते। भारतीयाः शास्त्रवेत्तारो वेदान्तादिशास्त्रार्थप्रविवेचनपरं प्रलम्बीभूत प्रवचनं प्रस्तोतुमनवसर नावमन्येत कश्चित्। शस्त्रसम्पातोन्मुखवेलाया तथा रहस्योद्घाटनतत्परा शास्त्रचर्चा सर्वथाप्युपहासास्पदतामेव भजेत। अतएव सम्भाव्यते, पञ्चदश विंशतिर्वा पलानि यावत् साम्प्रतिकैः कालोचितैः स्ववाक्यैः प्रबोध्यार्जुनं युद्धाय सज्जीकर्त्तु सफलो बभूव भगवान्। तमेव भगवदुक्तमर्थमुपजीव्य वेदव्यासोऽष्टादशाध्यायपरिमितां सप्तशतश्लोकात्मिकां गीतां विचारयामास। एवं बाह्यकलेवरो गीताया खलु वेदव्यासविनिर्मितः, आत्मा त्वर्थभूतो भगवत एव। अतएव वेदव्यासप्रणीतापि गीता भगवद्गीतेत्येव व्यवह्रियते।

गीताध्ययनपूर्वकं तदर्थविचारस्तदनुकूलमाचरणञ्च सर्वस्यापि महान्तमभ्युदयमावहतीति निश्चितम्। भगवता बोधितमर्थमाचरन्नेवाऽर्जुनः श्रेयोरूपं विजयं लेभे। एवमर्थप्रधाना आचारप्रधाना वा गीता, न शब्दप्रधाना पाठप्रधाना वा केवलम्, शब्दास्तु वेदव्यासस‍न्निवेशिताः, अर्थस्य भगवदुक्तत्वात् श्रेयोऽर्थिभिस्तदाचरणमेव परमावश्यकम्, तदेव गीताप्रवचनस्य मुख्य लक्ष्यं कल्याणावहञ्चेति विरम्यते।

विद्वांसो मनुष्याणां मनोवृत्तिविश्लेषणप्रसङ्गे लोकैषणा-वित्तैषणा-पुत्रैषणा चेति वृत्तित्रयीमाद्यां नैसर्गिकीं स्वीचक्रुः। मनुष्यः स्वभावत एव विशुद्धया कामवृत्त्या-प्रेरितः सन्तति जनयितुं प्रवर्तते। अत्र "एकोऽहं बहु प्रजायेय" इति बीजम्। न केवलं मनुष्य एवापितु सर्वेऽपि सचेतना जननेन्द्रियवन्तो जीवा रजःप्रधानासु स्त्रीयोनिषु क्षेत्रत्वं प्रकल्प्य तत्र वीर्यबीजं संस्थाप्य परमां मुदमनुभवन्तो लोके स्ववर्गवंशविस्तारं कामयन्ते। मनुष्यस्तु सर्वप्राणिषु श्रेष्ठत्वात् सर्गक्रमे संयत सनियमं च प्रवर्तमानो योग्यामात्मानुरूपां सन्तति जनयतीति सर्वसम्मतम्। पुनर्जन्मसिद्धान्तं स्वीकुर्वाणा विद्वांसोऽथ च "आत्मा वै जायते पुत्रः" इति प्रोचुः। कामशास्त्रविदो ब्रुवन्ति यन्मनुजो यौवन प्राप्य रमण्यां रमते तदा स्त्रीपुंसोर्द्वयोः कोऽप्यानन्दवृत्तेरद्वितीयः परितोषो भवति, सन्तानोत्पत्तौ जातायामेव मनुजद्वन्द्वस्य प्राकृतो विकाशक्रमः परिपूर्णतामेति। सन्तानाभावे दम्पत्योर्वन्ध्यत्वं भवति जीवनं च निष्फलं जायते, तथ्यमेतत्प्रत्यक्षमेवावलोक्यते लोके। सन्ततेरभावमसहमाना जना नानाविधान् प्रयत्नान् यज्ञानुष्ठानदानौषधिरसरसायनतन्त्रचिकित्सादेवाराधनरूपान् विदधतीत्यपि पुत्रैषणायां सतृष्णतां मानवानां प्रमाणयति। 'पुंनाम्नो नरकात्त्रायत इति पुत्रः', 'नास्त्यपुत्राणां गतिः' इत्येवं विधां व्यवस्थां धर्मशास्त्रज्ञा श्राद्धपिण्डोदकक्रियाकलापवर्णनप्रसङ्गे प्रेतोद्धाराय स्वगोत्रसम्भवां सन्ततिमत्यावश्यकीमाहुः। पुराणेतिहासचरितानुचिन्तनादपि तथ्यमेतत्स्फुटं प्रसिद्ध्यति यदिहानेके ब्रह्मर्षयो राजर्षयः सर्व-

प्राक्तना अस्माकं पूर्वजा भारतीयाः प्राक्तनं सरलातिसरलमाडम्बररहितं च जीवनक्रममनुसरन्तो यमनियमवन्तो वर्णाश्रमाचारविचारनिर्मलमुत्तमचरितचर्याचारित्र्यशोभनं धर्मार्थकामत्रिवर्गमेव परमं पुरुषार्थं लौकिकं मन्यमानाः सयनभावेन यदृच्छयोपपन्नान् सांसारिकान् भोगान् भुञ्जते स्म । वंशानुक्रमकुलीनत्वसंस्कारपरम्परासु च ते बहु श्रद्दधानाः साग्निसाक्षिकम् विधिवत् परिणीतेषु स्वकलत्रेषु योग्ये वयसि प्राप्ते यौवनोद्दामलीलाविलासैः रमन्ते स्म कामोपभोगानन्दसुखं चानुबभूवुः । ऋतुकालाभिगामिनस्ते गर्भाधानसंस्कारं धर्मधिया समाचेरुः, फलतो यथेप्सितां योग्यां सन्ततिं स्ववंशप्रतिष्ठानुरूपामाज्ञाकारिणीं सुशीलां च प्राप्य सुखेन दीर्घमायुर्जीवित्वा भुक्त्वा च तांस्तानशेषान् दिव्यान् भोगाञ्जीवनसाफल्यमनुभूय पर्यन्ते स्वर्गं मोक्षं च यथाभिकांक्षितं लभन्ते स्म । तस्मादेव तेषां सन्ततिर्व्यतीतेष्वपि वर्षशतेषु पुरुषशतेषु न कदापि विपथगामिनी दुराचारानाज्ञाकारिणी समजायत । परन्तु हा ! हन्त ! ! अद्यत्वे भोगप्रधानेऽस्मिन् बत भौतिके युगे मनुजानां जीवनचर्या भिन्नप्रकारैव प्रवर्तते । नेदानीं लोकाः प्राक्तना इव सत्यकामाः सत्यसङ्कल्पाः सत्याचरणाः गर्भाधानसंस्कारं सुयोग्ये देशे काले पात्रे च कर्तव्यबुद्ध्या समाचरन्ति । काकतालीयवत् घुणाक्षरन्यायाद्वा प्राप्तां सन्ततिं—पुत्रं वा कन्यां वा—लब्ध्वा कथमपि जीवनयात्रामनुसरन्तो गार्हस्थ्यं स्वस्थमस्वस्थं वातिवाहयन्ति । परिणामतो यावदपेक्षितामनुगुणामनुरूपामात्मतुल्यां सुयोग्यां सुशीलां च सन्ततिमनवाप्य विपरीताचारचरणवद्भिः सन्तानैः कदर्थिताः परिपीड्यन्ते । अतः पुत्रेषणा सम्प्रति गृहस्थानामेका महती विडम्बनैव पर्यवस्यति ! क्वचित् क्वचित्तु पुत्रवत्त्वं कन्यापितृत्वं वा क्लेशबहुलं जातमिव समवलोक्यते ।

साधारणाश्च स्वाभाविकप्रजननक्रमेणौरसं पुत्रमनवाप्य पुत्रेष्टिप्रभृतीन् यज्ञान् समीक्ष्य तत्प्राप्तये महत्तपस्तेपिरे, स्त्रियश्च साध्व्यो देव्यो व्रताचरणदानादिभिर्देवता परितोष्य दिव्यान् वरान् प्राप्य पुत्रमुखदर्शनसुखमनुबभूवुः स्वजीवनसाफल्यं च मेनिरे । दिलीपदशरथादयः पुत्रार्थं महान्तं प्रयत्नं कष्टसाध्यं चाप्याचेरुरिति सर्वविदितम् । इत्थं सर्वतो दृक्पातेन पुत्रेषणा हि सर्वजीवानां विशेषतो मानवानामेका प्राक्तना सहजा नैसर्गिकी सतृष्णा समुत्कटा च मनोवृत्तिरिति स्वीकरणे न कस्यापि विचारशीलस्य विप्रतिपत्तिः स्यात् । स्ववंशविस्तारं, स्वसन्ततेर्लालनं पालनं, बाललीलावात्सल्यरसानुभवसुखं, निश्चितेऽपि मरणेऽप्यथ स्वसन्ततय एवोत्तराधिकारसमर्पणम् चाभिलषन् मनुष्यः स्वात्मनः पुत्रेषणां रक्षतीत्यत्र नास्त्येवाणीयानपि विसंवादः ! एवं स्थितौ यदीदानींतनो मानवसमाजः पुत्रोत्पत्तिं वाञ्छति, प्रजननक्रियायां प्रवर्तते, दाम्पत्यभावमाश्रित्य गृहस्थाश्रमे स्वकलत्रेषु रममाणः पुत्रेषणामभिरक्षति चेत्तदतीव स्वाभाविकं, निसर्गसिद्धमाक्षेपरहितं चास्ते !

परमधुना विज्ञानार्थशास्त्रराजनीतिप्रधानेऽस्मिन् भौतिकसङ्घर्षप्रधाने किल कराले कलिकाले वर्गयुद्धमत्रस्तं मानवजीवनमालोचयितुं प्रवर्तेमहि तदाद्यत्वे पुत्रेषणास्मत्कृते यदाकदा क्लेशायापि च जायते इत्यत्र विषयेऽद्य पाठकानां पुरतः किंचिद्वक्तुं प्रयतेऽहमासां पङ्क्तीनां लेखकः खल्वधस्तात् । आशास्यते, परिवर्तितं जगत्प्रपञ्चमिदानीन्तनं, विशृङ्खलितां चास्माकं भारतीयानां सामाजिकीं व्यवस्थां, नव्यां शासनपद्धतिं, क्लेशबहुलां च जीवनप्रणालीमालोच्यात्र पाठका विचारविमर्शमेतं गभीरमवदध्युः—

अधुनातनो गृहस्थो न खलु प्रागिव लब्धे कस्मिन् सन्ताने स्वात्मनः कामभावं परितुष्टं मन्यते न च गृहिण्यो देव्योऽपि चैकस्यां सन्ततौ प्राप्तायां सत्यामात्मानं भुक्तभोगं कृतकृत्यं वा मत्वा कामाद्विरमन्ति। विशेषतः पुमांस एवेन्द्रियपरायणतया च भोगेच्छामात्मनः पुनः पुनस्तर्पयितुं कामवासनाकृष्टाः प्रजोत्पादनकर्मणि प्रवर्तन्ते। फलतः प्रतिवर्षमेकां योग्यामयोग्यां वा सन्ततिमिच्छन्तो वानिच्छन्तोऽपि प्रसह्य प्राप्नुवन्ति। इत्थमसंयमाद्यदृच्छया लब्धाः सन्ततयो रुग्णा दुर्बला नित्यास्वस्थाः पित्रोः कुटुम्बस्य च पीडायै चिन्तायै केवलं जायन्ते। प्रजापतयश्चेमे गृहस्थाः स्वसन्तानानां भरणे पोषणे शिक्षायां दीक्षायां च व्ययातिभारं क्लेशपरम्परां दारिद्र्यं चानुभवन्ति। रुग्णबालानां चिकित्साकर्मण्यपि च तेऽसामर्थ्यं विन्दन्तस्तदकालमृत्युक्लेशांश्च भूयो भूयः सहन्ते।। भाग्यादुज्जीवन्त्योऽपि चैवंविधाः प्रजाः स्वजीवनक्रमे नाभीष्टामुन्नतिं प्रगतिं च कर्तुं पारयन्ति। इत्थंभूताः शिशवो राष्ट्रस्य, समाजस्य, परिवारस्य, पित्रोश्च भाररूपा केवलं जनसंख्यावर्द्धनमात्रैकोपयोगा निष्पद्यन्ते। परिणामतो वर्तमानेऽस्मिन् संसारे जनसंख्यावृद्धिरिदानीमेका सार्वदेशीया महती जटिला समस्या बोभूयमाना दरीदृश्यते। एवमिदानीं विश्वस्मिन् पुत्रैषणा विडम्बना प्रसिद्ध्यति।

अपरं च प्रजानां जन्मसम्बन्धिन्यः काश्चित् संख्यातीताः क्लेशपरम्परा गृहस्थैर्भोक्तव्या भवन्ति। सर्वादौ जातायां गर्भस्थितौ गृहिणीनामधुनातनीनां शरीरसंस्थानदौर्बल्यात् स्वास्थ्यं क्रमशः सन्देहदोलाधिरूढं शङ्कातङ्काकुलं विघ्नपरम्पराक्रान्तं च जायते। गर्भोन्नतिक्रमेणेमा देव्यो मासि मासि क्षीणक्षीणं कृशतरं च स्वस्वास्थ्यं जायमानं चिन्तयन्त्यो बत तिक्तरूक्षदाहिनः स्वदेशीयान् परदेशीयान्वा पथ्यापथ्यांश्चौषधिरसान् सेवन्ते तथापि स्वास्थ्यक्षयमात्मनो नावरोद्धुं प्रभवन्ति। यदा कदा सूचीभेद्यां शल्यतन्त्रात्मिकां च चिकित्सामप्यङ्गीकर्तुं विवशा भवन्ति, तद्विकृतिजन्यान् क्लेशांश्च सोढुं परवशा जायन्ते च तथापि यथेष्टं स्वास्थ्यं नैव रक्षितुं पारयन्ति। सत्यप्येव स्वगार्हस्थ्ये धनविरहाद्दारिद्र्यादबलाजनत्वात्पराधीनतया कुटुम्बिजनानां नैष्ठुर्याद्वावश्यकर्तव्यताकं दिनचर्यासंलग्नं परिश्रमसाध्यं कठिनमपि कार्यकलापं समाचरन्त्यो गर्भपातदुःखं वेदनातिशयं च सहन्ते। दुःखपरम्परां गुर्वीं सहमाना अपि गृहिण्यो देव्यः कथमपि क्लेशाज्जातेऽपि प्रसवप्रसङ्गे चात्यन्तं शिथिलगात्रा नीरक्ता रुग्णा भवन्ति, प्रजननक्रियाव्यापारश्च स्वाभाविको नियतिनियमोऽपि वा तासामस्वाभाविकं दुस्सहं वेदनापूर्णमपमृत्युहेतुकं दुःखं परिणमति। सीमन्तोन्नयनादयो माङ्गलिका गर्भसंस्काराश्चैतासां कृते शोकप्रदा जायन्ते। गृहस्थाश्रमस्य मूलाधारभूता भोगभित्तय इव देव्यो हि यदा गर्भधारणात् क्लिश्यन्ति पीड्यन्ते च तदाऽन्येऽपि च पतिपुत्रादयः कुटुम्बसदस्याः सर्वे दिनचर्याक्रमभङ्गादन्नपानादिपोषणपरिचर्याविच्छेदाद्दुःखशतानि भुञ्जन्ते। एवमत्रैव पुत्रैषणा विडम्बना।

एवं कष्टपरम्पराभिः पूर्णेऽपि हि गर्भकाले प्रसवकाले सन्निहिते च सर्वादौ गर्भिणी-प्रसूतिगृहं प्रति नेतव्या भवति, यतोऽन्तर्मनसि दम्पतिभ्यां साकमेव सर्वेऽपि जानन्ति यदेव कामासक्तिवशादसंयमाद्वा जातोऽस्वाभाविको वार्षिकः प्रसवोऽनिष्टकरो बाधाशतसङ्कुलो विपज्जालवलितो विनौषधालयं, विना डाक्टरमहाशयं, विना च वैज्ञानिकशल्यचिकित्सासाधनजातं नैव क्षेमेण निर्वाह्यो भवति निर्विघ्नम्। यदि पुनः प्रसवो

मूढो गर्भिण्याः प्राणापहारकरोऽपमृत्युजनको वा भवेत्तदा विषमप्रतिकारे किलैवंविधे समये का वा गतिरन्येति कृत्वाधुनातनः सर्वसाधारणोऽपि नागरिकः कचिन्महौषधालयस्थं सर्वसाधनसम्पन्नं प्रसूतिगृहं शरणं व्रजति। एवं प्रसूतिगृहाश्रयोऽनिवार्यो बहुव्ययसाध्योऽपि शिक्षितम्मन्यैर्नागरिकैरगत्या स्वीकर्तव्यो भवति नाम नूनम्। तत्र गत्वा पुनर्डाक्तराणामन्येषां च तत्रत्यकार्यकराणां सेवकसेविकानां चाज्ञापालनं, तन्नियमानुवर्तनं, धनादिना तत्परितोषणं च कर्तव्यबुद्ध्या श्रद्धया वाश्रद्धया, शक्त्या वाशक्त्या वा करणीयं भवति पुत्रैषिणा गृहस्थेन। इत्थं क्रमेणाद्यत्वे पुत्रैषणा तर्पयति पितृमानसं, पीडयति वा पितृहृदयं, वर्धयति वा गार्हस्थ्यशकटीभारं प्रतिवर्षमुत्तरोत्तरम्।

अथ परिश्रमशतैर्दुःखव्याघातानेनेकान् सोढ्वा पुत्रमुखचन्द्रदर्शनावसरं लभन्ते गृहस्थाः। तत्रापि च रजोवीर्यदोषात्पित्रोर्नवजाताः शिशवो यथायोग्यं परिपुष्टिं नासादयन्ति। मुहुर्मुहुरोपधिसेवनैः प्रायो रुग्णा दुर्बला अस्वस्थाश्च जननीजनकयोर्मानसीं चिन्तामपारां वर्द्धयन्ति। तल्लालनं पालनं चातीव कष्टप्रदं, क्लेशबहुलं वाऽसाध्यप्रायं जायते। डाक्तरौषधालयप्रसवगृहादिपरावलम्बिनां लोकानां बालस्वास्थ्यसंरक्षणे चिकित्सायां चानुभवविरहात् शिशुपरिपालनमतीव दुष्करं व्ययसाध्यं परावलम्बि वा भवति। इत्थं देशेऽत्र सख्यावन्तः शिशवो दन्तपंक्तिप्रादुर्भावादन्नप्राशनसंस्कारात्पूर्वमेव म्रियन्ते धरणीगर्भान्तर्लीनजीवनलीलाश्च भवन्ति।

भाग्यादजानुचलनयोग्ये जाते सन्ताने तत्स्वास्थ्यापेक्षयाक्षरारम्भात्प्रभृत्येव शिक्षासमस्याद्यतनी समधिकं तुदतितमामधुना गृहस्थाश्रमे वसतां भारतीयानां नः। प्रचुरधनव्ययसाध्या हीदानीं शिक्षा नव्ययुगीना, सापि पुनर्नो गृहशिक्षा, कुलमर्यादाशिक्षा, चरित्रनिर्माणशिक्षात्मसंस्कारशिक्षा, समाजसेवाशिक्षा, साहित्यपरिष्कारशिक्षा, सदाचारनिर्माणक्षमा शिक्षा च। प्रत्युत फैशनपिशाचावेशा, जीवनं सद्वर्शमात्र प्रमाणयन्ती, पदे पदे चारित्र्यस्खलनैकपरिणामा, राजनीतिगताधिकारभुक्त्ये नेतृत्वावाप्तिफला, कृत्रिमवेशभूषाभाषाडम्बरजल्पाकत्वोद्घोषचाकचक्यवती, प्रमादालस्यानृतकूटकपटजननी, द्रव्यार्जनैकोत्कटदुर्वासना, सर्वतो निरुपयोगिनी विद्यालयवलिवेद्यां भ्रान्तमस्तिष्काचार्याणां गुरुमन्त्रैपूच्चार्यमाणेषु शुल्कच्छलान् पित्रोः सर्वस्वं स्वाहा कुर्वती कुमारान् बाबून् कुमारिकाश्च चित्रपटतारिका निर्माति निर्लक्ष्य लक्षशः स्वच्छन्दम्।।। फलतो ह्यात्मजा अपि पित्रोर्विपरीताचारचरिता, स्वच्छन्दतावादिनोऽन्ताराष्ट्रियं सर्वं सम्यग्जानन्तोऽपि च गृहस्थयोः स्वपित्रोर्गृहस्थितिं तत्त्वतो न जानाना, उच्छृङ्खलाः प्रोद्धताः स्वेच्छाचारिणोऽकर्मण्या आरामप्रिया निष्पद्यन्ते। अतएव हीदानीन्तनानां मानवप्राणिनां नवीनानि संस्करणानि क्रमशो हीनान्यधमानि पतनोन्मुखानि मनुष्यतायाः कलङ्करूपाणीव जायमानानि पर्यवलोक्यन्ते।

अपव्ययादिदुर्व्यसनाक्रान्ता इमे नवयुगीना आत्मजाः स्वयं नानादोषदुष्टा अपि पूर्वजानुन्नतानज्ञाञ्जडवादिनो मन्यमानाः स्वस्य विज्ञानवेदित्वं राजनीतिप्रवीणत्वमर्थशास्त्राचार्यत्वं च प्रख्यापयन्ति। न ते कुलक्रमलवलेशमनुरुन्धन्ति, न स्वकर्तव्यमनुचिन्तयन्ति, न देवर्षिपितृऋणत्रयापाकरणं धर्मं मन्वते न स्नेहानुबन्धं रक्षन्ति, न शीलं समनुशीलयन्ति, न विशुद्धां सात्त्विकीं धियं दधते, न लोकापवादाद्भयं, न वाचारविचारं, ज्ञानं ध्यानं मानं सम्मानं वा किमपि मन्यन्ते।।!

आधुनिकाः पुत्रा आस्तिकत्वमज्ञानिकत्वमवगच्छन्ति, कुलप्रतिष्ठां दम्भं मन्यते, वंशमर्यादां पाखण्डं प्रमाणयन्ति, शुभान् संस्कारान् रूढिवाद न् घोषयन्ति, संयमं कार्पण्यं कलयन्ति, धर्मप्रियतां भीरुतां भावयन्ति, परलोकचिन्तां परोपकारभावनां श्रद्धाजडत्वं गुरुजनसेवासपर्यां दासत्वमेव जानते ! एवं स्थितौ को नु बत सुपुत्रो दुहिता वा पित्रोर्गृहस्थाश्रमेऽनुभूयमानानि दुःखशतानि समनुविन्देत् ? को वा वार्द्धक्येऽपि जननीजनकौ सेवेत ? को वा मनसा वाचा कर्मणा धनेन श्रमेण च पितरौ तर्पयेत् ? कश्च मातृदेवः पितृदेव आचार्यदेवो वा भवेन्नामायुष्मानाज्ञाकरोऽनुशासनपरोऽद्य प्रियतमः पुत्रश्चिरञ्जीव ? ? ?

नैतावानेव पित्रोस्त्रासः पुत्राधमकृतोऽपि तु, केचित् सुपुत्रा महोदया द्वादशवर्षाणि यावत् विद्यालयेषु निवसन्तो नन्दनकाननसुखमिवानन्दसन्दोहममन्दं भुञ्जन्तो यौवने पदं निदधाना गुरुकुल एव यदृच्छयोपकल्पिते कुमारिकास्वयम्बरोत्सवे स्वोद्योगापकौशलशतैर्गान्धर्वी विवाहप्रणालीमधुनातनीमाश्रित्य कांचन समानगुणशीलवयोविद्यामनवद्यां प्रेयसीं परिणीय समानयन्ति तदा बहुप्रजः पितात्मनः प्रजापतित्वं धिक्कुर्वन् मूकवेदना अनुभवन्नेव पुत्रेषणासुखभक्षणं भुङ्क्ते परलोकेऽपि च नाकांक्षते पिण्डोदकमात्मजेभ्य इत्थंभूतेभ्यः ।।।

यदि च कश्चिदद्यतनः सुपुत्रो विद्यालयगुरूणां गुह्यातिगुह्यं मूलमन्त्रादेशं सरहस्यं सम्प्रदायदीक्षाव्रतं सर्वात्मना गृहीत्वा प्रशिक्षणलाभाय पर्यटनानन्दानुभवाय च समुद्रस्य परेपारं विदेशान् गन्तुं वल्गति तदा विश्वामित्राय हरिश्चन्द्रेणेव तत्पित्रा धनप्रबन्धोऽवश्यं विधातव्यो भवति । केचित्पुत्राः पुत्र्यो वा काश्चिदाजन्मब्रह्मचारित्रतं वा कौमारव्रतं वा रक्षितुं कामयन्ते। एतदपि पुत्रैषणापराधिभिः पितृभिरात्मदोषस्य दण्डोऽयमिति सह्यतां नेयं स्यात् । केचित्पुनः पुत्राः पुत्र्यश्च नेतृत्वमेव स्वजीवनोद्देश्यमभिकांक्षन्तस्तत्साधनत्वेनात्मनो राजनीतिप्रावीण्यमाश्रयन्ते विद्यार्थिसङ्घस्य मन्त्रिपदस्वीकारादारभ्यैवैवविधा यस्य कस्यापि विरुद्धं यत्र कुत्राप्यान्दोलनान्याचरन्तो लोकनायकत्वमभ्यस्यन्ति ! अपरे पुनः केचन तनुजास्तादृशा विद्यानुरागिणो निष्पद्यन्ते ये हि दिवानिशं पुस्तकालये वसतिं प्रकल्प्य तत्रैव सततं सुहृद्भिः साकं विद्वद्गोष्ठीसुखं निर्विशन्तो निरवकाशास्तिष्ठन्ति, ततस्ते पितरौ सेवितुं न पारयन्ति । अन्ये केचित् कलाप्रियाः कलाकारा साहित्यसेविनो लेखकाः कवयश्चित्रकाराश्चित्रपटसङ्गीतरसिका विज्ञानविशारदा भवितुमिच्छन्ति । ततो हि ते सदासर्वदा कल्पनालोके— विचरन्तो मोमुद्यन्तेऽतः पित्रोः सेवासौकर्यं न मनागप्यासादयन्ति । अन्ये च केचन वाणिज्यव्यवसायदक्षतां बिभ्रतोऽर्थशास्त्रयोग्यतामसाधारणीमात्मनः प्रख्यापयितुकामा आत्मजाः क्षणादेव कौबेरीश्रियमात्मसात्कर्तुं नवनवानव्यापारेषु व्यापारान् प्रतिदिनमुद्घाटयन्ति । पित्रोरजानतोरेवाधमर्णतामङ्गीकृत्य न्यायालयेष्वभियोगपराजिता अकस्माज्जनकं प्रतिभुवं प्रसह्य परिकल्पयन्ति ! केचनाजन्मनो नित्यरोगिणस्तनूजा मातुरुद्गारा पितुर्विकारा इव शरीरमौषधियुद्धस्य कुरुक्षेत्रं कुर्वाणाः खट्वाशरणा मातापितृभ्यां शुश्रूषणीया भवन्ति । बहवः पुनर्देशभक्ता राष्ट्रसेवकाः समाजसुधारकाः सत्पुत्राः काराकारतीर्थेषु स्वयं तपस्यन्तः सन्तापयन्ति च पितरौ मुहुर्मुहुः ।

इत्थमद्यत्वे पुत्रषणा महती विपत्संकुला प्रतीकारारुन्तुदा विडम्बना गृहस्थानामिति भुक्तभोगा अनुभववन्तो ब्रुवन्ति साश्रुधारं पश्चात्तापमाचरन्तोऽन्तर्दग्धा

# वर्तमानसमये पाश्चात्त्य नारीशिक्षा, तथा अस्माकम् कौटुम्बिकं जीवनम्

श्री नरदप्रसादपन्तः, (उपाध्यक्षः संस्कृतछात्रसंघः) श्रीदुग्धेश्वरसंस्कृतकालेज, पीलीभीत (उत्तरप्रदेश)

स्त्रीणां शिक्षणे एवं वैदुष्ये च पक्षे भारतीयाः विद्वज्जनाः प्राचीनसमयादेव आसन्। भारतीयसंस्कृतेः अध्ययनीयाः इतिहासाश्च सिद्धयन्ति यत् वैदिककाले, बौद्धकाले एवं हिन्दूकाले च आर्यकुल ललाम भूताः स्त्रियः पूर्णाः पण्डिता आसन् किन्तु ताः सर्वाः आदर्शगृहिण्यश्च भवन्ति स्म।

अद्य भारतस्य शिक्षाशास्त्रिमहोदयाः नारीशिक्षया देशस्य, सामाजिकस्य, पारिवारिकस्य चार्थिकावस्थायाश्च

---

लोकाः प्रगतिशीलेऽस्मिन्नव्यसभ्ययुगे विशेषतश्चास्माकं स्वतन्त्रे भारते देशे।।। केचित्त पुनः सन्ततिकृतोपद्रवपीडिता व्यथिता विकलधारश्च जनका जनन्यश्च स्वात्मन पुत्रेपणाफल भुञ्जन्तो भद्रकुलोत्पन्नत्वात्सभ्यतानुरोधाद्वान्तर्व्यथामिमां निगूहन्ति तनयतनूजाकृतोत्पातांश्च सर्वान् तूष्णीं सहन्ते।।।

सर्वे व प्रत्यक्षानुभवे यदि वयमात्मनो गृहस्थाश्रमं मङ्गलमयं स्वस्थ निष्कण्टकं विपद्बाधारहितं सफल च कामयामहे तदादौ प्रजोत्पादने तच्छिक्षणे च संयम समाश्रयसाधनैव श्रेयानतुत्तमोऽभ्युपाय। यदि च कथङ्कारमपि संयमिनो वयं न भवितुं पारयामस्तदा वैज्ञानिकेऽस्मिन् युगे भोगवादिभिराविष्कृतैः कृत्रिमै साधनैरपि च सन्ततिनिरोधं कुर्याम, नो चेत्पुत्रेषणायास्वे महती विडम्बनेति सुस्पष्टमेव। साधूक्तमेतत् —

"एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम्।
पुत्राणां दशभिः साकं भारं वहति गर्दभी" ॥१॥
"अजातमृतमूर्खाणां वरमाद्यौ न चान्तिम।
सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे" ॥२॥

संशोधनाय प्रयत्नशीलाः सन्ति। किन्तु मम सम्मतौ अस्य परिणामः प्रतिकूलएव दृष्टिगोचरो भवति। अस्य प्रमुख हेतुरयं यत् योरोपदेशस्य एवं भारतस्य संस्कृतिः, सामाजिकपरिस्थितिः, शिक्षादीक्षाश्च आदिकालादेव महद्भिन्नाः सन्ति।

अस्माकं परम्परागतविचारधारा एव मनोवृत्तीश्च पूर्णतया विनाश्य, तथा हठात् पश्चिमीयविचारभार भारतीयजनानां जीवने निक्षिप्य, पाश्चात्यशिक्षासमर्थक-शास्त्रिवर्गोऽद्य भारतीयमानवस्य कौटुम्बिकम् जीवनम् सुखमयम्, शान्तिमयं, आनन्दमयञ्च निर्मातुं सफलो भविष्यति किम्?

पाश्चात्यवातावरणेन प्रसारितेयं नारीशिक्षा अस्मभ्यम् मानसिक एवं आत्मिकशान्तिप्रदायिनी भवति किम्? अलम्, अनया पद्धत्या शान्तेः कामना तु मृगमरीचिका एवाऽस्ति। आधुनिकमानवसमाज नावगच्छति इति न, किन्तु अवगच्छत्येव यत् वर्तमाननारीशिक्षापद्धतिः अस्माकं कौटुम्बिकजीवनाय पूर्णरूपेण घातिका अभवत्। आंग्लशिक्षा एव सभ्यता पूर्वकालादेव हिन्दूसंस्कृतिम्, भारतीयसभ्यतां, शिक्षाम् तथा हिन्दूधर्मम् पदाक्रान्तमकरोत्।

आधुनिकी महिलाशिक्षापद्धतिः योरोपीयानां शिक्षाऽस्ति। तस्या शिक्षाया पवित्रहृदयानां भारतीयनारीणां आदर्शाः न सन्ति अपितु विषयासक्तानां पाश्चात्यनारीणामुग्रता विद्यते। यस्या मध्ये विलासिताऽपि स्पष्टतया परिलक्षिता भवति।

साम्प्रतिकी शिक्षिता भारतीयमहिला प्रायः शीलं, सदाचारं, संयमं, लज्जां तथा सेवाभावञ्च न जानाति।

# संस्कृतपत्राणां विहंगमावलोकनम् उपयोगित्वं च

डा० शंकरलालशर्मा कल्याणकैम्प (बम्बई)

सातत्यव्यावहारिकशब्दनिधिज्ञानाधिगमाय देश-विदेशानां वृत्तावबोधनाय लेखलेखनकलाप्रावीण्योपबृंहणाय मनोविनोदरञ्जनाय वर्तितघटनासमाचारवृत्ताय च भिन्नभिन्नभाषाभिज्ञमानवौघानां कृते भिन्नभिन्न-भाषाणां मासिक-पाक्षिक-साप्ताहिक-दैनिकपत्राणां अनवरतं प्रकाशनं अध्ययनं दर्शनञ्च नितरामेव यस्मिन् निर्विवादम्। अनया रीत्या कोऽपि जनः समाचारावबोधने कीदृशं काठिन्यमाप्नोति न हि। अयञ्च सरलः सुगमः पन्था अवलोक्यत एव। सदेशनिर्वाहक-वक्त्री-संलापयन्त्रद्वारा च इतोऽपि अधिकतरसरलं सौविध्यं प्राप्यते समाचारोपलब्धौ परं अन्योन्यमार्गेषु विभवभूयिष्ठं वरीवर्ति। भिन्न २ भाषाणां मासिक-पाक्षिकसाप्ताहिकदैनिकपत्राणां प्रकाशनं प्रतिमासं प्रति-दिनं च बोभोति बाहुल्येन। नवीननवीनानि चाविर्भ-वन्ति दैवानुकूल्यात्। तानि जनतया क्रीयन्ते वाच्यन्ते सोल्लासेन सोत्साहेन च। निश्चयमेव इतरभाषासु बहूनि पत्राणि भूरिसंख्यायां "संस्कृतात्" ऋते प्रकाशन्ते गृहीयन्ते च विदेशेषु प्रत्यहम्। अहो! महती खेदस्य-वार्ता इति! संस्कृते तु पञ्चषा मासिकपत्रिका एव न्यूनाति-न्यूनसंख्याया दृष्टिपथीचेक्रियन्ते, पञ्चषाणि च साप्ताहि-कानि। दूरे आस्तां कथा दैनिकस्य। किन्तोऽपि तु खलु तरं नु? संस्कृतसूरिकेन्द्रायमाणे भारतखण्डे अन्यभा-षामयानि दैनिकपत्राणि प्रत्यहं प्रकाश्येरन्। केवलं संस्कृतमेव शापभाग्भवेत् इति विलोक्य ताम्यति

किन्तु नरस्य कार्यक्षेत्रे उद्दण्डतया स्थानु स्पर्धां करोति।

आधुनिकशिक्षायामस्माकम् कौटुम्बिकं, गार्ह-स्थिकञ्च जीवनं सुखि तथा रसपूर्णम् निर्मातुं अध्यायाः न सन्ति। तथा त्यागस्य, तपश्चर्यायाः सहिष्णुतायाः, समर्पणस्य, शमदययोः एवं सदाचारस्य भावाङ्कुराणि पल्लवितानि पुष्पितानि च कर्तुं सामर्थ्यम् नास्ति।

अस्यां पाश्चात्यशिक्षायां तु वासनायाः विविधरङ्ग-रञ्जितोन्मत्तयौवनस्याऽऽकर्षणम् अस्ति। वर्तमानसमये पाश्चात्यशिक्षणपद्धत्या, नारीशिक्षासमर्थक-महानुभा-वेभ्यः ईश्वरतुल्यतयाऽहं प्रष्टुकामोऽस्मि यत् अनया शिक्षणपद्धत्या देशस्य, राष्ट्रस्य पारिवारिकस्य सामा-जिकस्य, नैतिकस्य चोन्नतिः किम्?

वर्तमानशिक्षायां शिक्षितायाः (ग्रेजुएट)गृहे एकतः

क्षेत्रे बालकानां रोदनं विद्यते, तथा अपरतः क्षेत्रे पतिम्प्रति तस्याः कटु-वाक्प्रहारः। किं कुर्वन्तु ते लोक-लज्जया एवं कुलस्य प्रतिष्ठाया भयेन ते पतिदेवाः शिक्षिताया एव निनादं मूकीभूय शृण्वन्ति।

महतो दुःखस्य विषयोऽस्ति यत् सीता, सावित्री, दमयन्ती, गार्गी, मदालसेत्यादीनां, सतीसाध्वीनां, नारीणाम् उत्तराधिकारिण्यः स्त्रियः अद्य पतिव्रतधर्माय, शीलाय, सत्याय च तिलाञ्जलिं दत्त्वा सीता-सावित्री सदृशीनां नारीणां निन्दां कुर्वन्ति।

पाश्चात्यरङ्गेषु रञ्जिता आधुनिकी नारी अद्य चलचित्रेषु नायिका(अभिनेत्री)रूपे, एवं सौन्दर्यप्रति-स्पर्धायाः हट्टके स्वकीयं विकारग्रस्तरूपं दर्शयित्वा स्वं गौरवान्वितमिवावगच्छति। अत्यन्तलज्जास्पदविषयोऽयं हिन्दू, हिन्दी, हिन्दुस्तानवासिभ्यो जनेभ्यः।

नश्चेत् । इदं स्फुटं प्रतीयते यत् संस्कृतभाषां प्रति लोकस्य संस्कृताभिमानश्च न दरीदृश्यते औचिती अभिरुचिः, बहीयान् अनुरागः, वरीयसी आदृतिः, सर्वथा चीना प्रीतिश्च सुतराम् । केवलया किं भवेत् वाचिकया सहानुभूत्या ? अन्यत् प्रभूता पत्रिका जनिं लब्ध्वापि द्रागेव विलीना येऽमुष्यति विज्ञवाचकन्यूनत्वात् रिक्थकोशाभावाच्च । किं नास्तीदं व्रीडायाः स्थानं अस्माकं कृते ? अस्माकं दौर्भाग्यवशात् एषा संस्कृतगीः अशरणा म्रियमाणा, अनादृयमाणा कुतो ग्रस्तकृत्यमाराध्येत तु नभाषासम्भाषणेन ? वयं मौनिमुनय इव, समाधिस्थयोगिन इव, चित्रचित्रिताकृतय इव, कीलकीलिता इव, यन्त्रयन्त्रिता इव भीत्यवलम्बिता इव स्तब्धा मूकास्तिष्ठेम इति महदाश्चर्यं दैवदुर्विलसितस्य ? किमेषा नव्या वार्ता नास्ति ? या संस्कृतभाषा अस्माकम् आद्या, सनातनी, ऋषिमुनिभिः संसेविता, परिपोषिता, परिपालिता, इतरजन्मप्रदायिनी हेयदृष्ट्या दृश्येत ? महत्कष्टमेतत् । "न हि प्राणात् प्रियतरा, लोके कापि न विद्यते । वरिष्ठा सुरवाण्या च विना संस्कृतभाषया"।

सम्प्रतीदं विचारणीयमास्ते । समन्तात् भारतावनौ कियन्त्यः संस्कृतपाठशालाः, विद्यालयाः, विश्वविद्यालयाश्च प्रतिष्ठापिताः सन्ति । तत्र वैदुष्यगर्विणाः, पण्डितप्रकाण्डाः, अध्यापकाः प्रोफेसराश्च छात्रान् अध्यापयन्ति ? यदि ते तान् कर्तव्यधिया प्रेरयेयुः, संस्कृतप्रचारधिया समुत्तेजयेयुः यत्रतत्र मातृभाषाप्रसारमनीषया उत्साहयेयुः प्रतिज्ञापयेयुश्च । स्वयमपि हार्दिकीं सहानुभूतिं यथावश्यं सहयोगं सौजन्यं सौहार्दं प्रदर्शयेयुश्च साहाय्यवितरणेन संस्कृतस्य ग्राहकसम्पादनेन । संस्कृतस्य गौरवगरिमाणं, सम्मानर्द्धिमानं, प्रतिष्ठाभूमानं, प्रियतास्वादिमानं च रक्षितुं पालयितुमलमाविष्णवो भवेयुः । इत्यत्रास्ति न कापि सन्दिग्धः । सा दीनं पुष्टेन उन्नतिशिखरमारूढा तिष्ठेत् सपदि । विद्वद्भिर्यदि सर्वतन्त्राकृत्या रजनिकर इव विद्योतितात्मा । हन्त ! दरकाले राष्ट्रेऽपि संस्कृतस्य एतादृशी दयनीयदशा ! यादृशी अस्मिन् स्वाधीनतायुगे स्वतन्त्रे भारते विलोचनपथमवतरति । अलं विशिष्य कथनेन । यदि भाषायामस्तीदृशी परिस्थितिः तर्हि संस्कृतपत्राणि कः ... क नाम उत्साहेन उत्कण्ठेत च इति विविधा चिन्ताः खटखटायते मे मनसि अश्रान्तम् । कदा एषा पुनः विलसिष्यति चन्द्रचन्द्रिकेव प्राप्तद्विगुणितगरिमगरिष्ठा विबुधवाहायि ।

स्वाधीनताप्राप्त्यनन्तरं केचन महानुभावाः संस्कृतविचक्षणाः यथाशक्यं संस्कृतभाषायां पत्राणि प्रकाशयितुमाविष्कर्तुं च भृशं प्रायासिषुः । परं दौर्भाग्यत्वात् कानिचित् अनियतरूपेण कथंकारं प्रकाश्यमानानि पंचषमासावधौ सरणासन्नान्यपि दैवप्रतिकूल्यात् सपद्येव नष्टान्यजायन्त । इतराणि च संस्कृतज्ञानाम् अननुरागित्वात् अद्यावधि जीवन्ति अपि अन्तिमश्वासान् श्वसन्ति कदा ? दृग्गोचरतां दर्शनतां च आयान्त्येव । हन्त ! सम्पादकराजाः ससाहसं सधैर्यं परस्सहस्राणि कष्टानि सोढ्वापि क्रियमाणप्रयत्नशता अज्ञाना इव पत्रप्रकाशनं चिकीर्षन्ति कथं कस्मात्? विध्याविगमात् कुर्वन्ति च कालेन । पौनःपुन्येन वाचकवरिष्ठान् दयालुग्राहकसन्दोहान् संस्कृतरसिकान् अनुरुन्धन्ति मधुराचारैः प्रेम्णा अनुनयन्ति, सकरुणं विलपन्ति प्रलपन्ति आलपन्ति च ग्राहकोपबृंहणाय संरक्षायै च । साहाय्यं प्रतीक्षन्ते दशदिक्षु चक्षुर्निक्षिप्य, उत्कतया च अभिलषन्ति पौष्कलद्रव्यराशिम् । हा ! अन्ते नैराश्यं, नैष्फल्यं, औदास्यं वैकल्यं, दौर्मनस्यं च लभन्ते

किंकर्त्तव्यविमूढतामश्नुवते । भारत एव अस्याः कर्त्तनं विमर्दनं कर्त्तुं केचिन् नायकशिरोमणयः अविवेकवैकल्यात् इच्छन्ति । को लाभः स्यात् एनां बहुश्रमैकसाध्यां प्रवीणछात्रैकवेद्यां अत्यायासबोध्यां पठितुं इति विजल्पन्ति । इत्थंभाविकां विफलतां बोभूयमाना विविच्य आलोच्य च चेखिद्यमानाः तान्यमाना अग्रे किं भावीति निर्णेतुं निश्चेतुं उन्मनायन्ते अहर्निशम् । न जाने इमानि प्रचलितानि पत्राणि अग्रे चलिष्यन्ति वा प्रगाढतमसि प्रच्छिन्नानि भविष्यन्ति इति तु सर्वान्तर्यामी भगवान् वेद । परं मे मनस्तु सन्देहायते परिस्थितेः निरीक्षणादेव । ईदृशी अस्ति आस्माकीनानां संस्कृतपत्राणां दुःखावहा चिन्ताजनिका च दशा । यां दर्श २ चेतः दन्दह्यते तातप्यते चान्तःकरणं सातिशयम् । आस्माकीना भारती अस्माभि अनाद्रियमाणा अन्यत्र विदेशेषु अनिवार्यरूपेण विद्यालयादिषु निर्धार्यते निःशङ्कं, सोल्लासं अध्याप्यते च । स्वदेशं भारतं उज्झित्वा जर्मनीदेशं यियासन्ति भारतीया संस्कृतमध्येतुम् । अहो ! भारतवर्ष ! त्वदीयानां पुत्राणां एषा दशा सञ्जाताऽस्ति साम्प्रतम् ।

कथनस्य नास्ति आवश्यकता । यत् पण्डितसमुदायः संस्कृतप्रेमिनिकरः आलस्यं विहाय इमां कर्त्तव्यधारां अविगण्य जागृयात् निद्रातंद्रायाः सपदि । तर्हि निश्चप्रचं बोभूयात् संस्कृतपत्राणां प्रभूतता । बोभूयमानो ह्रासिमापि मंक्षुदूरीभवेत् । पत्राणां सङ्क्षिप्तपरिचयः—

भारती—मासिकी जयपुरतः ६वर्षेभ्यो निःसरति । अस्याः प्रकाशनं नयनमनोहरं नियमितम् । विविधमञ्जुललेखविभूषितं प्रगतिविधायकं पत्रं मन्ये । वाचकाः अकंपयानुकंपया साफल्यपदमारूढं संस्कृतज्ञानां हृदयानि आह्लादयति नितराम् । अस्याः संपादकमहाशयाः सुयोग्याः, संस्कृतपरिपोषिणः उदारचेतसः सन्ति ।

भवितव्य—नागपुरतः ४वर्षेभ्यः नियमितवेलायां रोचकलेखैः हास्यविनोदपरिपूर्णैः रम्यैः विभूषिता पत्रिका जनमनांसि रञ्जयित्वा प्रगतिमासादयति निकामम् । अस्य संपादकानुभावा श्रीभा०वर्णेकरमहा० काव्यतीर्थाः पौंडितायुक्ताः ।

संस्कृत—अयोध्यातः २४वर्षेभ्यः पं० कालिप्रसादशास्त्रिसंपादकत्वेऽश्रान्तं प्रकाशते । एभिः महानुभावैः कौटिम्बिकसहस्राणि कृच्छ्राणि सोढ्वापि मध्येमार्गं विघ्नशतैः प्रतिहतैः राष्ट्रभाषान्दोलने साफल्यं नाध्यगामि । तदपि द्विगुणितोत्साहेन अर्धसाप्ताहिकं कर्त्तुकामैः महान् प्रयासः कृतः परं न किमपि सिद्धम् ।

साकेतः—अयोध्यातः साप्ताहिकरूपेण कदा-कदा दृष्टिपथं आयाति अस्हयोगात् ग्राहकवृन्दानाम् । अस्य संपादकाः पंडितप्रकांडाः दिवानिशं प्रयतन्ते ।

वैजयन्ती—बालकोटतः (प्रथमं मधुरवाणी मासिकरूपेण प्रकाशते स्म) अधुना साप्ताहिकी जाता । आकारप्रकारेण सुशोभना आकर्षिका विविधभावलेखालङ्कृता कदापि दर्शनसुलभा । अस्याः संपादका पंडितकोविदाः सरलचेतसः उदारधियश्च सन्ति ।

पण्डितपत्रिका—काशीतः निःसरति स्म साप्ताहिकी । साम्प्रतं पञ्चषमासेभ्यः दर्शनदुर्लभा । अस्याः संपादकमंडलं सुमहत् । सर्वे विद्वद्वरिष्ठाः, लोकप्रियाः, तपोमूर्त्तयः विशेषांकं गीतानामानं प्रकाशितुकामैः अभ्यर्थना कृता लेखेभ्यः । परं केनापि न प्रेषितः । ततः सपदि नयनागोचरता अभवत् ।

सुप्रभात-सूर्योदयौ—अधुना अनयोः पत्रयोः ऐतिहासिकी वार्ताऽजायत ।

अधुना अधस्तात् केचन हिताधायका उपायाः श्रमैतत्सेवायां प्रस्तूयन्ते । येषां सक्रियोपयोगेन

विशेषो लाभो निष्पद्येत इति मे द्रढीयान् विश्वासः ।

१—किमपि पत्रं दयालुग्राहकाणां अनुकंपामन्तरा सुदीर्घं प्रचलितुं दुष्करतरम्। अतः ग्राहकाभिवृद्धये समुचितोपाया अवलम्बनीयाः विज्ञापनप्रकाशनेन उपदेशविश्राम्लेन च जनता उत्साहनीया समुत्तेजनीया ।

२—आर्थिककोपापर्याप्तत्वात् पत्रचिरजीवित्वं नितान्तं असम्भवम् । द्रव्येण सर्वथा, अन्यच्च यत्नेन करणीयं केनापि प्रकारेण ।

३—संस्कृतभाषाप्रचाराय ग्राहकसम्पादनाय च केचन वक्तृत्वशक्तियुता उपदेशका नियोक्तव्याः । नगरे२ ग्रामे२ भ्रमित्वा संस्कृतोपयोगिता महत्त्वं च प्रदर्श्य ग्राहकतास्वीकरणे जनता प्रलोभनीयाः ।

४—प्रत्येकबृहन्नगरात् संस्कृतपत्राणि (मासिक-पाक्षिक-साप्ताहिकरूपेण) बहुलतायां प्रकाशनीयानि । समीचीनसामग्री । रोचकलेखाः, मनोहरविशेषाङ्काः, हृदयग्राहिकविताः, सामयिकसमाचारनिबन्धाः, अद्भुत-हास्यविनोदवृत्तान्ता प्राकाश्यं नेयानि ।

५—वार्षिकमूल्यं समुचितं स्यात् । येन प्रत्येकजनः ग्रहीतुं भवेत् ।

६—पत्रेषु व्यापारिकविज्ञापनानि हिन्दीभाषायां अवश्यं स्थापनीयानि येन महत्साहाय्यं भविष्यति पत्रप्रचालनाय ।

७—धनिनां सर्वदा अभ्यर्थनीया भाषोद्धाराय । आत्मनुदानस्य उद्बोधनीयाः पत्रं पठितुं आनायितुम् ।

८—यदि स्वकीयव्ययथवसुव्ययकरणात् प्रत्यहं पराकृत्य पृथक् स्थापनेन स्थायिकोशे, एकवर्षानन्तरं कियद् विपुलैरराशि सङ्कलितः सञ्चितश्च स्यात् । सत्यम् । एकादशकाकाणि आरकवितुष्टय च । अनया युक्त्या महान् लाभो भवेत् उभयोः ।

९—अवरुद्धेषु पत्रेषु ग्राहकाणां धनं विनष्टीभवति । येन कुप्यन्ति ग्राहका अन्यस्मै पत्राय साहाय्यं दातुं औदासीन्यं व्यञ्जयन्ति । सम्पादकानां कामपि प्रार्थनां सूचनां याञ्चां श्रोतुं बधिरायन्ते । अतः एतद् आशु दूरीकरणीयं ।

यदि उपरिनिगदितोपाया याथातथ्येन क्रियेरन्, तर्हि निर्विवादं महान् उपकारः फलिष्यति संस्कृतपत्राणाम् । उन्नतिश्च शीघ्रतरा भविष्यति इत्याशासेऽहम् ।

# विश्वाशान्तेरुपायाः

श्रीकाशीनाथशास्त्री, सस्कृतकालेज, नयनादेवी अम्बाला

वर्तमानकाले परितोऽशान्तेर्ध्वनिः श्रूयते। प्रथमन्तु राजनैतिकक्षेत्रे एवाशान्तिर्वर्तते, ये देशा ये जनाश्च स्वं स्व विजेतार जानन्तिस्म, त एव विजय प्राप्यापि अविजेतारस्सन्ति। आर्थिकक्षेत्रेऽत्यधिकाऽशान्तिर्वर्तते। देशे देशे श्रमिकाणां यन्त्रपतिभिः साकं, कृषिकाणां स्वामिभिः साकं, पदाभिलापुकाणां शासकैः सह सेवकस्य स्वामिना सार्धं रूप्यकेभ्य सघर्षो वर्धते। स्थाने स्थाने आन्दोलनानि जायन्ते प्रतिदिन समाचारपत्रेपु आन्दोलन-समाचाराः पठयन्ते। स्वपक्षानुमोदाय भापणानि भवन्ति। समाजे शिक्षास्थानेऽपीयमशान्तिः परिदृश्यते। अन्यक्षेत्रेपु अपि अशान्तिरेव वर्तते। अद्य जना. स्वं स्व कर्तव्यं न जानन्ति। अद्य तु या याचना वर्तते, सा केवलाऽधिकाराणाम्। अहो? अद्य समाजस्य प्राचीना व्यवस्था. शिथिलाः जाताः। अहो? अद्य मानवस्य नैतिकपतन भवति। एव वय पश्यामः, यद् कस्मिश्चित् क्षेत्रेऽपि शान्तिर्न दृश्यते। न जानेऽस्माकं पूर्वजा अस्मिन् विचारे तत्पराः अभवन्? यत् लोहपाषाणाभ्यामग्निरतीव कठिनतया ज्वलति, चेत् अस्य स्थानेऽन्यत्किमपि साधनं भवेत्, तथा च ईदृशो दीपको भवेत्, यो वायुना प्रकाशहीनो न भवेत्, तथा च द्वयोर्होरयोर्विंशतिमीलपर्यन्तं गमनाय किमपि साधनं भवेत्। तदा वयं जानीमः यत् जीवनमधुना सुखमय वर्तते। परं वर्तमानसमये विज्ञानेन वयमतीव दूरे आनीताः, यत्र वयमाश्चर्यचकिता भवामः। विद्युतः प्रकाशः व्यजनम्, वाष्पयन्त्रम्, टेलीफोनयन्त्रम्, आकाशवाणी, मोटरयानम्, वायुयानम्, अणुशक्तिः, इत्यादीनि सुगमताया बहूनि साधनानि सन्ति। वर्तमानसमये देहलीतः प्रयागगमनाय होराद्वयं समयो वर्तते। आकाशवाणी-यन्त्रेण पञ्चशतमीलदूरे स्थिता वयं नेतृणां भाषणानि शृणुमः। भयङ्कररोगाणां नाशाय औषधयः निर्मिताः। विद्युत्प्रकाशो वायुना प्रकाशहीनो न भवत्यद्य। अहो तदपि शान्तिर्न दृश्यते। अद्यत्वे तु उदरपूरणायान्नं नास्ति। शरीराय वस्त्रं न लभ्यते। अहो विचित्रा दशा। वस्तुत अस्या अशान्ते. कि कारणम्?

वस्तुतः अस्या अशान्ते कारण वर्तते, परस्परमविश्वासः, जातीय-द्वेषः, सत्यस्याभावः गान्धिनः अहिंसाया भावः। तथा चार्थिकाशान्तिः। यन्त्राणामाविष्कारेण जनाद्विपक्षे विभक्ता जाताः। एकतः धनिकवादः प्रधानः। समयेऽस्मिन देशस्य व्यवसाय एव न, अपितु राष्ट्रनीतिः, युद्धनीतिः, अस्त्रशस्त्रशाला (कारखाने) धनिकानां हस्त एव वर्तन्ते। भारतस्याशान्तेर्मुख्यानि कारणानि धनिकवादः यन्त्रयुगादीनि एव वर्तन्ते। यन्त्रयुगेन यावती वृद्धिः प्राप्ता—तावती एव देशे निर्धनता आयाता वर्तमानयुद्धसघर्षाणामिदमेव कारणं वर्तते। अत एवाद्ययावत् अमरिका, जर्मनी. जापानेटलीदेशैः साकं सन्धिप्रस्तावः स्वीकृतो नाभवन्। गतमहायुद्धेन देशे आर्थिक-दशा परिवर्तिता। यावत्पर्यन्त साधारणविभागस्यापि जनेभ्यः वस्त्रान्नयोरभावः दृश्यते। अधिकपरिमाणेऽन्नमन्नविभागे नष्टं जातम्। अवशिष्टमन्नं विपणी-चौरैः सम्यक तया विभागे न आनीतम्। अद्य मानवस्य पतनं भवति। वहुभागेपु अशान्तिर्भवति। अनया समाजस्यापि

# निराशान्धकारे आशाप्रदीपः

सरसंघचालकः श्रीमाधवराव सदाशिवगोलवालकरमहाभागः

इदानीमस्माकं देशस्य वातावरणं परस्परमविश्वासेन, तथा सद्भावनाया अभावेन परिपूर्णम् स्थितिः सेयमत्यन्तं खेदाऽऽवहा। किन्तु तथापि नैराश्यस्य नाऽऽवश्यकता। एतस्य सोऽयमेवोपायो यत् वयं पार्थक्यस्य सर्वा अपि भावना समूलं नाशयामः। ताः सर्वा वृत्तीर्वयं निःशेषयामो, या मातृभूमेरेकतां प्रति अस्माकं निष्ठां बहुधा बाधन्ते। एतदुद्देश्यस्य पूर्तये अयमेव प्रभावशाली पादन्यासोऽस्ति यत् स विधानस्य सर्वात्मिकां रूपरेखां परिवर्त्य पूर्णस्वायत्तानामर्धस्वायत्तानां वा राज्यानां सत्ता समाप्ता क्रियेत भारतेऽस्मिन् एकराज्यस्य एकस्या विधानसभायाः, एकस्या कार्यपालिकायाश्च स्थापना क्रियेत। या हि प्रादेशिकेन, साम्प्रदायिकेन, भाषासम्बन्धिना, अन्येन वा केनचित्प्रकारेण पृथक्त्ववादस्याऽभिनिवेशेन निर्मुक्ता भवेत्। शासकानां कर्तव्यमस्ति यत्ते स्वात्मनि धारयेयुः घटनानां च यथार्थदृष्टिकोणेन निरीक्षणं कुर्युः। संमुखोपस्थितं भयंकरसंकटं परिजानीयुः। अज्ञजनानां पथिच्युतस्य विरोधस्य सांमुख्यं कुर्वन्तस्ते एकात्मकं संविधानं निर्मीयुः। इदं स्पष्टमस्ति यत् कांश्चित् केवलवावदूकान् विहाय सम्पूर्णोऽपि जनसमाज एतत्कार्यस्य प्रबलं समर्थनं कुर्यात्। तथा अस्माकं वर्तमाना नेतारः अग्रिमसन्तत्यर्थं भारतस्य एकात्मतां निर्माय सर्वदार्थं पूज्यतां प्राप्स्यन्तीति।

---

नैतिकपतनं जायते। तथा विज्ञानस्य स्वागिन्थाने भृत्यता वर्तते। अद्यत्वेऽन्यदेशेभ्योऽन्नं भारतेऽऽनीयते। इयमतीव लज्जाया वार्ताऽस्ति। तथा च देशे निरक्षरता, चरित्रहीनता चापि वर्तते। अधुना तु देशे निरक्षरता नश्यति। परं पर्वतीयमण्डलानां बहुभागेषु अद्य यावत् वर्तते। अद्यत्वे त्यागस्य भावना समाजे न वर्तते, परं भोगस्य भावना वर्तते। विलासितया सक्ताः जनाः दृश्यन्ते। अधुना सत्य स्पष्टवादितादीनां गुणानां समाजे आदरो नास्ति, परं असत्यविश्वासघातादीनां दुर्गुणानामादरः समाजे भवति। अनेन प्रकारेण ज्ञायते, यत् युगोऽयमशान्तेर्वर्तते।

अशान्तेः पूर्वोक्तानां कारणानां दूरीकरणेन शान्तेर्युगोऽवश्यमेव आगमिष्यति। परमियं शान्तिः भारते सक्रियारूपेण करणीया। अनेन प्रकारेण सर्वे जनाः शिक्षिताः भवेयुः। तेषां नैतिक-उन्नतिर्भवेत्। सर्वे जनाः स्वं स्वं कार्यं प्रसन्नतया कुर्वन्तु। निर्धनताया रोगाणाञ्च देशे नामापि न भवेत्। समाजस्य व्यवस्था सुष्ठुभवेत्। स्त्रीणां समाजे आदरो भवेत्। मनुनाऽपि उक्तं—

"यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता" तथा स्त्रियश्चरित्रवत्यो भवन्तु। राज्यव्यवस्था चापि सुष्ठु भवेत्। अद्यत्वे समानताया भावनाया भावना समाजे वर्तते। आर्थिकक्षेत्रे धनस्य व्यवस्थापि सुष्ठु भवेत्। अतः आर्थिकक्षेत्रे धनिकवाद-स्थाने साम्राज्यवादितया भवितव्यम्। आर्थिक, सामाजिक, राजनीतिक, नवीनस्थापनायां मानवानां दृष्टिकोणपरिवर्तनस्यापि आवश्यकता वर्तते। यावत्समयं यथालाभसन्तोषस्य भावना न भविष्यति, तावत्समयमार्थिकदृष्टिकोणस्य सुचारुभावना मानवेषु न भविष्यति। ग्रामेषु शिक्षाया [illegible] प्रबन्धो भवेत् तेभ्यः धनग्रहणाय राजकीयनिधि [बैंक] भवेत्। वाचनालयानामपि व्यवस्था भवेत्। यावत्-समयमध्यात्मचिन्तनं मानवेषु न भविष्यति, तावत्समयं "कर्मण्येवाधिकारस्ते मा फलेषु कदाचन" अस्य मार्गस्यापि प्रवृत्तिर्न भविष्यति। न यावत् भगवन्निष्ठा भविष्यति, तावत्समयमशान्तिर्न नश्यति। अतः पूर्वोक्तकारणैरेव विश्वशान्तिर्भवितुमर्हति।

---

सम्पादकीयम्

# 'राजस्थान-संस्कृतसाहित्यसम्मेलनस्य' षष्ठं वार्षिकाधिवेशनम्

संस्कृतानुरागि महाभागैः संस्कृतपत्रेषु पठितमेव भवेत्तदिदं वृत्तं यदस्मिन् वर्षे [illegible] मासस्य सीकरनगरे राजस्थानप्रान्तीयस्य संस्कृतसाहित्यसम्मेलनस्य वार्षिकमधिवेशनं भविष्यतीति। आसीदस्य समयो दिसम्बरमासस्य जनवरीमासस्य वा [illegible] सुनिगतः। किन्तु [illegible] समये तदिदमधिवेशनं कर्तुं नाऽपारि सीकरनगरीयैः संस्कृतसेवकैः। सम्प्रति फर्वरी मासस्य ४ ५ दिनयोः (माघकृष्णाष्टमी नवम्योः) तदिदमधिवेशनं सीकरनगरे महता समारोहेण सम्पन्नमासीत्। एतस्याध्यक्षोऽभूत् 'राजस्थानसेवाऽऽयोगविभागस्य' (पब्लिक सर्विसकमीशन) अध्यक्षः श्रीमान् पं० देवीशङ्करतिवाडिमहाभागः। सम्मेलनस्याऽस्य उद्घाटनसमारोहः अजमेरप्रदेशस्य मुख्यमन्त्रिणः सुप्रसिद्धसाहित्यविदुषः श्रीहरिभाऊउपाध्यायमहाभागस्य करकमलेन निष्पन्नोऽभूत्। अधिवेशनेनाऽनेन सहैव 'संस्कृत-छात्र सम्मेलनम्', दर्शनपरिषद्, संस्कृतिपरिषद्, कवि-सङ्गीत-सम्मेलनप्रभृतीनि अन्यान्यपि महत्त्वपूर्णानि कार्याण्यभवन्।

सीकरनगरे या स्वागतसमितिर्निर्मिताऽभूत्तस्या अध्यक्षः श्रीमान् लाधूराम जोशीमहोदयः, तथा स्वागतमन्त्रिणौ पं० मन्मथकुमारमिश्र शम्भुप्रसादराणामहाभागौ। तथा संयोजकोऽभूत् पं० श्रीरघुवीरदत्तशास्त्रिमहोदयः। अधिवेशनमिदं सीकरनगरस्य सुविशाले 'बजाजभवने' समपद्यत। अधिवेशनस्य प्रथमदिने (अष्टम्याम्) प्रातः, गणेशस्मरणहवनादिकं धार्मिक-मङ्गलकार्यं समपद्यत। ततः सरस्वतीवन्दनायां कृतायां 'संस्कृतप्रदर्शिन्याः' उद्घाटनसमारोहः प्रारभ्यत। प्रदर्शिन्याः सुमहामहान्ति साधनानि जयपुरप्रतिष्ठित 'भारती' कार्यालयादेव समागच्छन्, यत्र संस्कृतसाहित्यस्य क्रमिक इतिहासः प्रदर्शितोऽभूत्। तदिमां प्रदर्शिनीं दृष्ट्वा प्रासीदन्सामाजिका लोकाः। प्रदर्शिन्या उद्घाटनसमारोहे सीकरनगरस्य रावराजाश्री कल्याणसिंहमहोदयस्य [illegible] समभूत्। तदनन्तरं वेदभगवतः शोभायात्रा नगरस्य मध्येमार्गं समभूत्, यत्र दर्शकानां भूयान् समवायः समघटत।

एतदनन्तरं विषय-निर्वाचनी समध्यक्षविशद [illegible] यस्मिन् सम्मेलने प्रवेशनीयानां प्रस्तावानां सर्वसम्मत्या निर्धारणमक्रियत। ततः, अपराह्णे चतुर्वादने सम्मेलनस्य प्रकाश्यमधिवेशनं प्रारभ्यत। मङ्गलाचरण [illegible] स्वागतगानस्य चोत्तरं श्री हरिभाऊउपाध्यायमहाभागः स्वीयमुद्घाटनभाषणं प्रारभत। यस्योपक्रमः (मङ्गलं भगवान्विष्णुः) इति मङ्गलाचरणपद्येनैवाऽक्रियत। श्रीमता प्रोक्तं यत् संस्कृतमस्माकमवलम्बनम्। एतस्य रक्षा सुतरामावश्यकी। डा० काटजू तथा राजाजी, महाशयैरुभयैरेव, संस्कृतं प्रति राष्ट्रभाषानिर्माणस्य सम्मानः प्रार्थना च कृता। किन्त्वहं विचारयामि, किमेतत्सम्भवति? यदि सम्भवति तर्हि सेयं प्रियाकथा। किन्तु यदा हिन्दीभाषाया एव व्याकरणं कठिनमितिप्रख्यायते, तदा संस्कृतस्य का कथा? भगवता पाणिनिना तदिदं सुदृढं निर्मितं किन्तु तदिदं कठिनमपि सवृत्तम्। भवन्तो निर्धारयिष्यन्ति यत्साम्प्रत

शिक्षापद्धतिः कीदृशी भवेत् ? हर्षस्य विषयो यद्राजस्थानसर्वकारेण संस्कृतविकाससमितिरेका नियमिताऽस्ति। भवतां प्रार्थनया सह मम सोयं प्रथमोवसरः। अहं सम्प्रति एकस्य लघीयसो भागस्य मन्त्री अस्मि, किन्तु सोऽपि साम्प्रतं स्वात्मविलयाय सनद्धः। इत्यादि।

"ततः स्वागताध्यक्षस्य श्रीलाधूरामजोशीमहोदयस्य स्वागतभाषणमभूत्। यत्र प्रोक्तमनेन महाभागेन यत् वैदिककालादारभ्य अद्यपर्यन्त संस्कृतभाषासेविभिः पण्डितैर्विद्यार्थिभिश्च संस्कृतभाषायाः संरक्षणार्थमभूतपूर्वा तपस्या कृताभूत्, तस्या एव फलमिद यत् संस्कृतभाषाविरोधिना वैदेशिकानां प्रबलतममाघातं सोढ्वापि सम्प्रति जीवति, गृहे गृहे बीजरूपेण वर्तमाना चाऽप्यस्ति। इत्यादि।"

एतदनन्तर सम्मेलनार्थं समागता सन्देशाः स्वागतमन्त्रिणा श्रीमन्मथकुमारमिश्रमहाभागेन समपठ्यन्त। सर्वप्रथम डा०राधाकृष्णनमहोदयस्य, तदनन्तर देशमुख, ढेबर, के०एम०मुन्शी, डा०पट्टाभिसीतारामैय्याप्रभृतीना सन्देशा अश्राव्यन्त।

एतदनन्तर प्रधानसभापतेः प्रस्तावः आसां पङ्क्तीनां लेखकेन कृतोऽभूद्–यत् विज्ञानयुगेऽस्मिन् भौतिकविज्ञानविषये सम्प्रति यत्किञ्चित् शिक्षमाणस्य भारतस्यास्य महत्त्व सर्वादिमसभ्यतायाः प्रवर्तकस्य संस्कृतस्यैव कृते परिगण्यते। ततश्च संस्कृतभाषायाः प्रचाररूपमुद्देश्यमादाय वयमत्र सघीभूताः स्मः। सम्प्रति सङ्घस्याऽस्य नेतार वय कामयामहे। वैदिकसभ्यताप्रवर्तिकाया भाषाया अस्या अध्यक्षो वैदिकपरिवारजात एवाऽपेक्ष्यते। अतएव अहं श्रीदेवीशङ्करतिवारिमहोदयस्य नाम प्रस्तौमि। एतदुत्तर बीकानेरवास्तव्य श्रीविद्याधरशास्त्री एम०ए०महोदयोऽस्यानुमोदन कृतवान्। ततः उदयपुरप्रान्तात् श्रीलक्ष्मीलालजोशीमहोदयोऽस्य समर्थनमकरोत्। सीकरप्रान्तात् प० श्रीघनश्यामचन्द्रशास्त्रिमहाभागः समर्थनमकार्षीत्। ततः पुष्पमाल्यसत्कृतः श्रीतिवारिमहोदयो हिन्दीभाषया स्वभाषणमुपास्थापयत्। यत्र संस्कृतभाषायाः, संस्कृतेश्च सम्बन्धे भूयस्तरामाग्रहः प्राकाशि। अनयोरुत्थानस्य सम्बन्धे सर्वैरेव भारतीयैः सुबहु प्रयतितव्यमित्यादि मार्मिकमुदैर्यत। भाषणमिद मुद्रितं सभायामेव सर्वेभ्यो वितीर्यते स्म। पठितं च भवेत्सर्वैरेव। एतस्य संस्कृतानुवादः पं० श्रीचन्द्रशेखरद्विवेदिमहोदयेन (जयपुरमहाराज संस्कृतकालेजाध्यक्षेण) समपठ्यत।

एतदनन्तर स्वर्गतानां संस्कृतसेविनां शोकप्रस्तावः पारितोऽभूत्।

तदनन्तरं राजस्थानीयविधानसभाया अध्यक्षेण श्रीनरोत्तमलालजोशीमहोदयेन संस्कृतस्य, तत्प्रचारस्य च विषये भूयस्तरां मर्मस्पृक् समुदीरितम्। श्रीमता प्रोक्तम्–यद्यपि संस्कृतस्य परिस्थितिः सम्प्रति परिवर्तिता। केन्द्रीयविधानसभाया आरम्भादद्यपर्यन्त संस्कृतविषये भूयान् विचारपरिवर्तः समभूत्। प्रारम्भे यदा हि लक्ष्मीकान्तमैत्रेण संस्कृतस्य राष्ट्रभाषात्वस्य प्रस्तावः समुपस्थापितोऽभूत्तदा सर्वैरेव तस्योपहासः कलितोऽभूत्। किन्तु सम्प्रति देशस्य कोण-कोणात्सोयं घोषः सश्रूयते—यत्संस्कृतस्य सम्बन्धे सम्प्रति सुतरामुदारविचाराः काम्यन्ते। श्रीयुतपनिक्कर-के०एम०मुन्शी काटजू प्रभृतयः संस्कृतस्य सुतरां पृष्ठपोषकाः। पूर्वं हि पाणिनि–कात्यायन–पतञ्जलिभिः संस्कृतभाषाया भूयसी उन्नतिः कृता। प्रचारस्य च मार्गः परिष्कृतः कृतोऽभूत्। इदानीमभिनवस्य पतञ्जलेरावश्यकता

प्रतीयते। सम्प्रति भाषायाः सारल्यार्थं सन्धिषु समासेषु च भूयसो विच्छेदस्यावश्यकता। सन्ध्यादिविच्छेदे कृते भाषा सरला भवेत्। किन्तु तथा कृते प्राचीनग्रन्थपरम्परायाः अवबोध. कठिनो भवेत्। कदाचिदेव कृते संस्कृतस्य सुस्थिरतायां लुप्तायां, शनैः शनैः संस्कृतस्यैव लोपो भवेदिति भयं भूयस्तरां भवति। यतोहि पुराकाले 'अन्या अपि अपभ्रंशाद्या बह्वयो भाषा उत्पन्ना', क्रमेण विलुप्ताश्च। किन्तु संस्कृतभाषा न नाम नष्टा, यतो हि सेयमासीत्सुस्थिरा भाषा। यदि अद्यत्वे भगवान् व्यासोऽस्माकं सम्मुखे समागच्छेत्तर्हि वयम् अद्याऽपि तयैव भाषया तेन सह संलापं कर्तुं शक्नमः, या हि भाषा तस्मिन्समये व्यासस्याऽऽसीत्। अत एव आवश्यकं त्विदमेव यत्परम्परागताया भाषाया विकृतिं न कुर्मः। अद्यत्वे संस्कृतभाषां विद्यार्थिनः किमिति न पठन्ति ? एतस्य कारणं वायोः (हवा) युगपरिवर्तनमेव। अयं पाठ्यक्रमो विदेशेभ्य एव भारते समागतः। खेदस्य तु सोय विषयो यत् प्राचीनपण्डितानां परिवारेभ्योऽपि संस्कृतपठनं लुप्यते। संस्कृतपरीक्षाः, आङ्गलपरीक्षाश्च समानान्तरेण कियत्पर्यन्तं परिचलेयुः ? हन्त संस्कृतकालेजः, आङ्गलभाषाकालेज इति विभेदोऽनावश्यकः। सम्प्रति संस्कृतमिदं भारतस्याऽऽत्मसाद् भवेदित्यावश्यकम्। संस्कृतं लोकजीवनस्य भाषा। दक्षिणाञ्चलप्रचलिताः सर्वा अपि भाषाः संस्कृतमिश्रिताः। संस्कृतमिदं न केवलं भारतस्यैव भाषा। डा० रघुवीरमहोदयो बहून् ग्रन्थान् चीनदेशतः समाहरत्। अतएव सेयं विश्वव्यापिनी भाषा। इत्यादि।'

ततः श्रीलीलावती(पं०श्रीरघुवीरदत्तशास्त्रिमहोदयस्य पुत्री) अपि संस्कृतप्रचारसम्बन्धे समभाषत यत् महिलाजनेष्वपि सम्प्रति संस्कृतप्रचारस्य महती आवश्यकता। रात्रौ सङ्गीतस्य, तथा हिन्दीभाषया निबद्धस्यैकस्याऽभिनयस्य प्रदर्शनमक्रियत। तदनन्तरं संस्कृतकविसम्मेलनं प्रारभ्यत। यस्याऽध्यक्षोऽभूदासां पङ्क्तीनां लेखकः सोयं 'भारती' सम्पादक एव। दूरदूरागतैर्बहुभिः कविमहाभागैर्निजरचना अश्राव्यन्त। 'जीवनं भारभूतम्' इत्यादीनां पूर्वदत्तानां समस्यानामपि पूर्तयः श्राविता अभूवन्। निशीथपर्यन्तं सोयं कार्यक्रमः प्राचलत्। ततः समाप्तौ सभापतेर्मङ्गलवचनात्तदीयपद्येन सभाया विसर्जनमभूत्।

द्वितीयस्मिन् दिने (५ तारिकायाम्) अष्टवादने प्रातः संस्कृतच्छात्रसम्मेलनमध्यविशद्–यस्य सभापतिरासीद् पं० श्रीचन्द्रशेखरद्विवेदीमहोदयः [ प्रिंसिपल, महाराजसंस्कृतकालेज, जयपुर ]। ततो दशवादने दर्शनपरिषदोऽधिवेशनमभूद् यस्याध्यक्षोऽभूत् श्रीयमुनाधरलाटामहाभाग [रामगढ, शेखावाटी]। अपराह्णे तु 'संस्कृतिपरिषत्' समभूदधिविष्टा, यस्या अभूदध्यक्षः श्रीरामनिवास 'सौरभ' महाभागः [ झालावाड ]। एतदङ्गभूतस्य कार्यकलापस्य समापनोत्तरम्, अपराह्णस्य चतुर्वादने सार्वजनिक द्वितीयदिनस्याधिवेशनं प्रारभ्यत। अत्र हि संस्कृतोन्नतिविषये बहवः प्रस्तावा उपस्थिता, अनुमोदिता, समर्थिताश्चाऽभूवन्। ये हि समधिकस्थानापेक्षित्वात् सति सम्भवे पृथक् प्रकाश्येरन् [ सीकरस्थ-स्वागतसमिते कार्यालयात्तेषां प्राप्तिप्रतीक्षा ]।

एतदनन्तरं 'शलाकापरीक्षा' प्रारभ्यत। अस्मिन् वर्षे साहित्यदर्पणे, सिद्धान्तकौमुद्याः समासाश्रयविधिपर्यन्ते भागे च सेयं परीक्षा प्रस्तुताऽऽसीत्। साहित्यविषयस्य परीक्षकाः—आसां पङ्क्तीनां लेखकः सोयं 'भारती' सम्पादकः, पं० विद्याधरशास्त्री, बीकानेरस्थ

श्रीहनूमत्प्रसादशास्त्री चाऽऽसन्। परीक्षायाश्चत्वारो विद्यार्थिनोऽभूवन्। किन्तु नैकेनाऽपि यथावत्सन्तोषजनकमुत्तरं प्रत्तम्। एव व्याकरणे एकमात्रो विद्यार्थी आसीत्। तस्यापि यथावत्सन्तोषिका परीक्षा न निर्वृत्ता। अतएव पूर्वप्रतिश्रुत. पूर्ण. पारितोषिको न प्रदातुमशक्यत। किन्तु विद्यार्थिनामुत्साहसंवर्द्धनार्थं साहित्ये प्रथमाय २१) एकविंशतिमुद्राः, द्वितीयाय ११) एकादशमुद्राः, सम्मेलनकार्यालयात्प्रादीयन्त। एवमेव व्याकरणेऽपि। एतदनन्तर सम्मेलनस्याऽस्य साफल्यकाण्डः प्रारभ्यत। अद्यावधि सीकरस्य संस्कृतमहाविद्यालय (कालेज) अतिसङ्कीर्णे अनावृतप्राये एकस्मिन् चतुरङ्गणे समध्यविशत्। यस्मिन् विद्यार्थिनामध्यापकानां च सर्वविषयेष्वतीव असुविधा आसीत्। अस्य विद्यालयस्य निरीक्षणं जयपुरादागतैः 'संस्कृतविकाससमितेः' सदस्यैरपि कृतमभूत्। तैरपि महाविद्यालयस्य स्थानमिदं नाऽभिरोचितम्। किन्तु भूयसः प्रमोदस्य सोयं विषयो यत् यथैव प्रस्तावादिकार्यं समाप्तमभूत् तथैव सीकरस्य रावराजाश्रीकल्याणसिंहमहाभागेन मध्येसभमागत्य अतीव उदारतया परमोत्साहेन च स्वयं घोषितमभूद् यत् संस्कृतमहाविद्यालयस्य कृते अहमतीव समुचित स्थानमद्यैव वितरामि। आवश्यकतायां सत्यां तस्य परिष्कारस्य कृते तत्समुचित द्रव्यं च वितरामि। एतदनन्तर शेखावटीप्रदेशस्यान्यान्यैरपि द्वित्रैः श्रेष्ठिमहोदयैः संस्कृतविद्याप्रचाराय सहस्रतोऽधिका मुद्रास्तत्कालमेव व्यतीर्यन्त [ येषां नाम, द्रव्यसंख्या च सम्मेलनकार्यालयातपरतो विज्ञायेत ]।

अग्रिमवर्षस्याऽधिवेशनार्थं राजस्थानस्य सुप्रसिद्धादैतिहासिकनगरादुदयपुरान्निमन्त्रणमलभ्यत, यद्धि सर्वसम्मत्या स्वीकृतमभूत्। एतदनन्तरं अग्रिमकार्यनिर्वर्तनार्थं कार्यकारिण्याः समितेर्निर्वाचनमभूत्। ततो धन्यवादप्रदानप्रथायाः प्रेमप्रकर्षतः प्रपालनोत्तरं भारतमातुर्वन्दनमङ्गलेन सभाविसर्जनमभूत्।

## वटोदर ('बड़ौदा') प्रान्ते संस्कृतसमुत्साहः

[काव्यलक्षण-रसविषये व्याख्यानम्]

भारतवर्षमिदं संस्कृतभाषायाः केवलंप्रभव-क्षेत्रमेव न, अपि तु प्रभावक्षेत्रमपि। अस्मिन् भारते संस्कृतविद्यासेयं तादृशी प्रभावशालिनी समपद्यत यद् विद्याप्राप्तये दूरदूरद्वीपेभ्योऽपि विद्याभिलाषिणः समागच्छन्ति स्म। पाटलिपुत्र-काशी-तक्षशिलादीनि तादृशानि क्षेत्राण्यासन् येषु द्वीपान्तराणामपि शिक्षार्थिनः समागच्छन्। एतदतिरिक्तम्, हिन्दुसंस्कृतिरक्षका अत्रत्या राजानोऽपि विद्या कलानां रक्षार्थं प्रचारार्थं च नानाविधान् प्रयत्नान् कुर्वन्तो भारतीयविद्यानां कृते सुस्थिराणि केन्द्राणि स्थापयामासु। जयपुरनगरप्रतिष्ठापकेन महाराजश्रीजयसिंहदेवेन निजराज्ये यथा ज्योतिष-धर्मशास्त्रादीनां सुस्थिराणि संस्थानानि स्थापितानि, तथा गायकवाडनरपालेनाऽपि वटोदरराजधान्यां विद्यानां कलानां च कृते भूयस्तरामुदारता प्रकटिताऽभूत्। इयत्तानाम्ना बहोः कालादत्र संस्कृतपरीक्षाः प्रावलन् यासां कृते दूरदूरदेशेभ्यो विद्वांसः समागच्छन्ति स्म, द्रव्यादिसमान चाऽधिगच्छन्ति स्म।

वर्तमानयुगं राज्ञां कृते प्रतिकूलम्। अस्मिन् समये प्रजापीडकेभ्यो राजनामधारिभ्यो व्याकुलीभूता जनता प्रजारक्षकेभ्योऽपि राजभ्यो ननु भीत-भीतेव। अतएव हि प्राचीनानि राजसंस्थानानि सम्प्रति पूर्वैश्वर्येण विरहितानीव। न तेषु साम्प्रतं विद्यानां कलानां च तादृशी संपत्। किन्तु प्रमोदस्य विषयो यद् वटोदरपत्तने

साम्प्रतमपि संस्कृतविदुषां समवायः समयानुसारं साधीयानेव। 'महाराजासयाजीरावविश्वविद्यालयेन' आमन्त्रितप्राध्यापकरूपेण (विजिटिङ्ग प्रोफेसररूपेण) साग्रहमामन्त्रितोऽहमवालोकयं बटोदरपत्तनं प्रथमप्रथममेव। अत्र मया अन्यनगराणामपेक्षया संस्कृतचर्चा सुदशापन्नैव समासादिता। शिक्षाविभागस्य नियमानुसारम्, अत्रत्ये 'संस्कृतमहाविद्यालये' दिनद्वयं यावद्भून् मम व्याख्यानम्। प्रथमदिने रसगङ्गाधरस्य काव्यलक्षणमवलम्ब्य। यत्र हि अग्निपुराणमारभ्य दर्पणान्तानां सर्वेषामेव साहित्यनिबन्धानां काव्यलक्षणस्य अतिमार्मिकीमालोचनां विधाय स्वलक्षणं स्थापितम्। द्वितीयदिने–रसगङ्गाधरनिरूपित रसस्वरूपं विशदीकृत्य (एकादशसंख्यानां रससंप्रदायानां मूलतत्त्वं निर्धारितमभूत्।

एतत्प्रसङ्गेन मया दृष्टं यत् अत्रत्ये साहित्यानुरागि-समवाये राज्याश्रिताः संस्कृतविद्वांसस्तु सर्वे आसन्नेव। किन्तु आङ्गलभाषाकालेजस्याऽपि साहित्यानुरागिणः सर्वे समागता अभूवन्। एवं प्राच्यगवेषणाविभागस्य ('ओरिएण्टल रिसर्च इन्स्टिट्यूट') अधिकारिणोपि सर्वे सम्मिलिता अभूवन्। अस्मिन् विभागे अन्यान्यसंस्थानेषु सुदुर्लभाः संस्कृतभाषाया अनेके प्राचीना अमुद्रितग्रन्था मया दृष्टाः। इत एव हि कार्यालयात् 'गायकवाड्संस्कृतसिरीज्'नाम्नी ग्रन्थमाला प्रकाशिताऽस्ति, यस्यां 'व्यक्तिविवेक' 'काव्यमीमांसा'(राजशेखरस्य)द्वयोऽद्भुता ग्रन्थाः प्रकटिता अभूवन्। यस्यां च साम्प्रतम् अभिनवभारतीटीकासहित भरतस्य नाट्यशास्त्रं प्रकाश्यते।

एतदेव न एतन्नगरीये साहित्यसमाजे नगरस्य न्यायाधीशाः (सिटी मैजिस्ट्रेट), आङ्गलभैषज्यविभागाधिकृताः (डाक्टर), वाकीलाः, ज्योतिषिकाः, याज्ञिकाः, कर्मकाण्डिनश्चेत्यादयः सर्वेऽपि नगरवासिनः सभ्याः सोत्साहं समवायन्। राजकीयसंस्कृतमहाविद्यालयस्याऽध्यक्षोऽस्ति– श्री हरिप्रसादमहतामहोदयः M. A. B T. काव्यतीर्थम्। महाविद्यालये चास्मिन् प्रायः सर्वाण्येव शास्त्राण्यध्याप्यन्ते। येषामध्यापनाय अनेके सुयोग्या विद्वांसो नियताः सन्ति। तेषु व्याकरणाचार्य प० श्रीकालिकाप्रसादशुक्लमहोदयेन सहाऽस्मदादीनां समभूत्प्रगाढः परिचयः। एष हि महाभागो वटपत्तनस्थ 'संस्कृतविद्वत्सभायाः' प्रधानमन्त्री।

## विद्वत्सभा च तदध्यक्षश्च

इदानीं गुर्जरप्रान्ते आर्यसंस्कृतेर्ज्योतिर्भूतस्य, वटपत्तनीयपण्डितसमाजप्रमुखस्य किञ्चित् परिचयः प्राप्यताम्। एष हि पण्डितपञ्चाननः साहित्यशिरोमणिः श्रीबदरीनाथकाशीनाथशास्त्रिमहाभागः। अयं हि महोदयो न्यायादिदर्शनेषु मार्मिकोऽपि सुललितकवितायां सिद्धहस्तः। महाभागेनाऽनेन वर्तमानयुगे प्रचलितानां नवीनगीतीनां प्रकारेण संस्कृतस्य सुललिता गीतयो विरचिताः, या हि तत्रत्यसभासु समये समये गीयन्ते [ सत्यवसरे इमा गीतयो 'भारती' पाठकानामपि सेवायां समुपस्थाप्येरन् ]। महाभागोऽयं काँकरोलीस्थगोस्वामिप्रवर– तृतीयपीठाधीश्वर श्रीव्रजभूषणलालजी महाभागैः 'विद्यासुधानिधि' सुवर्णपदकेनाऽलंकृतः। 'अभिनवजयदेव' इति प्रान्तेऽस्मिन्महोदयस्याऽस्य प्रसिद्धि। न केवलमिदमेव। अपितु सोयं गुर्जरप्रान्ते श्रीमद्भागवतकथाप्रवचनेऽपि सर्वतो विश्रुतः। पुराणकथा सेयं श्रीमतो वंशपारम्परिकी। महाभाग-

# भारती

प्रमुखं संस्कृतमासिकपत्रम्



त्यागी दृढव्रतोऽसौ संयमवान् हिन्दुसंस्कृतेरविता ।
'गुरुजी'ति गौरवाख्यो माधवविबुधश्चिरं जयतात् ॥

राजस्थान-मद्रास-मध्यप्रदेश-सौराष्ट्र-भूपाल-उत्तरप्रदेश-बिहार-पञ्चनद-आन्ध्र-सर्वकारैः स्वीकृता—

## ❀ विषय-सूची ❀



सूचना :—सर्वे ग्राहकाः सूच्यन्ते यत् पत्रव्यवहारावसरे निजग्राहकसंख्या स्वस्मिन् पत्रे अवश्य दर्शयेयु । अन्यथा पत्रोत्तरे बाधा समुत्पत्स्यन्ते ।

### —❀ "भारती" पत्रस्य उद्देश्यानि नियमाश्च ❀—

१. संस्कृतभाषाया प्रचारः, सरलेन संस्कृतेन सामयिकानां विचाराणाम्, उत्कृष्टाया मानसिकविचारपरिपोषिकाया. सामग्र्याश्च समर्पणम्, अस्य पत्रस्योद्देश्यानि ।

२. 'भारती' पत्रस्य वार्षिकं शुल्क ३) रूप्यकत्रयम ।

३. मासिकपत्रमिद प्रतिमासं पूर्णिमासं पूर्णिमाया तिथौ प्रकाशितं स्यात् ।

४. एकस्यांकस्य मूल्यम ।=) आणकषट्कम् ।

सम्पादकः—
कविशिरोमणि
भट्टश्रीमथुरानाथशास्त्री
सहसम्पादक.—
देवर्षिकलानाथशास्त्री B. A.
जयपुरम

प्रबन्ध-सम्पादकः—
गिरिराजशर्माशास्त्री

भानुवद् भारतीयानां भास्वद्भवनभासिनी ।
भागीरथीव भावाढ्या भारते भातु भारती ॥

वर्षः ६ } फाल्गुनशुक्लाप्रतिपत्, सं० २०१२ { अङ्कः ५

# वसन्तस्य स्वागतम् !!

[ घनाक्षरी–छन्दसि ]

देवघनाक्षरी—

वनविटपेषु भूरि शोभते कुसुमघटा
रोचते सरोजखण्डसुषमा सरसि सरसि ।
भाति सहकारे कलकोकिलकुहूना रवो
मधुकरयूनां स्वनः सरसा पयसि पयसि ।
मञ्जुनाथ रसिकमनःसु मदलक्ष्मीर्भाति
दृशमुपयाति कामचर्चासौ रहसि रहसि ।
मन्ये मधुपर्वणि मनोभूर्मदजन्मोन्माद—
मङ्क्ते विशङ्क निजमुद्रया मनसि मनसि ॥

सिंहावलोकनम्—

गीयन्ते निकुञ्जे गुणगीतयो वसन्तस्याद्य
मत्तपिकपुञ्जे कुहूध्वनयः प्रचीयन्ते ।
चीयन्ते चतुर्दिक् चञ्चरीककुले मोदरसाः
सरसरसाले सर्वसुषमाः समीयन्ते ।
मीयन्ते मनःसु मन्मथस्य महिमानो भूरि
मञ्जुमकरन्दाः सरघाभिः परिपीयन्ते ।
पीयन्ते दृशैव रसिकेन फुल्लवासन्तिकाः
काममभी वासन्तिका वासरा सुगीयन्ते ॥

# अनङ्गप्रभा

महोपाध्याय पं०वासुदेवशास्त्री बागेवाडीकर साहित्याचार्य, वेद-तर्क-तीर्थः, शोलापुरम्

अस्ति खलु पूर्वापरवारिधिवेलापर्यन्तविस्तृत दिगन्तप्रसृतैरिव शाखाबाहुभिर्बहुभिः किंशुकैरालिङ्गितभूमध्यं खमिव स्पृशद्भि अत्युच्छ्रितैर्गिरिवरसखैः स्वर्गाधिपतये तापसतपश्चरणम् अगणितकायक्लेशं निवेदयद्भिरिव नैकैस्तालतमालपादपैरुपशोभितं केसरिकरितरक्षर्वादिभिः हिंस्रः, मृगशशकाद्यैः अहिंस्रैश्च पशुभिः संकीर्णक्रूरसत्वमप्यक्रूरजनससेवितं पुलिन्दवृन्दैर्हतानां नैकक्रूरसत्वानां रुधिरस्रावै पुरा विन्ध्यवासिन्या देव्या निहतानां दैत्यानामिव रञ्जितभूमिभागं विन्ध्यारण्यं नाम। अस्यैव महावनस्य समीपे नैकविधैर्नैकसंख्यैः रत्ननिवहै रत्नाकरशोभां वहन्तीभिर्विपणीभिरुपशोभितं विशालैः सुधाधवलैः प्रासादैर्विराजमानं, स्वे स्वे कर्मण्यभिरतैर्वृन्दारकवृन्दैरिव पुण्यैर्नगरजनैरध्युषितं स्वाध्यायपराणां द्विजाना वेदध्वनिभिर्निनादितं नैकविधसुवस्तुसम्पदा सदाऽमरपुरमिव ऋद्धं धनधान्यसमृद्धं सुरपुरं नाम नगरम्। विन्ध्यप्रदेशस्यास्य पद्मराजनाम्नोऽधिपतेस्तन्नगरं राजधान्यासीत्।

नयेन महीं शासतस्तस्य भूपालस्य पद्मा नाम पद्मनेत्री चारुगात्री महिषी बभूव। परस्परानुरक्तौ तौ दम्पती चिरं सन्तानं न प्रापतुः। प्रजाहितदक्षे मन्त्रज्ञे मन्त्रिणि निहितराज्यभारः स धर्मपत्न्या तया समं विन्ध्याचलवासिन्या देव्याः सर्वथा समाराधनपरः संजातः। तत. केनचित् कालेन देवीप्रसादात् स तस्यां राज्यां तनयामलभत। सा सौन्दर्ये रतिमप्यतिशेते स्म। शुक्लपक्षे चन्द्रकलेव सा प्रतिदिनमवर्धत। अतः पिता कलावती इति तस्या नाम चक्रे। यदा सा यौवनमधिगतवती तदा नैके युवानो राजकुमारास्तां राजकुमारीं प्रार्थयन्त। परं स्वरूपगर्विता सा नैकमपि कुमारमन्वमन्यत। सा प्रतिजज्ञे—"शूरं रूपवन्तं ज्ञानिनमेव वृणीय" इति। तत श्चिरं न कोऽपि तामकामयत। तेन तस्याः पिता भृश चिन्तातुरोऽजायत।

अथैकदा ताम् अगणिताभराङ्गनालावण्यां श्रावं श्रावं तया सह परिणिनीषवश्चत्वारो युवानो राजसभां समुपस्थिता। समाकर्णिततदाशयेन राज्ञा पृष्टास्ते राजकुमारीसमक्षं स्वं स्वं वृत्तान्त निवेदयामासुः। एकेनोक्तम्—"अहं चतुर्वेदजुषः श्रोत्रियस्य ब्रह्मनिष्ठस्य कुले समुत्पन्नो जीवदत्तनामा। अनधिगतधनोऽपि समधिगतसकलविद्याधनः। अधिगतधनुर्विद्य समरवीरः। शरीरसौन्दर्यहीनोऽपि समृद्धगुणसौन्दर्यः। देवीप्रसादाल्लब्धसञ्जीवनविद्यो विगतासुं सासुं करोमि" इति। अपरेण कथितम्—"क्षात्रकुलसम्भवो रणधुरन्धरोऽहम्। अनूपरूपसम्पन्नोऽनेन खड्गेन जीवामि" इति। ततोऽन्यो निवेदितवान्—"कृषिकर्मरतः पशुपक्ष्यादिभाषावेदी शूरो रूपवान् वैश्योत्तमः" इति।

अनन्तरं चतुर्थः प्रोक्तवान् शूद्रवंशसजातोऽहं प्रत्यहं पञ्चपट्टिका निर्मिमे। अतो जना मां पञ्चपट्टिकमाहुः। तास्वेकां देवायान्यां ब्राह्मणाय समर्पये। तृतीयामेकां स्वार्थे चतुर्थीं पत्न्याः कृते रक्षामि। अवशिष्टां च विक्रीय कुटुम्बोपजीविकां सम्पादयामि। सौन्दर्ये तु मदनमप्यतिशये" इति। ततः कलावती प्राह चत्वारोऽप्येते न मेऽभिमताः। यतो विप्रोऽयं दुर्दर्शनः। क्षत्रियस्तु

निर्धनः सेवकश्च । अवशिष्टौ द्वौ हीनवर्णौ" । इत्युक्त्वा सा तान् सर्वान् प्रत्याचष्ट ।

अथैकस्मिन् दिवसे महाकायो गजः सहसा नगरं प्रविश्य निखिलं नगरं तुमुलमकरोत् । तथाविध विपन्न-प्राय पुरमवलोक्य ते चत्वारोऽपि तस्य मत्तेभस्य सम्मुख प्रधाविताः । खड्गधारी युवा तं महता बलेन तथा प्राहरत् यथा स तत्क्षणं परावर्तत । अनन्तरमेकदा स राजा मृगयायै वनं गतः । मृगयादर्शनकाङ्क्षया तेऽपि तत्र गताः । मृगयासक्तं किञ्चिल्लक्ष्यं लक्षीकृत्य शरसन्धानपरं नृपं सहसा कुतोऽपि कश्चित्करालवदनो भीषणरवः कण्ठीरवोऽभ्यपतत् । अभियान्तं त वनराजमभिवीक्ष्य अगणितस्वजीवितसंशयास्ते साहसिकास्तं मृगपतिमभ्यद्रवन् । तैरुपद्रुत पञ्चाननो यथागत न्यवर्तत । अनेन तेषां महता साहसोपेतेन शौर्येण प्राण-सङ्कटान्मुक्तो नितरां सन्तुष्टो महीपति । प्रत्यागतः स भूमिपाल सभायां स्वकन्यकां समाहूय सर्वेषां सदःसदां समक्षमुपदिष्टवान्—"बाले, एते सर्वेऽपि महासत्वसम्पन्नाः शूरतमा लोके । अमीषां वीरत्वं प्रत्यक्षीकृतमस्माभिः । तेषामन्यतमस्त्वया वरणीय इति मे मतिः । तमहं धनवन्तं करोमि" इति । तदनुरोधात् साऽब्रूत—"भवतु । यथाऽऽज्ञापयति तातः । ज्योतिर्विदमाहूय स प्रष्टव्यः केन सह मे विवाहो घटते" इति ।

आकारितः कार्तान्तिकः समागत्य ग्रहगति विज्ञायाब्रवीत्—"देव, न केनापि सम परिणयोऽस्या घटते । इयं शापभ्रष्टा विद्याधरकन्या वर्तते । अस्या आयुरितो मासत्रयावधि । त्रिभिर्मासैरमुष्याः परिणयस्य विचारो विधेयः" । ततो मासत्रयानन्तरं भूयः सर्वेऽपि सदसि सम्मिलिताः । आस्थानमण्डपोपविष्टा कलावती अकस्मात् स्वं पूर्वजन्मवृत्तान्तमस्मरत् । सपदि नेत्रे निमील्य प्राणानत्यजत् । तेन हि सकला सभा परं दुःखिताऽभवत् । दुःखावेगं नियम्य राजा जीवदत्तं लब्धसञ्जीवन विद्य प्राह—"भो महाब्राह्मण, सम्प्राप्तस्ते विद्याप्रत्ययस्य समयः । तव विद्याप्रभावेणेमां जीवनसहितां कुरु" इति । तदनु स द्विजवरयुवा देवीं ध्यात्वा विद्या योगमकुरुत । परं सा न जीवित प्रत्यपद्यत । अनेन वन्ध्य-प्रयत्नेन विलक्षो जीवदत्त आत्मानं मोघविद्यं विदित्वा जीवितनिरपेक्षोऽभवत् । विन्ध्याचलवासिनीं स्वाराध्य-देवतां स्मृत्वा खड्गेन स्वयं स्वशिरश्छेत्तं प्रावर्तत । अत्रान्तरे 'रे युवन्, अलमनेन साहसेन । इयं विद्याधरकन्यका कारणवशात् शापभ्रष्टा मानुषीं योनिमनुप्रविष्टा । परिपूरितावधिः सा सम्प्रति निजं स्वरूपं प्राप्तवती । अतोऽस्याः कृतेऽयुक्तस्ते शोकः" । इति नभोवाण्या जगाद देवी । तेन शिथिलीभूतसाहसः स भूदेवकुमारस्तपश्चरणार्थं विन्ध्यारण्यं प्रविष्टः ।

तत्र विन्ध्यवासिन्या देव्याः पुरस्तादुग्रं तपस्तपतस्तस्य स्वप्ने देव्याविर्भूयोवाच । "ब्रह्मन्, श्रूयताम् । हिमाचलप्रदेशे विद्याधराणां विहारभूमिर्वीरपुरं नाम सुन्दरं नगरम् । तस्याधिपतेश्चित्रसमरस्य स्वलावण्येन तिरस्कृतामराङ्गनालावण्या अनङ्गप्रभा नाम कन्यकाऽऽसीत् । रूपगर्वितया तया लावण्यजितपुष्पसायका बहवो वीरकुमाराः प्रत्यादिष्टाः । अथ एकदैकस्मिन् पर्वणि मात्रा सह मन्दाकिन्या जले स्नातुं गता सा हिमगिरिशोभावकृष्टमानसा भ्रमन्ती कञ्चिदाश्रमं पावनं प्राविशत् । तत्रैकं समाधिमग्न जटाजूटमण्डित-मूर्धानं ब्रह्मवर्चसा ज्वलन्त पावकमिव पावनं मुनिमपश्यत् । निर्जिताश्विनीकुमारस्य तस्य लावण्येन मन्त्र-मुग्धा व्यालीव समाकृष्टा तस्यान्तिक समुपेत्य तं सरभसं कण्ठे गाढं समालिलिङ्ग । परिष्वङ्गवशात् भग्न-

समाधिः स मुनिस्तां शशाप। "पुंश्चलि, देवयोनिं लब्ध्वापि त्वमेवं कामार्ता मत्ता नैष्ठिकम् अगणिततनूपातं तपश्चरन्तं मां यद् दूषितवती ततो मानुषीं योनिमनुप्रवेक्ष्यसि। तत्रापि यौवनारम्भ एव पुरुषसुखाद्वञ्चिता भविष्यसि। ततस्तां तनुं त्यक्त्वा पितृगृहं भूयो यास्यसि। कुरूपो मर्त्यः खड्गसिद्धस्ते पतिर्भविष्यति ब्राह्मणः। सोऽपि मुनिकन्यकाभिलाषान्मर्त्यत्वं प्राप्तः। त्वामनिच्छन्तीं स यदा मर्त्यलोकं निनीषति तदाऽन्यः कोऽपि त्वां हरिष्यति। यतस्तेन पूर्वजन्मन्यष्ट परदारा अपहृताः। त्वं च तस्मिन्नेव जन्मनि विद्यायाभ्रंशनादष्टजन्मनां दुःखमनुभविष्यसि। विनष्टस्मृतिस्त्वं समुचितवराणामवमानापराधाद् बहून् मानुषान् भर्तॄन् लप्स्यसे" इति। सा चाधुना पुनः पित्रोर्निकटं गता। अतो वीरपुरं गत्वा समरे समरघस्मरं चित्रसमरं तत्पितरं विजित्य तां लभस्व। इमं खड्गं गृहाण। अनेन ते हस्तगतेन गगने तव गतिर्भविता। सर्वत्र विजयश्च"। इत्युक्त्वा तस्मै खड्गं दत्वा देवी तिरोहिता। ततो यावज्जीवदत्तो प्रबुद्धस्तावत् समीपे दिव्यं खड्गमपश्यत्। तुष्टान्तरो जीवदत्तो देवीं प्रणम्य खड्ग हस्ते धृत्वाऽऽकाश समुत्पत्य हिमालयं प्राप्तः। वीरपुराधीशं चित्रसमरं समराङ्गणे जिगाय। पराजितेन तेन प्रदत्तामनङ्गप्रभां विवाह्य कञ्चित् कालं दिव्यान् भोगान् स बुभुजे।

अथैकदा स जीवदत्तः स्वां भार्यां श्वशुरं चावदत्- "अनया नवोढया पत्न्या समं स्वलोकं गच्छामि। जन्मभूमिर्हि निकृष्टाऽपि प्राणिनां परमप्रिया"। इति। ततस्तेनानुमतोऽसौ तामनिच्छन्तीं हठाद् गृहीत्वा खड्गहस्तो विहायसा जीवलोकमवातरत्। श्रान्तया भार्यया प्रोक्तो जीवदत्तस्तत्रैकस्मिन् गिरौ रमणीये विश्रामार्थमतिष्ठत्। सम्पादिताहारपानरस तां प्राह— "प्रिये किञ्चिन्मधुरं गीयताम्" इति। तदनुरोधात् सा गातुं प्रारभत। तन्मधुरं गीतं शृण्वन्नेव स निर्भरनिद्रामनुप्रविष्टः। अत्रान्तरे मृगयाविरतो हरिवरो नाम राजा श्रान्तो विश्रामाभिलाषी तत्स्थलं प्राप्तः। हरिण इव तेन गीतध्वनिनाऽऽकृष्टः स तदन्तिकमभ्यागतः। अनङ्गस्य प्रभामिव तामनङ्गप्रभामवलोक्य तस्य चेतो मदनस्य शरैर्विहृतम्। साऽपि पुष्पसायकस्येव तस्य तत्सौभगं वीक्ष्य चकितचकिता मनस्यचिन्तयत्। "किमयं मूर्तो मनसिज। मम गानतुष्टेन रुद्रेण पुनर्जीवितः प्रेषितः"। इति चिन्तयन्त्येव मोहिता सा तमादरात् पृष्टवती—"कस्त्वम्? कथं चेदं कान्तारं प्राप्तोऽसि"? । आत्मनः सर्वमागमप्रकारं तस्यै निवेद्य स भूपतिस्तामन्वयुङ्क्त—"का त्वं सुन्दरि? रतिप्रतिमे, कश्चाय ते सन्निधौ प्रसुप्तः? आख्याहि सुभगे सर्वं यदि न मन्यसे मामनर्हम्"। एवं पृच्छन्तं तं स्वं निखिलं वृत्तान्तं प्रोच्य निगदितवती—"दृष्टमात्रे त्वयि समुत्पन्नानुरागाऽहम्। एहि सत्वरं गगनपथा तव नगरं गच्छावः यावदयं मे पतिर्न जागर्ति"। एतत्तस्या अभिमतं वचो निशम्य हरिवरस्त्रैलोक्यराज्यलाभजमिव प्रमोदमवहत्। ततः सा तं भूपं हठादाकृष्य स्वां विद्यां हृद्यचिन्तयत्। परं मुनिशापवशाद्भर्तृद्रोहाच्च नष्टविद्यमात्मानं विज्ञाय भृशं विषादमगमत्।

तां तथा विषण्णामवलोक्य ज्ञातकारणो राजा तामसान्त्वयत्—"नाय विषादस्य कालः। यावत् ते पतिर्न प्रबुध्येत तावत् त्वर्यताम्। दैवायत्ते वस्तुनि शोको नोचितः। को हि स्वशीर्षच्छायां विधिलिखितं च उल्लङ्घयेत्"। एवं ब्रुवाणस्तामादाय झटिति मनोद्रुतगतिना रथेन स स्वं पुरमधावत्।

अथ सुप्तप्रबुद्धो जीवदत्त. कान्तां तं च खड्गवरमनवलोक्य समचिन्तयत्—"क्व नु गता मे प्रिया खड्गश्च । किं नु तयैव सोऽपहृतः । किं वा तौ द्वावपि केनापि बलान्नीतौ"। एवं भ्रान्तमनाः शोचंस्तां विचिन्वानो गिरिगह्वरेषु वनोपवनेषु च निराहारो द्वादश दिनान्यभ्रमत् । तत एकं ग्रामं प्राप्य तत्र कस्यचिदाढ्यस्य विप्रस्य गृहं प्राविशत् । प्रियदत्ताख्या गृहस्वामिनी सुभगा सती तमासन उपवेश्य "अयि दासि, त्वरितमस्य पादौ प्रक्षालय । प्रियाविरहादटवीतोऽटवीं भ्रमतोऽस्य निराहारस्य जीवदत्तस्य द्वादश दिनान्यतीतानि । शीघ्रं देहि भोजनमस्मै"। इति स्वदासीमादिशत् । तस्यास्तद्वचो निशम्य विस्मयमापन्नो जीवदत्त "किमत्र मे प्रियाऽनङ्गप्रभा सम्प्राप्ता । किं वेयमन्तर्वेदिनी । कथमनयैतत्सर्वं ज्ञातम् ।" इति चिन्ताकुलोऽजायत । धौतपादः कृतभोजनः स महत्याऽऽर्त्या तां प्रपच्छ—"आर्ये ब्रूहि मे कृपया कथं वेत्सि मम वृत्तम् । किं त्वमन्तर्ज्ञानिनी योगसाध्या योगिनी ? तथा चेत् क्व मे प्रिया?" क्व च मे खड्गः ? प्रसीद । कथने ग्रनुग्राह्योऽयं जनः ।

एवं पृष्टा सा पतिव्रता तं न्यगदत्—"भद्र न जानाम्यहं योगं, भर्तुरन्यच्च दैवतम् । पुत्रभ्रातृसमानन्यान् पश्यामि पुरुषानहम् । न च मेऽनर्चितो याति कदाचिदतिथिर्गृहात् । तेन वेद्मि भावि भूतं भविष्यच्च । त्वयि सुप्ते विधिवशात् मार्गेण गच्छता गीताकृष्टोपयातेन हरिवरेण नृपेण ते प्रियाऽनङ्गप्रभा स्वपुरं नीता । तस्यास्ते पुनर्लाभो न शक्यः । यतः स भूपालो महाबलः । सा कुलटा तमपि विहायान्यं व्रजेत् । स च खड्गस्तत्प्राप्तये देव्या तुभ्यं दत्तः । तस्यामपहृतायां सोऽपि देवीं प्रति गत. । भवितव्येऽर्थेऽयं ते व्यामोहो वृथैव । एवं पापानुबन्धं मुञ्च । अधुनाऽन्यानुरक्तयाऽनया पापया ते किम् " इत्युक्तस्तया साध्व्या जीवदत्त उवाच—"अम्ब, तवानेनोपदेशेन मे व्यामोहोऽपगतः । कामं न श्रेयसे कस्य सगमः पुण्यकर्मभिः । पूर्वपापवशादेतद् दुःखं मे पतितम् । तत्क्षालनाय उज्झितमत्सरः पुण्यक्षेत्राणि गमिष्यामि । अनङ्गप्रभाहेतोर्मेऽन्येन सह वैरेण कोऽर्थः । जितक्रोधेन सर्वं हि जगदेतद् विजीयते ।" इत्युक्त्वा स तां सादरं प्रणम्य यात्रायै प्रस्थितः ।

यात्रान्ते तामेव विन्ध्यवासिनी देवीमुग्रेण तपसा समतोषयत् । सन्तुष्टा देवी तं निजगाद—"यूयं चत्वारो मामका गणाः । यूयं जातु विहर्तुं गङ्गापुलिनं गताः । तत्रैका मुनिकन्यका स्नान्ती दृष्टा कामातुरैर्युष्माभिः प्रार्थिता । "कन्याऽहम् । अपेतास्मात् स्थानात्" । इत्युक्ते तया त्वं तां हठादाकृष्टवान् । तदा "तात त्रायस्व माम् । त्रायस्व माम्" इत्युच्चैराक्रन्दत् । तत्क्रन्दनं श्रुत्वाऽन्तिकस्थो मुनिः "पापिष्ठाः यूयम् । मनुष्ययोनिं लभध्वम्" इति शशाप । स च शापो मम प्रसादावधिः ।" ततो देवीप्रसादात् स पापमुक्तो निजं रूपं प्राप्तवान् ।

अनङ्गप्रभा च हरिवरे नगरे हरिवरस्य महीमतेः प्रधानमहिषीपदमधिगवती । स च भूपतिर्मन्त्रिणि न्यस्तराज्यभारोऽहर्निशं कान्तासक्तो बभूव । अथैकदा तस्य भूभृतः सभायां लब्धवरो नाम नाट्याचार्यः संप्राप्तः । तस्य नृत्तवाद्यादिषु परमं नैपुण्यं दृष्ट्वा भूमिपतिना सोऽन्तःपुराणां नाट्याचार्यो विहित. । तस्य विशेषानुग्रहादनङ्गप्रभा सर्वासामवरोधस्त्रीणां नृत्ये स्पृहणीयाऽभवत् । तेन हि सा तस्यानुरागिणी जाता । सोऽपि कामवशात् किमप्यन्यदनृत्यत् । लब्धावसरा सा विविक्ते नाट्यवेश्मनि नाट्याचार्यं प्राह—त्वया विनाहं क्षणमपि जीवितुं न शक्यामि । भूपालश्च नैतत् सहिष्यते । तस्मादन्यत्र यास्यावः । यत्रस्थौ तेनावां न कदाप्यव-

बुध्यावहे। राज्ञा च नाट्यतुष्टेन दत्तं हस्त्यश्वोष्ट्रवाह्यं प्रभूतं ते धनं विद्यते। मम चाभरणादि।" अनेन तद्वचसा नितरां हृष्टो नाट्याचार्यस्तथेत्यन्वमन्यत।

प्राप्तसमया सा केनाप्यलक्षिता पुरुषवेषं विधाय उष्ट्रार्पितधनेन तेन सममपक्रान्ता। लब्धयाऽनया स लब्धवरः स्वीयां लब्धवीराख्यां यथार्थताममन्यत। विदितवृत्तान्तो राजा तां भृशमशोचत्। "खड्गविद्याधर पति परित्यज्य दृष्टमात्रेण त्वां या समुपाश्रिता सा त्वया सह कथं चिरं स्थास्यति। नून सा नाट्याचार्येण साकं गता। विजानतोऽपि भवतस्तस्यां कोऽयं स्नेहानुबन्ध.। विलासिनी हि सन्ध्येव सर्वस्य क्षणानुरागिणी।" एवमादि मन्त्रिवरेण प्रबोधितः शुचा जीवितनिरपेक्षो भूपो विचार्य शुचं विहाय स्वदारेषु सविशेषं रतः।

साऽप्यनङ्गप्रभा वियोगपुरं गत्वा तत्र कञ्चित् कालं तेन संगीतकेन सगताऽतिष्ठत्। दैवदुर्विलासात् तस्य सगीताचार्यस्य सुदर्शनाख्येन यूना द्यूतकारेण सार्धं सगतिर्जाता। नचिरेण तेन नाट्याचार्यस्य नि.शेषं धनं द्यूतेऽपहृतम्। तदा निःश्रीकं तमपास्यानङ्गप्रभा झटिति द्यूतकारं तमभजत। प्रणष्टधनदारः स वैराग्यात् तपसे गङ्गातीरमगात्। अविलम्बितमेव स्तेनैर्हृतसर्वस्वः सुदर्शनो निर्धनो बभूव। ततो दुर्गतौ अनुतापिनीं तां गृहीत्वा स्ववयस्कं हिरण्यगुप्तं नाम महाधनं वणिक्प्रवरमयात्। तं च ऋणमयाचत। स वणिक् दिव्यरूपां तां सा च धनवन्तं तं वीक्ष्य तत्क्षणं परस्परानुरागिणौ जातौ। "अद्य रात्रावत्रैवोष्यताम्। श्वः प्रभाते यथेप्सितं दास्यामि। अधुना तु भोजनं विधीयताम्। चिरादागतोऽसि।" एतादृगाशयं तस्य वचन निशम्यापि सुदर्शन उभयोर्भावमन्यादृशमेवावेक्ष्य त प्रतिबभाषे। 'नाहमाद्यत्र' वासं कर्तुमभिलषे। नापि मे भोजनेच्छा। सद्य एवावाभ्यां गन्तव्यम्" इति। तदुपरि सार्थवाहोऽवदत्। "यदि नास्ति ते भोजनेच्छाऽद्य मे गृहे तथा भवतु। पर प्रथममेव सखे तवेयं भार्या मम गृहमागता। कथमभुक्त्वा सा मम गृहतो गन्तुमर्हति।" इति तमाभाष्य स तां गृहीत्वाऽभ्यन्तरं प्राविशत्। तस्या निर्गमं दीर्घकालं प्रतिपालयन् सुदर्शनस्तत्प्रचोदितैर्भृत्यैर्हठादिव मन्दिरान्निष्कासितः। ततो द्यूतकरो दु.खितो व्यचिन्तयत्। "कथं मम मित्रेणैव मे कलत्रमपहृतम्। अथवा यन्मया कृतमन्यस्य तदन्येन कृतं मम" इत्यालोच्य स विलक्षो भूत्वा प्राव्रजत्। पुष्पात् पुष्पं प्राप्ता मधुकरीव साऽनङ्गप्रभा रूपधनाधिकं वणिजं प्राप्य प्रामोदत। पर सोऽप्यल्पैरेवाहोभिः सभोगव्ययैः कृशधनो जातः। यतः 'म्लायति श्रीः कुलस्त्रीव गृहे बन्धक्यधिष्ठिते।' ततो वाणिज्यार्थं सभृतभाण्डको हिरण्यगुप्तः वियोगमसहमानः तया प्रियतमया सह सुवर्णाख्यं द्वीपं गत.।

अथैकदा सागरे सागरवीरो नाम कश्चिद् धीवराधिपस्तेन मिलितः। तेन सह समुद्रयानं कुर्वतः सस्त्रीकस्य तस्य नभः साभ्रं संजातम्। तदनु सहसा धारासारैर्वर्षत्सु तोयदेषु प्रभञ्जनेन प्रक्षुब्धतां नीतेऽब्धौ कल्लोलमालिकाभिरभिहत तत् प्रवहणमभज्जत्। ततो वीचिविक्षेपात् सुदूरं गतः स दैवयोगतः प्राप्तां काञ्चित् प्रवहणीमारुह्य तीरमगमत्। तत्रोदधौ मज्जन्तीं तां दिव्यरूपां युवतीं विलोक्य स दाशपतिः वारिण्यात्मान प्रक्षिप्य फलकमेकमवलम्ब्य तां सपद्यारोपयत्। बाहुभ्यां जलं विक्षिपति प्लवमानेऽस्मिन् क्षणादेव नष्टाभ्रमभवद् गगनम्। उदधिश्च प्रशान्तकोपस्य मुनेश्चित्तमिवाभवत्। स चाशु दारुफलकारूढया तया सुन्दर्या सह कश्चित् तीरभूमिं प्राप्तः। अनन्तरं तामाश्वास्य स्वपुरं

नीतवान्। प्रियाप्राप्तौ नष्टाशं हिरण्यगुप्तं दुःखेन स्वपुरं प्रतिनिवृत्तं विदित्वा भूपकल्पं सुन्दरं प्राप्तयौवन तमेव धीवरनायकं स्वप्राणनायकमकरोत्। नाङ्गना भ्रष्टशीला हि निम्नोन्नतमवेक्षते।

अथ दाशाधिपतेर्भवने विविधान् भोगानुपभुञ्जाना सा तदन्तिकेन पथा यान्तं कुसुमाकरस्येव सुकुमारयौवनं विजयवर्माण नाम क्षत्रियकुमारं समवलोक्य प्रासादादवतीर्य तमुपेत्योवाच--"सुन्दरीहृदयवल्लभ, दर्शनाकृष्टहृदयामां प्रणयिनीं भजस्व।" इति। सोपि नभः पतितां दिव्याङ्गनां तामभिनन्द्य स्वभवनमनयत्। अदर्शनतां गतां तां प्रेक्ष्य पुनर्दर्शनाभिलाषं हित्वा दुर्बलः सागरवीरः सुरसरितस्तीरं गत्वा तनुत्यागे मति व्यदधात्। सा तु अनङ्गप्रभा अनङ्गप्रभेण विजयवर्मणा सार्धं विविधानि सुखान्यनुभवन्त्यतिष्ठत्।

केनचित् कालेन जातु तस्य पुरस्याधिपतिः सागरवर्मा नगरदिदृक्षया गजारूढः प्रचलितः। स्वावाससमीपगेन वर्त्मनायान्तं नृपति समाकर्ण्य त द्रष्टुकामाऽतिकामा सा सौधमारूढवती। संदर्शनेनैव हृतचित्ता मन्मथायत्ता तत्क्षणं हस्तिपं प्राह—"भो निषादिन्, नाहं कदापि करिणमारूढा। तन्मामारोहय करेणुम्। पश्याम्यहं कियत्सुखमिति।" एवमुक्ते हस्त्यारोहे स्वस्वामिनो मुखमवलोकयति स राजा शब्दानुरोधेन यावच्चक्षुः प्रेरयति तावत् त्रैलोक्यसुन्दरीं तां चन्द्रकान्तां चन्द्रशालोपरि वीक्षते। अवलोकनमात्रेणैव तां स्वानुरक्तां बुद्ध्वा प्रदीप्तकामः स आरोहमवदत्। रे मा विजहाहि मनोरथ मनोरमाया एतस्याः। आरोपयेमां सत्वरम्। तदादेशवशादन्तिक नीते हस्तिनि सा सपद्युदप्लवत्। निपातभीतेव तं भूपं कण्ठे दृढमगृह्णात। क सा स्वयंवरेऽप्रीतिः, क चेयं बहुभर्तृष्वपि चाप्रीतिः। दिव्यववनितालाभेन परां मुदं प्राप्तः सोऽवनिपतिर्द्रुततरं निजमन्दिरं न्यवर्तत तया साकम्। आशुतरं च सा तस्यावरोधगृहे महादेवीपदं प्राप।

विदितवृत्तान्तो विजयवर्मा क्रोधाध्मातचेता राजमन्दिरमेत्य राजभटैः सह चिरं प्रयुध्य समासादितक्षात्रोचितनिधनः अपावृतद्वारं स्वर्गं प्राविशत। न हि वीरा विपहन्ते स्त्रीनिमित्तं पराभवम्। "किमेवविधया बन्धक्या। भजास्मान्। एहि नन्दनं वनम्" इतीव सुराङ्गनास्तं सुरालयं निन्युः।

ततः परं साऽनङ्गप्रभा नदीव सागरे सागरवर्मणि राजनि स्थैर्यमलभत। अनन्यगामिनी चाभूत।

# होलिकाभिनन्दनम्

श्री रुद्रदेवत्रिपाठी साहित्याचार्य., मोहमयी

यस्यां समस्तविबुधा बहुमाननीया, नारीजनैः पुरजनैः परितो रमन्ते।
कुर्वन्ति बालकगणाः सततं हहाहा, तां होलिकां वयमहो! ह्यभिनन्दयामः॥ १॥
केचिन्नरा निजनिजैः सह मित्रवर्यैर्नीत्वा सुवाद्यमति बालकबालिकाभिः।
कुर्वन्ति ताण्डवमयं नटनं हि यस्यां तां होलिकां वयमहो ह्यभिनन्दयामः॥ २॥
यस्यां सदाऽर्च्यविधिना सुरवैरिहन्त्रीं, नार्यः प्रसन्नमनसा परिपूजयन्ति।
कोलाहले च बहवः पटवो भवन्ति, तां होलिकां वयमहो! ह्यभिनन्दयामः॥ ३॥

# ★ मानवः तस्य महत्त्वं च ★

राजकुमारीजैनः "भारिल्लः" जयपुर

संसारे यदि वयं केनचिदन्यवस्तुना सह मानवस्य तुलनां कुर्याम तदा जीवाजीवसम्पूर्णपदार्थेषु मानवः एव श्रेष्ठः सर्वोत्कृष्टः सर्वगुणसम्पन्नश्च जीवो दृष्टिगतो भवति। तस्मात्स धन्यःभाग्यवांश्च येन सुदुर्लभमेतन्मानवशरीरमवाप्तम्। यत संसारे सर्वेष्वपि पशुपक्ष्यादिजीवनेषु मानव एव श्रेष्ठः सर्वोत्कृष्टश्चास्ति। प्रत्येकमानवोऽपीच्छति यत्तस्य संसारे किंचिदस्तित्वं किंचिन्महत्वं वा भवति। अतः स्वकीयजीवनस्यास्तित्वं ख्यापयितुं स्वजीवनं वा महत्वपूर्णं कर्तुं सत्यभाषणादिपापानां विभिन्नदोषाणां वा त्यागः कार्यः श्रेष्ठगुणग्रहणं च कर्त्तव्यम्। यतः गुणेभ्यः एव व्यक्तेर्महत्वं भवति। नास्ति गुणेभ्यः पृथक् व्यक्तेः किञ्चिन्महत्वम्। यथोक्तम्—

व्यक्तेर्महत्वं नहि किंचिदस्ति,
यदस्ति किंचित्खलु तद्गुणानाम्।
संसारमुक्तिप्रभिदाऽपि नून,
गुणैः कृताः केवलम स्त लोके॥

अर्थः—महत्वस्य कारणानि गुणा एव सन्ति। नास्ति व्यक्तेः किञ्चिदपि महत्त्वम्। गुणानां सत्वे एव हि व्यक्तेः महत्वमस्ति। ससारमुक्त्योश्च भेदोऽपि केवलं गुणकृत एवास्ति। अतएवास्ति मानवस्येद कर्त्तव्यं यत्स स्वकीयमानप्रतिष्ठाऽस्तित्वमहत्वाद्यर्थं सर्वप्रथमं श्रेष्ठतमगुणोपार्जनाय निरन्तरं प्रयत्नं कुर्यात्। यतः गुणोपार्जनंविना महत्वप्राप्तिकरणं दुर्लभमेव नास्त्यपि तु नितान्तासम्भवमेवास्ति। गुणग्रहणं च तदैव भविष्यति यदा मनुष्यः परद्रव्ये दोषान्वेषणं त्यक्त्वा गुणान्वेषणं करोति। गुणदोषगमुच्चयेषु च दोषान् विहाय गुणान्समाकर्षति। गुणेप्साऽस्ति यदि कस्यचिन्नरस्य हृदये तदा तु तस्य दोषान्वेषणमतिःत्यजनीया, गुणग्रहणमतिश्च ग्रहणीया। यथोक्तम्—

गुणेप्सा यदि चित्तेऽस्ति, उन्नतीषु मनो यदि।
तां विमुञ्च तदा शीघ्रं, दोषादानवतीं मतिम्॥

अपि च—

तेनाप्यते नैव महत्पदं तद्गुणेषु यो दोषचयं प्रपश्येत्।
ततो महत्ताविरहेण शीघ्रं नरेण वार्या हि कुबुद्धिरेषा॥

अर्थः—यदि कस्यचिन्मानवस्य मनसि गुणानां प्राप्त्यर्थं वाञ्छाऽस्ति, यदि कश्चिन्मनुष्यःस्वोत्थानमिच्छति तु स शीघ्रातिशीघ्रं स्वदोषग्रहणमतिं त्यजेत्। यतः येषां बुद्धिः परदोषग्रहणं करोति, तेषामुत्थानमशक्यमेवास्ति। विचारैरीदृशैस्तेषामुन्नत्यपेक्षयाऽवनतिः एव भवति, आत्मनश्च तेषां पतनं भवति।

यो मनुष्यो गुणेषु दोषसमूहं पश्यति, स न कदापि जगत्प्रसिद्ध तन्महत्पदमवाप्तुमर्हति। अत एव तन्महत्वस्यप्राप्त्यर्थं दोषदर्शनस्य कुमतिरतिशीघ्रं परिवर्तनीया।

साम्प्रतिकः मानवः लौकिकार्थानां प्राप्त्यर्थं देवीदेवतानामुपासनामभ्यर्चनाञ्च करोति। अस्मिन्नेव च स स्वं धन्यमहोभाग्यवन्तञ्च मन्यते न जानातीदं स यदि मे लौकिकार्थाः भौतिकत्वात् क्षणिकाः शीघ्रनाशवन्तश्च सन्ति। स त्विदमपि न विचारयति यत्का ममोपासना? को ममोपास्यः? किं फलं च ममोपासनायाः? विचारयित्वेदमेव त्वुपासना कर्त्तव्या। तदैव तस्या उ-

पासनायाः सम्यक्फल प्राप्तुमर्हति। अन्यथा तु न। यथार्थे यदि वयं सूक्ष्मदृष्ट्या विचारयामस्तदा प्राणिमात्रेभ्यः गुणा एव वास्तविकोपास्याः स्युः। अतः प्राणिमात्रेण गुणानामेवाभ्यर्चना पूजा वा कर्त्तव्या। यतः गुणपूजा एवास्ति यथार्थोपासना। यथोक्तम्—"पावनप्रवाहे"—

न चाकृतिर्नैव वयोऽर्चनीयं,
न रूपधेय न च नामधेयम्।
उपास्यतत्वं यदि किंचिदस्ति,
गुणा मक्त तत्किल सारभूतम्॥

अर्थः—उपासनातत्वज्ञानार्थमिदं ज्ञानमावश्यकमस्ति यदाकृतिर्वयो रूपं नाम चैतेषु नास्ति कश्चिन्ममोपास्य.। यदि संसारे उपास्यं नाम किंचिदस्ति, तद्गुणातिरिक्तं नास्ति किंचिदपि। गुणपूजा एवास्ति वास्तविकोपासना।

सम्प्रति मनुष्यः स्वमूलधर्मं स्वरूपं मानवतां विहाय लोकैषणावशाद् गर्हितानि कार्याणि करोति, यानि तस्य जीवनार्थं सर्वथाऽनुपयोगीनि क्षणिकान्यस्थिराणि च सन्ति। तथा येषां फलमपि क्षणिकमस्थिरं निर्मूलं निःसारं व्यर्थञ्चास्ति। अतः यदि मानवः स्वजीवनं सारयुक्तं सफलं च कर्तुमिच्छति, तदा तेन सर्वप्रथमं लोकैषणायाः परित्यागः कर्तव्य। यदि नास्ति संसारे लोकैषणासमं किंचित्त्याज्यमन्यवस्तु। यदि मानवः लोकैषणां त्यक्तवांस्तदा सर्वं त्याज्यं त्यक्तमेव। यथोक्तम्—

यैर्लोकैषणा त्यक्ता स्वकर्तव्यपरैः नरैः।
तैस्त्यक्तं सर्वमाहेयं हीयं हेयतमा मता॥

अद्य मनुष्यः विभिन्नप्रकाराः परीक्षा उत्तीर्य विविधप्रकारान् एम. ए., बी. ए, एल. एल. बी., ए. एम एस, बी आई. एम एस., एम. बी. बी. एस., वकील, बैरिस्टर, मैजिस्ट्रेट, डाक्टरेट आद्युपाधीनाद्धाति। किन्तु नास्त्येतादृशः कोऽपि मनुष्यः यो स्वमूलधर्मस्वरूपमानवतायाः परीक्षामुत्तीर्य तस्या एव मानवतायाः सेवां करोति। इमां वार्तां श्रुत्वा तु केचिज्जनाः एतादृशाः स्युः, ये ब्रूयुः "वय मानवतायाः परीक्षां दातुं वाञ्छामः। कुत्र भवति तस्याः परीक्षा?" परन्तु ते मनुष्याः मूर्खाः अविवेकिनश्च सन्ति। ये ईदृशः प्रश्नान् कुर्वन्ति। यदि कश्चिन्मनुष्यः मानवतायाः परीक्षां दातुं वाञ्छति, तदा तेन किंचिदन्यत् स्थानान्तरं गन्तुमावश्यकम्। स्वकीयात्मन्येव हि परीक्षामिमामुत्तरितुमर्हति। किन्तु हा खेदः। महाखेदः!। यतोऽद्य ज्ञानवन्तोऽप्यज्ञानाः, नेत्रवन्तोऽप्यक्षिविहीनाः, कर्णवन्तोऽपि बधिराश्च सन्ति। अस्ति तेषामियं मूर्खता एव। मानवाः अद्य मानवतां त्यक्त्वा दानवतां स्वीकुर्वन्ति तां पोषयन्ति परिवर्धयन्ति च। अस्तीदमेव कारणं यदद्यास्माकं स्वतन्त्रदेशान्मानवतायाः ह्रासः दानवतायाश्च नग्नताण्डवनृत्यम्भवति, तस्याश्च पूर्णरूपेण वृद्धिःप्रकोपश्च भवति। नास्त्यद्य मानवः स्वकर्त्तव्यम्प्रति सावधानः। सर्वेऽपि जनाः अद्य सदुपदेशं देशस्य स्वस्य च समुन्नत्याः सुष्ठु भाषण कुर्वन्ति ददति वा। किन्तु तत्सदुपदेशं भाषणं वा स्वजीवनेऽवतरितं न कुर्वन्ति। न च तदुपदेशानुसारं वर्तयन्ति। तदा कथं भवितुमर्हत्यस्माकं देशस्य स्वस्य वा समुन्नतिः। अतः एतादृश्यामवस्थायामस्माकमिदं कर्त्तव्यमस्ति यद्वयं स्वकीयमानवतां स्वीकुर्वन्तः तस्याश्च रक्षणं कुर्वन्तो दानवतायाः समूलनाशार्थं निरन्तरं प्रयत्न कुर्याम। तदैवास्माकं देशस्योन्नतिः सर्वतोमुखी प्रगतिश्च सम्भाविता स्यात्। अन्यथा तु न। इति।

# परमपूजनीयाः श्री गुरुजीमहाभागाः

लेखकः—श्री कौशिकः

श्रीमतां चरित्रम्? रत्नाकरस्य तीरे स्थित्वा तदन्त:-स्थितानां रत्नानां परिचयः खलु नितरां कठिनः। तद्वद् त्रापि। श्रीमतां चरित्रम्। तस्य अद्यापि परिचयोऽपि सम्यङ् नास्ति। केवल तानभितो भ्रमता मया कथ खलु लोकेभ्यो निवेद्येत तत्। साहित्यसम्राजा श्रीमता नरसिंहचिंतामणिकेलकरेण कर्मयोगिनां श्रीमतां तिलकमहाशयानां चरित्रमधिकृत्य कियन्तोऽपि ग्रन्थाः लिखिताः। पर कियान् कर्मयोगः महाराष्ट्रेण ज्ञातः? महात्मनां गांधीनां विषये न अनल्पाः ग्रंथाः। किन्तु कियन्तः ते यैः तेषामुपदेशः स्वजीवने अंगीकृतः। पर भगवता रामकृष्णेन एकमात्रः विवेकानन्द शिष्यत्वेन प्राप्तः यः भगवन्त सम्यक् ज्ञातवान्। तेन अखण्डं विश्वं प्रकाशितम्। दिगन्ताः दीपिताः। यस्य खलु जीवनं तस्य तस्य महात्मनः तत्वस्य सत्वस्य च आदर्शीभूतं स एव तस्य तस्य महात्मनः चरित ज्ञापयितुमर्हति। यथा विवेकानन्दः रामकृष्णस्य। इत्थं दुष्करं खलु चरित्रलेखनम्। तर्हि यावत् क्रियावान् कविः न उदेति तावत् किमस्माकम् अकर्म एव श्रेयः? केवलमनेनैव विचारेण अस्य महापुरुषस्य वाण्याः क्रियायाश्च दर्शनं कारयितुम् उद्युक्तोऽहम्। नाहं चित्रकारः। किन्तु चित्रं प्रेक्षितुं जाने। अद्य पञ्चदशवर्षेभ्यः अधिकः कालः व्यतीतः यदा अहं तानपश्यम्। अनेन कालेन शनैः शनैः सक्राम्यन् अहं तच्चरणमूलं प्राप्तः।

भागीरथ्याः पावने तीरे स्थितः पान्थः विश्वनाथमंदिरस्य सुवर्णकलशेन आकृष्टः तन्मंदिरमाविशति। तत्राधिगतैः पत्रैः पुष्पैश्च जगच्चालकस्य अर्चनां रचयति। परं किमेतावता विश्वचालकस्य सम्यग् ज्ञान तेन प्राप्तमिति कथ्येत? प्रत्युत यथा हि अन्तिकं वर्तते सूर्यः तथा देवाद् दूरमपि भवेत् सः। कथमपि आकृष्टः भारतराष्ट्रमंदिरं पुनर्विधातुं बद्धपरिकरस्य विधातुः समीपं गतोऽहम्। तानभितः मादृशा बहवः सन्ति। समीपवर्तिनः वयमिति कमपि आनन्द अहंकारं च प्रतीमः। पर तेषां अगाधस्य माहात्म्यस्य अस्माकम् अज्ञानस्य च भीषणता। तद्विषये किंचित् लेखितुं प्रवृत्तैः अस्माभिः अधुना साक्षात् क्रियते। अतः नैतद् चित्रं, न वा एतद् चरित्रम्। केवलं व्यक्तिदर्शनमेतद्। तदपि यथा मया दृष्ट तथा।

चरित्रकथने कुलस्य ऐतिह्यस्य आजन्मनः विकासस्य अवस्थानां चरित्रनायकस्य क्षेत्रे क्षेत्रे विक्रमोदाहरणानां वर्णनमपेक्ष्यते। तेषां कथाः—ननु सत्यासत्यात्मिकाः सन्तु ताः—चरित्रनायकस्य आत्मचरित्रात् अथवा अन्येभ्यः वा सकलिताः सन्ति। परमेतेषां महाभागानां जन्मदिनमपि अद्यपर्यन्तम् अज्ञातम् आसीत्। मानधनात् पितुरपि स्वपुत्रस्य विषये न किमपि ज्ञातुं शक्यते। तेषां जननी जगज्जननीव। केवल बहुविधैः अलौकिकैः वृत्तान्तैः शैशवं वा तारुण्यं वा अशून्यमासीत् इत्येव ज्ञायते अस्माभिः। राष्ट्रीयस्वयंसेवकसंघस्य धुरः स्वीकारात् प्राक् तेषां असाधारण्यां बुद्धौ के विचाराः तिरोहिताः, कथं च तादृशी प्रक्रिया भूता इति सव तैर्विना को नाम कथयितुं पारयेत्। यदा नामते स्वचरित्रं स्वयमेव निवेदयेयुः तदैव तेषां मनोव्यापारान् जगत् प्रतीयात्। किन्तु अपि नाम ते स्वचरित्रं लिखेयुः? यत.

आत्मचरित्रं आत्मश्लाघां मन्यते ते। पाश्चात्यानां प्रभावेण स्वचरित्रकथनपरिपाटी अस्माभिः अंगीकृता इति तेषां मतम्। इयं पद्धतिः अभारतीया नरः अविस्मरणीयः अमरः वा भवति, तत्र आत्मचरित्रलेखन न हेतुः। किन्तु अविस्मरणीया कृतिरेव तन्निदानम्। येषां खलु नामानि प्रातःस्मरणीयतां गतानि तैः पुरुषवरैः किंस्वचरित्राणि स्वयमेव लिखितानि? जगतः उपकारकं कार्यं कृत्वा अज्ञातरूपेण जगत्परित्यागरूपिणी एव भारतीया पद्धतिः। "मया तु इत्येव परमेश्वरः प्रार्थ्यते यत् मम कार्यं शीघ्रतरं समापयितुं तेन साहाय्यं देयम्, अनन्तरं च मया निभृतमेव अस्मात् लोकादपसर्तव्यम् इति" जीवनं, आत्मचरित्रं च विपर्यीकृत्य ईदृशः येषां विचारः तेभ्यः तच्चरित्रविषयकं किं नाम अस्मद्ज्ञानगोचरं भवेत्।

कस्यापि मनुष्यस्य सम्यक् परिचयः यद्यपि दुष्करः तथापि आवश्यकः। यदि सम्यक् परिचयः न प्राप्तः तर्हि को नाम अनर्थः न स्यात्। गृहे सेवकं नियोक्तुम् अथवा कन्यादानाय जामातरं वरयितुं भृशं चिकित्सवः वयम्। कथं खलु सः ब्रवीति, कथं च व्यवहरति इति सर्वमपि सुनिपुणं निरीक्षामहे। सामान्यजनानामपि कृते ईदृशी परीक्षा। 'गुरुजी' तु अनन्यसाधारणः महापुरुषः। तेषां च चरणयोः शतशो युवकैः स्वजीवनपुष्पाणि अनाघ्रातानि, अनास्वादितानि समर्पितानि। लक्षशः हिन्दुजनाः तेषां आज्ञामात्रेण स्वजीवनानि यापयन्ति। कोटिशः भारतीयेषु अयं महापुरुषः अस्य राष्ट्रमंदिरस्य पुनर्रचनां कथं वा कदा वा करिष्यति इत्यत्र केचन संशयेन केचन भयेन, अन्ये च असंख्येयाः उत्कण्ठया, आशया च अवलोकयन्ति।

अस्यां भारतकर्मभूमौ एषु अर्धशताब्देषु अनल्पाः संस्थाः प्रादुर्भूताः। आर्थिकं, सामाजिकं, राजकीयं वा लक्ष्यं संपादयितुं क्रियाविद्भिः तैः तैः पक्षैः उपपक्षैः मण्डलैः परिषद्भिः स्वस्वसंकुचितक्षेत्रे समाजोन्नतिं साधयितुं साहाय्यम् दत्तमेव। परन्तु तेषु नैकेनापि संपूर्णस्य राष्ट्रस्य अभ्युदयनिःश्रेयसस्य परिपूर्णः विचारः कृतः। ईदृशं परिपूर्णं विचारं कुर्वन् एकमात्रं संघटनमस्ति। तच्च द्रष्ट्रा केशवेन निर्मितम्। तस्य योगक्षेमः च माधवे समर्पितः। तेन माधवेनैव अस्य संघटनस्य मंत्रेण निखिलोऽपि भारतदेशः मोहितः। संघस्य विरोधकाः अपि अनुमन्यन्ते यत् राष्ट्रीयस्वयंसेवकसंघस्यैव हि संघटनं तादृशं भवति यस्य अनुयायिनः निखिलेऽपि देशे प्रसृताः। ये च संस्थान्तरानुयाय्यपेक्षया अविभाज्याः अभेद्याः, एकप्रमुखाः भारतीयसमाजस्य मनोनुनयस्य इदं महत् कार्यमस्ति। भारतीयः समाजः यथा विशालः, तथा अस्य कार्यस्य रूपमपि विशालम्। परं येषां संदेशेन इदं कार्यं प्रचलति ते कथयन्ति "किम् त्वरयध्वम्। अमृतस्य पुत्राः वयं भारतीयाः अपि अमृताः। अमरस्य अस्य राष्ट्रस्य संघटनस्य कालमर्यादापि कथं स्यात्। तत्तु अनन्तं भवतु। यदा तत् संघटनं शिथिलं भवति तदा राष्ट्रं अधः पतति। अतः अभेद्यं, सततं, अनन्तं संघटनं रचयितव्यम्। मरणमपि तिरस्कृत्य प्रत्येकं भारतीयं भारतीयत्वस्य अमृतं पाययितुं आकांक्षमाणस्य अस्य राष्ट्रीयसंघटनस्य स्फूर्तिदाता अयं महापुरुषः। कथं खलु ईदृशं पुरुषं अभिजानीयाम्?

भारतीययुद्धस्य प्रारंभे कुरुक्षेत्रे योद्धुमनसः अर्जुनस्य मनसि कार्याकार्यसंदेहः यदा समुत्पन्नः तदा 'स्थितप्रज्ञस्य का भाषा' इति तेन भगवान् श्रीकृष्णः

पृष्ट ! तदा यदुत्तरं भगवता श्रीकृष्णेन दत्त, तदुत्तरमेव व्यतीतेषु परस्सहस्रेषु वर्षेषु अपि असाधारणस्य कस्यापि महापुरुषस्य निकषीभूतम्"। अस्यां लक्षणगुणपरीक्षायां आत्तसाफल्या' अनेके महापुरुषाः अस्माकं भारतवर्षे आदर्शरूपेण सन्ति। एवभूतः प्रत्येक' पुरुषः तस्मिन् तस्मिन्द काले युगप्रवर्तकः एव भूतः। येन संपूर्ण साफल्यं प्राप्त स भगवद्रूप एव मतः। सहस्रशः मानवाः एतल्लक्ष्यम् अधिगन्तु यतन्ते। पर यत्नवत्सु परस्सहस्रेषु अपि अन्यतम एव जीवनस्य ज्ञान साक्षात्करोति। 'गुरुजी' स्थितप्रज्ञा इति मया कथ्येत चेत् केचन उपहसेयु। 'गुरुजी' अपि तन्न अनुमन्येरन् अतएव मया कथ्यते यत् स्थितप्रज्ञस्य परिणतामवस्थां मा नाम ते गताः सन्तु किन्तु तत्समीप तेषां स्थितिः भवत्येव। यदि किमपि प्रमाणमपेक्ष्यते तर्हि तेषा चरित्रमेव पश्यन्तु।

मनुष्यस्य व्यवहारेणापि कथं तस्य गतिः, कथ तस्य उक्ति, एतद् ज्ञात्वापि तस्य स्वभावगुणान् ज्ञातुं शक्यते। अथवा एतदपि वक्तुं शक्यते यत् मानवस्य अन्तरंगस्य स्वाभाविकस्य उपार्जितस्य च ज्ञानस्य, विकास गताना गुणावगुणानां प्रतिबिम्ब तादृशे व्यवहारे सक्रान्त भवति। अस्मच्चरित्रनायकस्य गतिर्निपुण निरीक्ष्यताम्। कथ खलु तेषां गतिः। गांभीर्यसमवेतया त्वरया ते गच्छन्ति अथवा अनुयायिनां किमपि निवेदन शृण्वन्त. धीरं गच्छन्ति। पुरा गुरुजी अतिजवेन गच्छन्ति स्म। अनुगच्छन्त. तेपां अनुसरणमपि कर्तुं न पारयन्ति स्म। सघशाखास्थाने यदा तेषामागमनं भवति तदा स वेग' प्रत्यक्षीक्रियते। उपस्थितेषु एव तेषु संघशाखायां, आगमनसूचक वंशिकाशब्दः ईर्यते। तदा सर्वे स्वयंसेवकाः 'दक्षाः' भवन्ति। 'गुरुजी' ध्वजप्रणामार्थ गच्छन्ति। तत्समये या खलु तेषां गतिः सा एव तेषामभीष्टा गतिः। न केवल सघस्थानेषु, अपि तु बहिरपि एतावता वेगेन सघकार्यं प्रचलतु इति दर्शयति इव तेपां गतिः। एतद् विना अन्यत्र ते कदापि सहगामिन परित्यज्य न गच्छन्ति। सर्वैः सार्धं ते गच्छन्ति। पर तेपां दूरदर्शिदृष्टित न किमपि अपसरति कदापि वक्रदृष्टि. न भवति, अतः प्रमादोऽपि न भवति। सर्वज्ञपुरुषस्य इव तेषां गतिः। चरणस्य न्यासे न्यासे निश्वास. प्रकटीभवति। प्रत्येक पदन्यासः अपि तथा सावधानतया भवति यथा प्रतिसहरणस्य प्रसगः एव न उदेति। तेषां पदन्यासस्य गति, समतां, पद्धतिं च वीक्ष्य सर्वोऽपि प्रतीयात् यत' अस्य महापुरुपस्य मनसि कुत्र गन्तव्यम् इत्येतस्मिन् विषये सशयलेशोऽपि न विद्यते इति।

श्रुतिरम्याणां शब्दानां, नयनमनोहरस्य दृश्यस्य, रसनाभीष्टानां, खाद्यपेयानां प्रत्यतुं सुखदानां वस्त्रप्रावरणानां सपादने एव मानवस्य शक्तिः बुद्धिश्च व्यापृणुतः श्रीमद्भिः ज्ञानेश्वरमहाभागैः उक्तमस्ति श्रोत्रादीनि इन्द्रियाणि कथमपि नियम्यन्ते परं, रसनानियमनं दुष्करम् इति। रसनाप्रेम तु वर्धमानमेव अस्ति। केवलं व्रतपालनेन विषयेभ्यः मुक्तिः न सभाव्यते। कश्चन तिक्त वर्जयति। अन्यश्च मिष्टं वर्जयति। अन्यः कमपि एकमेव पदार्थ भुङ्क्ते। एते सर्वेऽपि निग्रहवन्तः। परं तेषां वासना तु वर्तते एव। केवलं नियमैः तस्या निग्रहः कृतः अस्ति। गुरुजीसहवासः यैः प्राप्तः ते सर्वे जानन्ति यत् पञ्चादशवर्षेभ्यः प्रभृति ते एकभुक्ताः सन्ति। स्वभोजने पात्रे पतितस्य कस्यापि पदार्थस्य रुचि न कथयन्ति। कदाचित् तेषां माता कस्यापि पदार्थस्य

रुचिविषये पृच्छां करोति तदा ते उदाहरन्ति यत्— एष तु रसनायाः विषयः। न खलु मम रसना स्वैरिणी चञ्चला वा। सा रुचिं नैव जानाति। एतच्छ्रुत्वा मादृशः चिकित्सकः संशेते, किम् सत्यमेव एतेषां घ्राणेन्द्रिय 'सुगन्धदुर्गन्धयो' विवेक न करोति, एतेषां जिह्वा किं रुच्यरुच्यो. विशेषं न गणयति, एतेषां श्रोत्र किं मधुरकर्कशौ समानौ संधारयति, एतेषां शरीर किं शीतोष्ण सममेव मन्यते? अथवा केवलमुपचारः एवायम्। एतेषु द्वन्द्वेषु भेदमेव न ते जानन्ति इति कथं वक्तव्यम्। सत्य तु एतद् यद् संपूर्णम् आत्मतुष्टत्वात वासनाविषयाः एव न तान् बाधन्ते। यत्र गन्तुमपि मे मनः न उद्युक्त भवति तादृशे दुर्गन्धमये मार्गे श्वासम् अनवरुध्य ते गच्छन्ति। अय पदार्थः मह्यं रोचते, इति वचनं मया न कदापि श्रुतम् नागपुरस्य प्रचण्ड-ग्रीष्मसंतापेऽपि आतपत्रं वा व्यजन वा तैः स्वहस्ते धृतमिति किं केनापि लक्षितम्? दिल्लीपंजाबप्रान्ते अतिहिमे शीतर्तौ तेषां वस्त्रप्रावरणेषु परिवर्तन न द्रष्टव्यम्। अहो औष्ण्यम्। अहो शैत्यम्। अहो प्रवातः। अहो भीषणः पर्जन्यः। इत्येतादृशानि वचनानि तेन तेन वातावरणेन सार्धं सामरस्यम् अगतानां लोकानां मुखेभ्यः श्रूयन्ते। न तथा एतेषां महाभागानाम्। सर्वमेव वातावरण सह्यं सुखावह च तेषां कृते। ईदृक् तेषां सामरस्य सर्वप्रकारकभारतीयवातावरणेन सह। यतः मनसः कामो हि दूरं गतः। विषयाणां शंकाऽपि निवृत्ता।

अत्र केचन ब्रूयुः। अल खलु वागाडम्बरेण। अलं खलु वागाडम्बरेण। अल खलु असत्यम् उक्त्वा। यदि यद् भवन्तः कथयन्ति तत् सत्यमस्ति तर्हि कथं तैः सदा चायपानं क्रियते किमर्थं च कौशेयानि वस्त्राणि। किं प्रयोजनानि च महार्हाणि अंगुलीयकानि। इतीदृशान् बुद्धिभेदं जनयतः संशयान् केचन प्रकटीकुर्वन्ति परम् अत्र किंचित् प्रष्टुकामा वयं यत् एतेषु किं तदस्ति यत् गुरुजीमहाभागैः स्वरुचि प्रीणयितुं कृतम्। गुरुजी अन्यत् किमपि न भुञ्जते अतः स्वयंसेवकैः दत्तं चायपानं ते स्वीकुर्वन्ति। तत्कृत्वा तेषां स्वागतं कृतमिति मन्यन्ते ते स्वयंसेवकाः। उत्कृष्टं पेयं तु सर्वस्यैव इष्टम्। परं अनेकवारं तैः पीतं तद् चायपेयं तादृक् विद्यते यादृक् मादृशः जिह्वाग्रे स्थापयितुमपि न प्रभवेत्। वस्त्राणि प्रान्ते प्रान्ते अनुयायिभ्यः प्राप्यन्ते। तेषां च अन्येभ्यः दानं कृत्वा एव अवशिष्टानि स्वयं उपयुञ्जन्ति। एतत् तु सम्यक् अहं जानामि यत् तेषां समीप नास्ति एकमपि वस्तु यत् सघटनस्य धनव्ययेन क्रीतम्। भवतु तद् घटिकायंत्रं, लेखनयंत्रं वा। येषां तादृशी वासना एव नास्ति यस्याः तृप्त्यै भौतिक विश्वं ते अवलम्बेरन्। कदा कदा ते क्रुध्यन्ति। तदा ते तूष्णीमेव तिष्ठन्ति। अथवा क्रोध जनयतां कारणानां तर्केण चिकित्सां कृत्वा कथ तानि कारणानि परिहर्तव्यानि इति उपदिशन्ति। अनन्तरं तत्पुरुषविषये किमपि कल्मषं तेषां मनसि न अवशिष्यते। प्रमादं कुर्वन्तः यावत् स्वप्रमादं न जानन्ति तावत् तैः अनेकवारं प्रतीक्षितम्। अक्षमार्हापराधिभ्यः अपि क्षमा दत्ता। तत्र तेषाम् अन्तःकरणस्य औदार्यमेव हेतुः।

सकलां भारतभूमिं भ्रमन्तः ते यावतः जनान् जानन्ति किं तावतः जनान् कोऽपीतरः न केवलं अस्मिन् भारते अपि तु अस्मिन् ससारे जानीयात्। तेषां स्मृतिशक्तिः सम्यक् वर्तते इति कथनं तेषां स्मृतिशक्तेः उपहासकारकं भवेत्। मया कियन्तोऽपि जनाः अवलोकिताः ये बुद्धिमन्त. सन्ति। किन्तु गुरुजीसदृशः अप्रमेयस्मरणशक्तिः पुरुषः नाद्यापि प्रेक्षितः।

वयं कति जानान् नामानुसारं जानीमः। एकसहस्त्राद्धिकानि न खलु भवेयु. तेषां नामानि। अहो विशालं खलु तद् यदस्माभिः स्मृतिगत कृत इति अनुमन्यापि कतिवर्षेभ्य प्राक् पठितात् ग्र थाद् किमपि प्रकरणं उद्धरणं वा निवेदयितु प्रभवेम। स्मृतिशक्तेः ये नाम निकषाः सन्ति तेषु परीक्ष्यमाणे, तस्मिन् स्मृति-सामर्थ्ये, तद् अलौकिकमेव प्रतीयात्। मभाषणे विचक्षण. श्रोता अनेकग्रन्थानां तेषां ज्ञानं अनुभवेदेव। इदं तु सर्वेषां विदितं यत गुरुजी विज्ञानशास्त्रज्ञाः। विद्यापीठे तेषा अध्ययनस्य विषय जीवशास्त्रम् इति। परं यदा अयं भौतिकशास्त्रज्ञः उपनिषन्न्यायवेदान्ता-युर्वेदमहाभारतरामायणादिसंस्कृतग्रन्थेभ्यः ज्ञानेश्वर-मयूरपंतादिमहाराष्ट्रकविग्रंथेभ्यः न केवल तुलसीरामा-यणादिधर्मग्रन्थेभ्यः अपि तु आंग्लकाव्यनाटकादि-ग्रंथेभ्यः सहजतया उदाहरणानि प्रकरणानि च निवेदयति तदा विस्मयेन मनः अभिभूतं भवति। ईदृश विशालं वाचन येषां विद्यते तादृशः जनाः न अनल्पा., किं तु तादृशीं स्मृति धारयन्तः तु अलौकिकाः एव।

संघटनस्य धुरः स्वीकारात् प्राक् रामकृष्णाश्रये श्रीमतां विवेकानंदानां सहकारिणां सान्निध्ये तैः अल्पः काल यापितः। तेषा महात्मनां सान्निध्ये शुचिर्भूतस्य जीवनव्यवहारः यथा प्रारब्धः, तथा अधुनापि प्रचलति। स्नानं ध्यानं च न कदापि परिह्रियेते। स्नानध्यानाद्या-ह्निकमकृत्वा ते भोजन नैव गृह्णन्ति। आसनयोगे असामान्यं खलु तेषां कौशलम्। विदर्भप्रान्ते श्रीमन्तः बापुसाहेब सोहनी इति नामधेयाः अधिवक्तार सन्ति। यदा ते कारागृहे आसन् तदा गुरुजीमहाभागैः दुष्कराणि अपि आसनानि प्रत्यक्षीकारितानि। तदु-द्दिश्य तैः उक्तम् 'मन्ये योगाचार्याः एव ते इति।' शुचिर्भूतं जीवन, योगाभ्यासः ध्यानादिआह्निकं, तथा कूर्चकलापोऽपि तैः रामकृष्णाश्रये एव प्राप्ता इति मे तर्कः।

एतेषां महाभागानां प्रभावपूर्णं व्यक्तित्वं, तेषां विचारप्रक्रिया. वाण्याः, लोकसंग्रहकरात् आचरणात् च स्फुटीभवति तैः एकमात्रः एव ग्रन्थः निर्मितः के वयम् इति नामधेयः सः। अस्मिन् लघुग्रथे विस्मृतस्य राष्ट्रीयत्वस्य परिचयः पुनःस्मरणं च हिन्दूनां कृते कारि-तम्। लक्षमितानि पुस्तकानि सर्वत्र प्रसृतानि तस्मिन् प्रतिपादितानि तत्त्वानि अविवाद्यानीति मनसि कृत्वा तेषां आधारे भारतराष्ट्रमंदिरस्य रचनां कर्तु प्रवृत्ताः वयम्। पर अभ्यन्तरे एव द्विराष्ट्रवादस्य सम्भ्रमेण भारतस्य विभाजनं जातम्। वस्तुत अभूतपूर्वस्य अस्य कुविचारस्य यशसा हिन्दुराष्ट्रसिद्धान्तस्य समर्थनं एव सर्वैः कर्तव्यम्। किन्तु भ्रान्तमनसः वयं संमिश्रराष्ट्री-यत्वस्य विनाशकारिणः कुविचारस्य प्रभावेण अभि-भूताः अभवाम। 'के वयम्' इत्यस्मिन् विषये संदेहः समुत्पन्नः। एतस्य परिपाक अधुना सर्वान् अस्मान् भीषयति। इदं तु मे दृढ मतं यत् विचारवद्भ्यः पुनरपि 'के वयम्' इत्यय विषय. विशुद्धेन तर्केण परि-स्थितिसापेक्षतया च सुनिपुणं चिन्तितव्य। तदा श्रीमतां तत्त्वमेव समीचीनमिति ते जानीयुः। पुनश्च न कदापि वयं शुद्धं राष्ट्रीयत्वं विस्मरेम। एतावान् महिमा अस्य लघुग्रन्थस्य।

श्रीमद्भिः ग्रंथनिर्माणं कर्तव्यमिति बहवः वदन्ति पर कार्याभिमुख तेषां चित्तम्। इतिहासस्य निर्माण अस्मल्लक्ष्यम्। तं कथयन्तः बहवः भविष्यन्ति इति तेषां मतम्। रामकृष्णादिमहात्मभ्यः प्रभृति डॉ.हेडगेवार-पर्यन्तं सर्वेपि भारतीयानाम् आदर्शीभूताः तेषां

पूजिताः । परं तेषु शिवराजः डॉ हेडगेवारश्च इत्येतौ द्वौ तेषां आचारस्य वा विचारस्य वा मूलभूतौ । प्रत्येकेन हिन्दुना 'शिवरायस्य रूपं स्मरणीयम्, तस्य कृतिः स्मरणीया, तथा च आचरणं कृत्वा पूर्वजानां कीर्तिः वर्धनीया' इति ते सर्वदा कथयन्ति । हिन्दुराष्ट्रीयत्वस्य सम्यक् परिणामः यदि कुत्रचित् द्रष्टव्यः तर्हि स श्री शिवरायस्य आचरणे । श्रीशिवरायः एव अस्मद्राष्ट्रस्य आदर्शस्थानम् । शिवरायस्य उद्योगः स्वराज्यसंस्थापने परिणतः । डॉ. हेडगेवारैः अपि विस्मृतस्य राष्ट्रीयत्वस्य पुनरुच्चारः संघस्य संस्थापनेन कृतः । द्वयोः विचारे नास्ति किञ्चिदपि अन्तरम् । किं बहुना राज्ञः शिवरायस्य मनोगतं पुनरपि राष्ट्रे सञ्चारयितुमेव डॉ.हेडगेवारैः संघः संस्थापितः । परन्तु स्वकीयस्य अस्य वटवृक्षस्य विस्तारः संपूर्णस्य हिन्दुसमाजस्य एकमात्रं शरणं भूतः इत्येतद् प्रत्यक्षीकर्तुं अस्माकमपुण्यतया ते नात्र स्थिताः । शिवरायहेडगेवारौ अप्रमेयशक्तिशालिनौ महापुरुषौ । अस्य राष्ट्रस्य पुनरुत्थानार्थं व्ययितजीवितौ केवलं पञ्चाशत्वर्षाभ्यन्तरे एव क्षीणायुषौ जातौ । एतौ द्वौ युगपुरुषौ अधिकृत्य यदा श्रीमन्तः भाषणं कुर्वन्ति तदा एतयो राष्ट्रगुर्वोः पुरुषार्थः वाङ्मयं रूपं धृत्वा इव श्रोतॄणां प्रत्यक्षीभवति । सत्यमेतद् यत् श्रीमन्तः न किमपि लिखन्ति । परं यत् ते वदन्ति तत्र कथं कोऽपि स्खलत्वं न प्रेरयति । पञ्चदशवर्षेभ्यः असंख्येयान् विषयान् आप्लावयन्ती तेषां वाग्गंगा अविरतं प्रवहति । यदि तादृशानां विषयाणां सङ्ग्रहः क्रियते तर्हि सागरवद् अमर्यादः स भवेत् । एते च तेषां विचाराः तात्कालिकान् आधिव्याधिउदरभरणादीन् उद्दिश्य कमपि क्षणिकं उपायं न सूचयन्ति अमृतकल्पाः खलु ते संपूर्णस्य राष्ट्रस्य संजीवनापि ते स्पष्टं प्रतिपादयन्ति यत् राष्ट्रस्य गुरुता न भौतिके विभवे आयता अपि तु आध्यात्मिके औदार्ये ।

श्रीमतां वक्तृत्वममोघमिति कथनेन कथं तत् इति ज्ञातुं न शक्यते । भारतवर्षे प्रभावशालिनः वक्तारः एव विरलाः । तत्रापि आसेतुसंपूर्णभारतवर्षकीर्तयः विरलतराः एव । वक्तृत्वं नाम न केवलः वाग्विलासः । न वा केवलं उदात्ताः विचाराः । समुपस्थितानां श्रोतॄणां ग्रहणक्षमः विचारः प्रसंगोचितैः परिस्थितिसापेक्षैः स्निग्धगंभीरसुन्दरैः वा सरलसरलैः शब्दैः श्रोतॄणां हृदयंगमः येन खलु क्रियते स एव वक्ता । कति खलु ईदृशाः वक्तारः अस्मिन् देशे ।

प्रसंगस्य अवधानं, श्रोतॄणां वैशिष्ट्यं तदनुकूलं वाण्याः विचाराणां च रामबाणसमः प्रयोगः इत्येतानि श्रीमतां वक्तृत्वस्य वैशिष्ट्यानि । काशीक्षेत्रे तेषां कदाचन सम्मानः कृतः । नगरपालिकायाः सम्मानसमारोहस्य अनुकूलाः अननुकूलाः च सदस्याः पुरतः उपविष्टा आसन् । तत्क्षेत्रस्थाः महान्तः विद्वांसः दशग्रन्थिनः तत्वज्ञाः, तार्किकाः नैय्यायिकाः, कवयः तत्रासन् । तथा च परस्सहस्राः जनाः । अभूतपूर्वः खलुः जनोत्साहः परां कोटिं गतः आसीत् । ईदृशं विविधरुचि जनसमूहं सपदि एव कथं इमे श्रीमन्तः तोषयेयुः इति आशंका मनः स्पृष्टवती । किन्तु तेषां शान्ता, शुचिर्भूता मूर्तिः व्यासपीठे उदिता । शुभ्रवेषपरिधारी अयं कोऽपि ऋषिरेव अस्माकं पुरतः उदितः इति सर्वजनसमूहस्य चित्तं तैः आकृष्टम् । क्षणान्तरे एव तैः भाषणं प्रारब्धम् ।

"कथं खलु मया अत्र भाषणं कर्तव्यं । किं च मया वक्तव्यमिति न जाने । बालकस्येव मे मनः मूकं जातम् । यदा यदा अहं काशीनगरीमागच्छामि तदा

मातरं खलु प्राप्तोऽहमिति मन्ये। अनया स्वर्गंगया पवित्रीकृतोऽहम्। अनेन हिन्दुविश्वविद्यालयेन जीवन-रहस्यस्य ज्ञानमयः मार्गः दर्शितः। भवन्तश्च सर्वे अधीतसकलविद्याः, पारंगतसकलशास्त्राः, संदीपित-प्राचीनतत्वज्ञानपरम्परा आचार्याः गुरवश्च मे। भवतां पुरतः बालकेन मया किं वक्तव्यम्।" एतादृश भाषणा-रंभं श्रुत्वा एव सर्वे विद्वांसः विरोधिनः अपि समूढाः। अनन्तरं च सार्धहोरामात्रं यः विचारप्रवाहः प्रवृत्तः तस्य कीदृक् उपमानं स्यात्। प्रपातोपमः सः उत नर्मदा दुग्धधारेव सः, उत भागीरथीप्रवाहसमः उत चन्द्रसुधा-वर्षानुतुल्यः। नैकमपि उपमानं तुलार्हम्। कापि विगुणता वर्तते प्रत्येकस्मिन्। मम एतन्मनः यत् श्रीमतां वक्तृत्वं सागरमन्थनसदृशम्। शांतगम्भीरस्य तेषां विचार-सागरस्य मन्थने प्रारब्धे सति, सर्वाणि रत्नानि पारिजा-तकसमानि मनोहारीणि वाक्कुसुमानि चेतुं भवन्तः अर्हन्ति। शब्दार्थयोः अप्रमेया संपन्नता भवतः चकित-चित्तान् विदध्यात् कदाचित् सात्विकेन प्रक्षोभेण हालाहलतुल्यः उपहासः मृतकल्पान् भवतः कुर्यात्। परंतु बहुधा समाधानम्, आशा, उत्साहः, आकांक्षा, हिन्दुराष्ट्रस्य भवितव्ये अदम्यः विश्वासः एव भवतां मनःसु स्थिरतरतां लभेरन्। श्रीमतां भाषाप्रभुत्वम् असामान्यम्। हिन्दीमराठीआंग्लीयभाषासु तत्तुल्यः वक्ता स्यादेव अस्माकं देशे अपि नाम भारतदेशीय-वक्तॄणां स्पर्धा कदापि अस्माकं श्रुतिगोचरं भवेत्।

श्रीमतां भाषणं न कदापि अरुचिं जनयेत्। भवतु तत् भाषणं दशक्षणात्मकं वा होरात्र्यात्मकं वा। तस्मिन् भाषणे सोपदेशं कथासंकलनं अस्ति, मर्मभिद् उपहासः अस्ति। सुसंगतः रसपरिपोषः अपि अस्ति। स्वयं-सेवकानां सभासु (बैठक) हास्यरसोद्भाविभिः प्रश्नोत्तरैः, विचित्रवाक्पाटवेन च उच्चैः हास्येन ते संपूर्णं वाता-वरणं अभिभवन्ति। परं प्रकृत्या ते न हास्योत्पादकाः। निर्विषयं राष्ट्रसेवा एव तेषां जीवनहेतुः। तत्र मनोवि-नोदार्थं अवकाशोऽपि नास्ति। अत तेषां वचसि नान्यः भावः। विनोदस्तु नास्त्येव। तेषां वाण्या एकमात्रः स्थायीभावः। स नाम श्रोतॄणां मनसि हिन्दुराष्ट्रस्य विशुद्धस्य तत्त्वस्य प्रस्थानं, तदर्थं स्वयंसेवकानां चित्तेभ्यः उत्साहप्रदानम्, सहानुकम्पिषु विश्वासस्य आशायाश्च निर्माणम्। तेषां भाषणं श्रुत्वा विरोधिनः अपि चलि-तचित्ताः भवन्ति। अनुकूलाश्च द्विगुणतरेण उत्साहेन सचरन्ति इत्यत्र न विस्मयलेशः। दक्षिणस्यां दिशि आंग्लभाषायां, उत्तरस्यां च हिन्दीभाषायां तेषां भाष-णानि श्रुत्वा तत्रत्यैः विद्वद्भिः न केवलं तेषां शुद्धानां सिद्धांतानां, न वा युक्तियुक्तानां विचाराणां अपि तु तेषां भाषाप्रभुत्वस्यापि मुक्तकण्ठं प्रशंसा कृता एतत् किल श्रूयते यत् हिन्दीसाहित्यक्षेत्रे गुरुजीसम वक्ता दुर्लभ।

मातृभूमेः पूजार्थं स्वजीवनपुष्पाणि समर्पयित-व्यानि इत्यर्थं तरुणान् उत्साहयतां, समाजस्य सेवार्थं निरपेक्ष सर्वस्वत्यागं उत्स्फूर्तयतां, राष्ट्रस्य वैभवार्थं बलमुपासितव्यमिति आदिशतां श्रीमतां मुखात् विगतेषु पञ्चदशवर्षेषु याः सुरम्याः कथाः, यानि स्फूर्तिदायीनि आख्यानानि या ध्वंसिनी चिकित्सा, ये च उपयोगिनः उपायाः निसृताः, तेषां संग्रहः खलु सागरोपमं स्यात्। तत्र सर्वेषां सर्वेषां रसानां, भावानां, उत्साहस्य, आशायाः, विश्वासस्य, आकांक्षायाः अमृतास्वादं प्राप्तुमर्हामः।

या निशा सर्वभूतानां तस्यां जागर्ति संयमी। यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः। प्रतिरात्र यावत् ते स्वयंसेवकैः सार्धं यत्र कुत्रापि ते सन्तु, स्वीकृतः

कार्यस्य विचारं कुर्वन्ति। वस्तुत यत्र यत्र संघ स्वयंसेवकाश्च सन्ति तत्रैव ते गच्छन्ति। निखिलेऽपि भारते तैः सचारः कृतः, पर यत्र संघः न विद्यते, भवतु तद् अतिप्रसिद्ध स्थानं तीर्थक्षेत्रं वा तद् द्रष्टुं कामना एव तेषां नास्ति। महाराष्ट्रनृपवरैः पेशवेनामधेयैः पानिपतसंग्रामार्थं गच्छद्भि 'उत्तरां दिश गच्छामः ततः प्रतिनिवर्तमानानामस्माकं काशीयात्रापुण्यमपि भवतु' इति कृत्वा स्वकुटुंबानि अपि आत्मना सह नीतानि। परिणामत काशीयात्रा तु दूरे एव अपास्ता। सग्रामेऽपि पराजय अभूत्। श्रीमतामयम् आग्रहः यत् एकमात्र ध्यानम् एकमात्रं उद्दिष्ट, तच्च सघकार्यात्मक, तस्य साधनां कुरुत इति। अनुष्ठिते च तस्मिन् सर्वमपि सिध्येत्। अत यत्र स्वयंसेवका तेषां च सघः वर्तन्ते तत्र ते गच्छन्ति। तत्रैव प्रात कालादारभ्य मध्यरात्रपर्यन्तं कार्यक्रमः भवति। मध्यरात्रादनन्तरमपि अल्पीयसीमेव निद्रां ते लभन्ते। केवलं त्रिचतुर्होरात्मिका च सा। अपराह्ने च सार्धहोरामात्रं विश्रामः। अवशिष्टश्च सर्वोऽपि समयः निद्रितान् जागरयितुम्, जागृतान् कार्यरतान् विधातुं व्यतीतः भवति।

यस्य मनसः कामक्रोधादयः समूलं नष्टा, यस्य इन्द्रियाणि वासनारहितानि जातानि, आत्मतुष्टत्वात् य अमृतं वा कटुकषाय पेय वा समानं गणयति, स्वीयसौजन्येन खलदुर्जनानपि यः व्रीडयति, सज्जनांश्च तोषयति, निरपेक्षः सन्नपि जानानां सुखार्थ यः यतते, अलौकिकः सन्नपि लोकसदृशं व्यवहरति, विरक्त सन्नपि ससारस्य चिन्तां वहति, ईदृशः अयं महापुरुष अखण्डप्रसादयुक्तः विश्वासप्रदः अखण्डामृतनिर्भरः अस्य महापुरुषस्य समीपं गच्छन्तु भवन्तः, कथयन्तु च स्वीय दुःखानि, स्वीयसंकटानि, तेषां उदारात मनस सुखदं विचारमेव भवन्त लभेरन। आत्मविश्वासेन आशया च सनाथीभूताः एव भवन्त निवर्तेरन्। कश्चित् श्रीमतां समीपं गत, श्रीमद्भि च स्वविचारेण स्वशब्देन वा तस्मै दुःखं दत्तमिति स्मर्यते एव न मया। स्युरेव ईदृशाः जना ये संघटनस्य समाजस्य कार्यस्य च अपराध कृतः ये श्रीमद्भिः ताडिताः स्युः। परं एतेषां विषये अपि निवेदयितुकामोऽस्मि यत् श्रीमद्भि कृतं विचारदर्शनं कार्यपद्धतिदर्शनम् सोढुमक्षमास्ते सघटनाद् बहिर्गताः। न बहिष्कृताः। किन्तु स्वकीयं दोष निह्नोतु ते श्रीमतः दूषयन्ति।

एकदा नागपुरस्थान् स्वयसेवकान् उद्दिश्य तैः उक्तम् "अहो अस्माकं मतभेद भवद्भिः सार्धमिति उद्घुष्य बहव कार्यात् पराङमुखाः भवन्ति। १७६१ तमे अब्देऽपि पानिपतसंग्रामे मतभेदपिशाच निर्माय महाराष्ट्रणधुरधराः रणात् पलायिताः। कीदृशः च आसीत मतभेदः। किं युद्धं तेषां कांक्षितं नासीत् कि वा हिन्दुराष्ट्रस्य तत्त्वं अभिप्रेतं नासीत्। द्वे अपि न स्त। केवल सेनापतेः सदाशिवरावस्य युद्धयोजना तेभ्यः न अरोचत। परिणामतः हिन्दूनां पराजयः भूतः। यस्मिन् रणक्षेत्रे स्वराज्यस्य प्रतिष्ठापन भवितव्यम्, तस्मिन् क्षेत्रे सर्व राष्ट्रं पारतन्त्र्यावर्ते निपतितम्। शतद्वयवर्षात्मकः कालः गतः। तथापि न वयं स्वमतानां दुरभिमानं त्यजामः। किंकारण खलु अय मतभेदः। सः कि संघटनस्य उद्दिष्टमुद्दिश्य वर्तते। उत हिन्दुराष्ट्रस्य भवितव्यसंबंधि नास्त्यत्र मतभेदः चेत् किंकारणः स किमुद्दिश्य सः "अत्र किंचिद् विरम्य हृदयं प्रमथ्यमान यद् वचन उक्तम् तेन तेषां हृदयस्था चिन्ता एव प्रकटीभूता। यदि मद्विषयकः मतभेदः भवति तर्हि कथयन्तु 'मम दोषः', परं कार्यपराङमुखाः मा भवन्तु"

## सम्पादकीयम्

### स्वतन्त्रभारते संस्कृतम्

भारतमिदं सर्वतः पूर्वं सभ्यताप्रकाशस्य प्रवर्तकम्। संसारे यया सभ्यतया मानवस्य मानवता सत्या भवति, सा सभ्यता भारतेनैव प्रवर्तिता, प्रवर्द्धिता च।

---

इति न केवलं सर्वे स्वयंसेवकाः किन्तु संपूर्णोऽपि हिन्दुसमाजः तैः प्रार्थितः। ईदृशस्य महतः सघटनस्य सर्वश्रेष्ठः नेता एतावता विनयेन स्वीयान् अनुयायिनः स्वीयं च समाजं याचनां करोति। तदा अस्य हृदयस्य विशालतां उदात्ततां च साक्षात्कुर्मः।

के नाम विचाराः, काः नाम चिन्ताः, कानि नाम रहस्यानि, तेषां हृत्सागरे अन्तर्हितानि। भवितव्यमुद्दिश्य कानि नाम भीषणानि चित्राणि तेषां मनःपटले नृत्यन्ति। तानि ज्ञातुं नैव शक्नुमः। यतः सर्वसंग्राहकं तेषां मनः। तद् एकस्य रहस्यं अन्य न कथयति। एकस्य दुःखेन अन्यं न व्यथयति। सर्वगताः चिन्ताः मनसि निधाय केवलां आशां विश्वासं च तद् ददाति। ईदृशस्य अगाधस्य अन्तःकरणस्य परिचयः कथं खलु कार्यः!

कमपि मूढविचारं परिष्वज्य कथाकथचित् यत्र-कुत्रापि प्रलपन्तः नेतारः न विरलाः। ते च अद्यतमे विपदावर्ते निमग्नाः अवशाः संजाताः। एवंस्थिते अयमेव एकमात्रः महापुरुषः यः असंमूढः, सदयेन अन्तःकरणेन निमज्जतः उद्धर्तुकामः, संपूर्णं राष्ट्रं सजीवयतुमनाः प्रलयकालीनमनुसदृशः। तस्य चक्षुषोः करुणा, हृदये स्नेहः, भुजयोश्च बलं विद्यते। ईदृशस्य महापुरुषस्य व्यक्तिदर्शने अल्पोऽयं मे प्रयत्नः! नैतत् चरित्रं केवलं स्मरणमात्रमेतत्।

---

आर्याणामुपनिषदो मानवस्य हृदयपरिशोधनाय, सत्प्रवृत्तीनां जागरणाय च सर्वतः पूर्वं प्राभवन्निति न केवलं वयमेव, अपितु समुद्रपारवासिनः पाश्चात्या अपि हृदयेन स्वीकुर्वन्ति। वेदोपनिषद्-दर्शनादयश्च ग्रन्थाः संस्कृतभाषयैव समुत्पादिताः। अतएव आर्याणां कृते संस्कृतभाषा सेयं सर्वतः प्रथमतया समुपार्जनीयेति सर्वैरेव देशहितकामुकैरुद्घोषितम्। स्वातन्त्र्ययुगस्य प्रवर्तको महात्मा गान्धिमहाभागोऽपि पूर्वं समुद्घोषयत् यत्—"सर्वैरेव देशकार्यकर्तृभिः संस्कृतभाषा आवश्यकतया अध्ययनीया।" सेयं घोषणा तत्काले प्रचरद्भिः संस्कृतपत्रैरपि ससतोषमुद्धृताऽभवदिति मन्ये संस्मरेयुः संस्कृतसेविनोऽपि भारतीयाः। किन्तु स्वातन्त्र्यप्राप्तेरनन्तरं भारते संस्कृतस्य का परिस्थितिरभवदिति विचारशीलानामपि विचारणीयं संवृत्तम्।

वर्तमानसमये सर्वेष्वपि संस्कृतप्रचारक्षेत्रेष्वपि संस्कृतं विरलप्रचारं संवृत्तम्। काशी-जयपुर हरिद्वारादि-प्रदेशेभ्यः, संस्कृतक्षेत्रे कार्यकर्तॄणां यानि विवरणानि श्रूयन्ते तेषु संस्कृताध्येतॄणां संख्या प्रतिवर्षं न्यूनी भवति। भारतीयाः शिक्षाविभागीया मुखतः संस्कृतस्य संस्कृतेश्च प्रशंसागीतानि गायन्ति किन्तु कार्यरूपे किं परिणमतीति प्रत्यक्षमीक्षणीयम्। एतेषु वर्षेषु आङ्गलभाषाया विश्वविद्यालयाः, महाविद्यालयाः (कालेज) माध्यमविद्यालयाः (हाईस्कूल) च कां कामभ्युन्नतिं, प्रगतिं च प्राप्नुवन्निति वार्षिकविवरणैः प्रत्यक्षदर्शनैश्च सुस्पष्टम्। किन्तु नवीनानां संस्कृतविद्यालयानां संस्थापनस्य का कथा, प्राचीनेषु संस्कृतविद्यालयेषु अध्येतॄणां या किल संख्या पूर्वमासीत्सापि प्रतिवर्षं प्रतिमासं परिक्षीयते इति सर्वतः परिस्थितिः प्रत्यक्षा भवति। एवं स्थितौ संस्कृतविश्वविद्यालयस्य संस्थापनकथा तु

सर्वथा सुदूरे। "काश्यां, कुरुक्षेत्रे च सस्कृतविश्वविद्यालयः शीघ्रातिशीघ्रं स्थापितो भवेदिति" बहोः कालान शृणुमः। "इदानीं योजना अपि निर्मिता." इत्यपि घोषणा समश्रूयत, किन्तु स विश्वविद्यालयः कीदृश, [illegible]रिस्थितिकश्चेति भविष्यद्गर्भ एव निलीनम्।

जयपुरराज्यमिदं सस्कृतप्रचारविषये सर्वतोऽपि भारतवर्षे सुप्रसिद्धम, कार्यरूपे परीक्षितं च। अत्रत्यैः शासकैः सस्कृतप्रचाराय महान्तो विद्यालया राजधान्याम, प्रसिद्धप्रसिद्धेषु नगरेषु, जनपदेषु च संस्थापिताः, येषु प्रतिवर्षं संस्कृतस्य उच्चोच्चा परीक्षा प्रददतिस्म विद्यासेविनः। एतत्प्रबन्धाय समर्थाः पण्डिताः, निरीक्षकाश्च नियमिता अभूवन्। सेयं परिस्थितिर्वैदेशिकानां शासनपर्यन्तमपि प्रवृत्ताऽभवत्। किन्तु यतःप्रभृति देशीयशासनमत्र प्रवृत्तं तत आरभ्यैव सेयं दुर्घोषणा श्रूयते यत्—'संस्कृतविद्यालयेषु प्रतिवर्षं छात्रसंख्या हीयते' इति। एतत्प्रतीकाराय प्रधानप्रधानसंस्कृतसेविनां शिष्टमण्डल राजस्थानस्य शासकाना सविधे समुपस्थितं प्रार्थित च यत्—"राजस्थानम्, विशेषतश्च जयपुरमिदम् आर्यसस्कृतेः सस्कृतस्य प्रचारविषये प्रमुखतया परिगणनीयम्। अतएव शिक्षाविभागीयैः सस्कृतपरिस्थितेः संरक्षणाय विशेषत. प्रयतनीयम्" इति। बहो. कालादनन्तरम् शिक्षाविभागीयैः 'सस्कृतविकास समितिः' परिकल्पिता। या हि समये समये संगत्य सस्कृतशिक्षायाः प्रचारस्य प्रसारस्य च विषये सुबहु विचारयति।

समित्याऽनया सुदीर्घा प्रश्नावली प्रकाशिता, यां हि संस्कृतपण्डितानां, संस्कृतसेवकानामन्येषां धनिकादीनां च समीपे सम्प्रेष्य संस्कृतप्रचारविषये तेषामभिमतं मार्गं ज्ञातुमिच्छति। एतस्याः सदस्या राजस्थानमात्रे परिभ्रम्य, प्रसिद्धप्रसिद्धविद्यालयानां परिस्थितिं प्रत्यक्षं वीक्ष्य, संस्कृतानुरागिणां साह्यं गृहीत्वा च सस्कृतप्रचारविषये निजकर्तव्यं निर्धारयिष्यति। संप्रति संस्कृतसेवकाः सुतरामाशापूर्णया दृष्ट्या प्रतीक्षन्ते-संस्कृतस्य तादृशं प्रचारं येन संस्कृताध्येतॄणामपि वर्तमानभारते सुखेन निर्वाहः स्यात्। पुरयतु मनोरथं भगवान्।

बटोदरपत्तनस्थ श्रीमन्महाराजसयाजिरावविश्वविद्यालयान्तर्गत—

## संस्कृतमहाविद्यालये पदकप्रदानमहोत्सवः—

गुर्जरप्रान्ते बटोदर (बडोदा) राज्यं विद्या कलादीनां प्रचारार्थं सुप्रसिद्धमिति सर्वविदितम्। अत्रत्यः संस्कृतमहाविद्यालयः संस्कृतप्रचारक्षेत्रे समानमर्हति। अस्य महाविद्यालयस्य प्रमाणपत्र-पदकप्रदानादिमहोत्सवो महता समारोहेण फर्वरीमासस्य १६तारिकायां समपद्यत। सभापतिरासीत् विश्वविद्यालयस्योपकुलपतिः श्रीमती हंसामहतामहोदया।

वैदिकमङ्गलप्रार्थनाऽनन्तरं महाकविभासकृतकर्णभारनाटकस्य कश्चिदंशश्छात्रैरभिनीतः। ततो महाविद्यालयस्याऽध्यक्षेण श्रीहरिप्रसादमहतामहोदयेन विद्यालयस्य वार्षिकं विवरणमपठ्यत। तस्य सारः सोयम्—

प्राचीनसस्कृतेः सस्कृतभाषायाश्च सुस्थिरीकाराय सेयं संस्था ३-६-१६१५ ख्रिष्टदिवसे स्वर्गवासिना श्रीसयाजिरावमहाराजेन संस्थापिता। महाविद्यालयश्चायं १८-६-५१ तमे ख्रिष्टदिवसे विश्वविद्यालयस्याङ्गतया परिगणितोऽभूत्। अस्मिन् द्वादशवार्षिकोऽभ्यासक्रमो नियमितः प्रथमकक्ष्यायाम् वर्षत्रये आवश्यकसस्कृतिज्ञानोत्तरम् ऐच्छिकरूपेण शुक्लयजुर्वेदसंबन्धिनी

परमपूजनीयसरसंघचालक-श्रीगोलवाल्करमहाभागानां ५१तम जन्मदिनोत्सवनिमित्तं समर्पिता

## नवरत्नमाला

( कविः—प्रा० श्री० भा० वर्णेकरः नागपुरम् )

यत्कीर्तिप्रभया प्रदीपितमिदं सर्वं दिशां मण्डलम्
यो लोकोत्तरसद्गुणैरगणितैर्लोकस्य मूर्ध्नि स्थितः ।
मूर्ध्ना यश्च बिभर्ति भारतसमुद्धारैकभारं सदा
सर्वेषां हृदयगमो नरमणिः कोऽप्येष लोकाग्रणीः ॥१॥

वित्ते स्यादणिमा तथापि महिमा विद्याविधौ विद्यते
मूर्तौ स्याल्लघिमा परन्तु गरिमा कीर्तौ दरीदृश्यते ।
प्राप्त्याद्या अपरास्तथैव सकला दिव्या महासिद्धयः
गीतोद्बोधितकर्मयोगविधिना त्वद्दासतामागताः ॥२॥

विद्वत्सन्निधिपुण्यतो हि भवतः सायुज्यतां शारदा
शक्तिश्चापि सरूपतामुपगता केनाऽपि पुण्येन सा ।
कीर्तिः सा हि सलोकतामनुभवत्यन्याः पुनर्देवताः
सम्प्राप्तुं च समीपतामिव सदा श्रीमाधवस्योत्सुकाः ॥३॥

माधुर्यं वचसो गुणश्च हृदये शान्तः प्रधानो रसः
बोधव्यञ्जकता स्थिता प्रतिपदं सच्छास्त्रपूताः क्रियाः ।
दोषः क्वापि कदापि नैव घटितो नालङ्कृतो वासना
तन्मन्येऽखिललोकनिर्वृतिकरं काव्यं हि ते जीवनम् ॥४॥

चिरं निपीताः सुखयन्ति मानसं
याः किल्बिषं वाऽपि दहन्ति मानसम् ।
पीयूषपूर्णा अपि वह्निगर्भाः
वाचो निपेयास्तव नित्यमेव ॥५॥

---

ऋग्वेदसम्बन्धिनी वा वैदिकी शिक्षा दीयते । पुराणविषयिणी शिक्षापि यथेच्छं दीयते । मध्यमकक्षायाम् पञ्चभिर्वर्षैः आवश्यकाङ्ग्लभाषायाः एस्. एस्. सी. पर्यन्तज्ञानेन साकमैच्छिकरूपेण साहित्य-व्याकरणादीनि शास्त्राणि, त्रिस्कन्ध ज्यौतिषं वा पाठ्यते । उत्तमकक्षायाम् चतुर्भिर्वर्षैः पाणिनीयं व्याकरणं, धर्मशास्त्रं सिद्धान्तज्यौतिषं, साहित्यादिकं वा अध्याप्यते ।

अद्य यावदस्मिन् विद्यालये २७१सङ्ख्यकाः शुक्लयजुर्वेद-ऋग्वेदयोर्याज्ञिकोपाध्यायाः निष्पन्नाः । १२४ पौराणिकाः, ३६ संस्कृतविशारदाः, ४२ ज्योतिर्विशारदाः, ६२ आयुर्वेदविशारदाः, २ व्याकरणशास्त्रिणौ, २ धर्मशास्त्रिणौ, १ ज्यौतिषशास्त्री. ५ साहित्यशास्त्रिणः, १३ व्याकरणाचार्याः, १४ ज्यौतिषाचार्याः, ५ धर्मशास्त्राचार्याः, सवृत्ताः । विवरणपाठोत्तर गुर्जरभाषया 'पारखु' नामकम् एकाङ्किरूपकमभ्यनीयत । ततः संगीतोत्तरम्—'अधिकाररक्षक' नामकम् एकाङ्किरूपकं हिन्दीभाषयाऽभिनीतमभूत् । ततः उपकुलपतिमहाशयाया हस्तेन प्रमाणपत्र पदकादि-प्रदानमभूत् । अन्ते अध्यक्षमहोदयया स्वभाषणे उपदिष्टं यत् पुराणकथानां वर्तमानसमये सोयमुपयोगो यत् पौराणिकाः अवकाशसमये ग्रामादिषु गत्वा कथाद्वारा पौराणिकप्रचारं कुर्युः । इत्यादि ।

ततः प्रधानाध्यापक-श्रीहरिप्रसादमहतामहोदयद्वारा धन्यवादप्रदानोत्तरं मङ्गलगीतेन सभाविसर्जनमभूत् ।

# भारती

प्रमुखं संस्कृतमासिकपत्रम्






शक-हूणादि-दस्यूनां जेता नेता महीभृताम् ।
सोऽय श्रीविक्रमादित्यो नित्योत्कर्षः प्रशस्यताम् ॥

राजस्थान-मद्रास-मध्यप्रदेश-सौराष्ट्र-भूपाल-उत्तरप्रदेश-बिहार-पञ्चनद-आन्ध्र-सर्वकारैः स्वीकृता—

# ❋ विषय-सूची ❋



सूचना :—सर्वे ग्राहका. सूच्यन्ते यत् पत्रव्यवहारावसरे निजग्राहकसंख्या स्वस्मिन् पत्रे अवश्यं दर्शयेयु'। अन्यथा पत्रोत्तरे बाधा. समुत्पस्यन्ते ।

## —❋ "भारती" पत्रस्य उद्देश्यानि नियमाश्च ❋—

१. संस्कृतभाषाया. प्रचारः, सरलेन संस्कृतेन सामयिकानां विचाराणाम्, उत्कृष्टाया तात्त्विकविचारपरिपोषिकायाः सामग्र्याश्च समर्पणम्, अस्य पत्रस्योद्देश्यानि ।

२. 'भारती' पत्रस्य वार्षिकं शुल्क ३) रूप्यकत्रयम् ।

३. मासिकपत्रमिदं प्रतिमासं पूर्णिमासं पूर्णिमायां तिथौ प्रकाशितं स्यात ।

४. एकस्यांकस्य मूल्यम ।=) आणकषट्कम् ।

★

सम्पादकः—
कविशिरोमणि
भट्टश्रीमथुरानाथशास्त्री
सहसम्पादक.—
देवर्षिकलानाथशास्त्री B. A.
जयपुरम्

# भारती

प्रबन्ध-सम्पादकः—
गिरिराजशर्माशास्त्री

भानुवद् भारतीयानां भास्वद्भवनभासिनी।
भागीरथीव भावाढ्या भारते भातु भारती॥

वर्षः ६ चैत्रशुक्ला १, सं० २०१२ अङ्कः ६

## शुभाशंसनम्

कोलाचलम् यज्ञनारायणदीक्षितः

सुस्वागतं नूतनवर्ष ! तेस्तु,
वसन्तमित्रेण समागतस्य ।
सख्येन सौख्यं खलु वां प्रजानां,
तदद्य लभ्यं जगति प्रसिद्धम् ॥१॥

नमोस्तु ते तात! वसन्त! नित्यं,
चिराय मित्रेण समागतोसि ।
षष्ट्यब्दलभ्यं युवयोर्हि सख्यं,
नित्यं प्रजानां भवताच्छुभाय ॥२॥

मधो! भवन्तं सहकारशाखा-
प्रवाल--नीडे निभृतं निषण्णः ।
पुंस्कोकिलो गायति नाट रागम्,
सुधालता चुम्बति चूतशाखी ॥३॥

त्वत्पालने भारतवर्षमेतु,
सन्मङ्गल नूतनवर्ष ! नित्यम् ।
धर्मार्थकामेषु समानुरागाः,
भवन्तु नित्य प्रभवः प्रजाश्च ॥४॥

भूयान्नूतनवर्षोयं सर्वेषां मंगलप्रदः ।
वाणीलक्ष्म्यौ च सर्वत्र निवसेतां निरन्तरम् ॥५॥

गवेषणात्मकं ज्ञानम्—

# भारतीय इतिहासः

श्रीयुत मल्लीनाथ चौमाल सनातनधर्मसभा चूरू ( राजस्थान )

इतिहासो नाम देशस्य समाजस्य वा बहिश्चराः प्राणाः, यो यस्य कस्यापिदेशस्य समाजस्य च महिमान प्रथयति, परोक्षीभूतानपि आत्मगुणान् प्रकाशयति, पूर्वजकीर्तिगाथां कीर्तयत् आदधाधिति किमपि बलम्। पूर्वजानां आचारविद्यानीतिप्रतिष्ठाः प्रकाशयन् पथश्च्युतं अपि पन्थानं आरोहयति जनम्। अस्मदीयपूर्वजानां को धर्मः, कः आचारः, किं ज्ञानम्, कीदृशी नीतिः, का विद्या, किं कुलम्, का प्रथा, कीदृक् राजव्यवस्था, इत्यादयो विषया इतिहासेनैव अवगम्यन्ते। अस्माकं पूर्वजाः उन्नताः अवनता वा इति ज्ञानं इतिहासेनैव भवति मानवानाम्।

अथवा—इतिहासो नाम शब्दात्मकः समाजः, एतेन विबोधितो जनः स्वकर्त्तव्यं अधिगच्छति। उन्नति रवनतिश्च तस्य फल, फलं हि व्यापारायत्तम्। कैर्व्यापारैः अस्माकं पूर्वजाः उन्नतिं अध्यगच्छन्, कथं वा ते अवनता इति इतिहास एव—विबोधयति। अतश्च भवति महानादरः इतिहासस्य सभ्यानां समाजे।

परं च एवं सत्यपि अस्य भारतस्य नास्ति कोपि इतिहास इति नव्या ऐतिहासिकाः वदन्ति। परं एषां वचसि प्रत्ययं आधातुं न ईहते नश्चेतः। न एतादृशः कोपि देशः समाजो वा यस्य साधुरसाधुर्वा इतिहासः न लभ्येत। इत्थ निखिलस्य देशस्य समाजस्य वा भवत्येव यथा तथा वा इतिहासः। स्वाभाविकोऽयं इतिहासप्रणयो मानवानां हृदयेषु प्रस्फुरति। सर्व एव तत्तद्देशीयसमाजः, परमेण प्रेम्णा परमया श्रद्धया भक्त्या च इतिहासं अनुशीलयति इति प्रत्यक्षोऽयं विषयो मानवानाम्। अक्षरगन्धरहिताः बर्बरा अपि आत्मन. पूर्वजानां गुणगणान् श्लाघयन्ति बहुमन्यन्ते च आत्मानम्। अत आसादितविविधशास्त्रतत्वज्ञस्य भारतस्य नास्ति इतिहासः इति कथं श्रद्धेयं भवेत् प्रेक्षावताम्। भारतीयाः इतिहासप्रणयिनो निश्चितं एव आसन् इति विदितं सर्वेषाम्। अतएव भारतस्य नास्ति इतिहास इति कथनं भ्रमपूर्णम्।

सांप्रतं भारतीयानामग्रे इतिहाससम्बधिन एते प्रश्नाः स्थाप्यन्ते। भारते कः प्रथमो नरपतिर्बभूव ? का वा तस्य शासनप्रणाली ? राज्यशासनाय के के विभागाः स्थिरीकृताः, तदा प्रतिशतकं कियन्तः शिक्षिता आसन्, तदा के के पंडिता अभवन्, तैर्निर्मितः कश्चन ग्रंथविशेषो अस्ति न वा, तदा कीदृश आसीत् सामाजिको व्यवहारः, को धर्मस्तदासमाजे प्रसारमलभत, का वा दण्डव्यवस्था इति प्रश्ना इतिहासेनैव समाधेया भवन्ति। यद्येतेषां प्रश्नाना समुचितं समाधानं न स्यात्तर्हि नास्ति भारतस्य इतिहास इति फलितं भवति।

परं च एवं न वक्तव्यम्। चिरादिदं भारतं अध्यात्मभावप्रवण आसीत्। अतो भारतीया निखिला विद्या आत्मतत्त्वेन सह इतिहासं उपदिशति। पर अपरेषु देशेषु लौकिकी सिद्धिरेव परमपुरुपार्थतया गण्यते। अतः भारतीयः इतिहासः अध्यात्मभावप्रवणः, विदेशीयानां इतिहासाश्च लौकिकसिद्धिपराः। अनेन हेतुना एव सांप्रतिकानां ऐतिहासिकानां भारतस्य

इतिहासे भ्रमो जातः। तस्मान सांप्रतिकः ऐतिहासिकैर्लिखिता इतिहासाः भ्रमपूर्णा एव।

वस्तुत आधुनिकैर्भारतस्य वास्तविक इतिहासः ज्ञात एव न, यतो भारतीय इतिहास वेद, पुराण, रामायण, महाभारत, धर्मशास्त्र, काव्यशास्त्र-आदिभारतीय सस्कृतवाङ्मयार्णवरयाश्रितः, त चाधुनिकाः न जानन्ति अतः कथं ते भारतीय इतिहास लिखितु समर्था भवेयु।

वेदादिवाङ्मयार्णवस्य अज्ञाने एको हेतस्तु वेदषडगानामज्ञानम्, षडंगानामपि ज्योतिषशास्त्राश्रितः खगोल, भगोल, भूगोलविभागः, तस्याज्ञानात् नहि वेदपुराणादीना वास्तविक ज्ञान भवेत्, तत्तत्कालीनखगोलः भगोलभूगोल एव तज्ज्ञानस्य कारणम् भवति। वेदकाले भूगोलस्य कीदृक् व्यवस्था कीदृशी परिस्थितिः देशकालस्य च कीदृक् व्यवस्था, यतः व्यवस्था च देशकालाश्रिता भवति।

सृष्ट्यादौ हिमालयः पर्वत एव पौराणिकानां सुमेरुपर्वतः आसीत्। अत्र प्रमाण सुमेरुपर्वतात गंगाया अवतरण भारतवर्षे प्रवेशश्च। यत गगा सुमेरुपर्वतादवतीर्य भारतवर्षे प्रविष्टा। अनेन सुमेरुपर्वतस्य भारतवर्षस्य च सान्निध्यं सिध्यति। लिखितं चात्र पुराणानाश्रित्य प्रमाणं सिद्धान्तशिरोमणौ गोलाध्याये-विष्णुपदी विष्णुपदात्पतिता मेरौ चतुर्धास्मात्। सीताख्या भद्राश्वं सालकनंदा च भारत वर्षम्-इति। अत्र गंगाया मेरुपर्वतादवतारः भारते च प्रवेशो निर्दिष्टः। एवमेव वाल्मीकीयरामायणे महाभारते च गंगाया हिमालयादवतारः भारते च प्रवेशो लिखितः। वा०रा०बा०कां सर्ग ४-१०। महाभारते भीष्मपर्वणि पुराणानां प्रमाणेन गंगायाः सुमेरुपर्वतान्निःसृत्य तस्या भारतवर्षे प्रवेशः। एवमेव रामायणमहाभारतयोः प्रमाणेन गंगाया हिमालयान्निःसरणं भारते प्रवेशश्च निर्दिष्टः। अत्र यदि हिमालयः पर्वत एव प्राकृतनः सुमेरुपर्वतो गृहीतः स्यात्तर्हि हिमालय· सुमेरुश्चैकस्यैव पर्वतस्य नाम स्यात् इति सिध्यति। अतो हिमालयपर्वत एव प्राक्तने कल्पे सृष्ट्यादौ च सुमेरुपर्वतनाम्ना आसीत् अनन्तर तस्मात्स्थानाद् ध्रुवस्थानस्य अपसरणात् परिस्थितेः परिवर्त्तन जातम्। यत्र सुमेरौ षाण्मासिक दिनं षाण्मासिकी रात्रिश्च आसीत तत्र दिनरात्र्यो· परिवर्त्तन जातं, क्रमशः सांप्रतिक अहोरात्रस्य समयविभागो जातः। तस्मिन् समये अस्माक सुमेरुपर्वतो ध्रुवस्थानम् आसीत्--भारतं च ध्रुवप्रदेशः मेरुप्रदेशः आसीत्। अस्मात् स्थानात् ध्रुवस्थानमेव स्थानान्तरितम् आसीत्, न हि च सुमेरुपर्वतः, स तु पश्चात् हिमपातात् हिमालयनाम्ना प्रसिद्धः आसीत्। स तु वर्त्तमानेऽपि समुपस्थितो वर्त्तते।

ध्रुवस्थानपरिवर्तनस्य हेतुः प्रमाणं च। पृथिव्यां सन्ति अनेका गतयः। वार्षिकी दैनिकी, अाक्षजा, क्रांत्यात्मिका इत्यादयो गतयस्तु प्रसिद्धा एव। परं च एका अन्या गतिरस्ति तया पृथिवी दक्षिणत उत्तराभिमुखं अक्षपरिभ्रमणवत् पूर्वापरसूत्रं परिवेष्टयति, तेनैव ध्रुवस्थानस्य परिवर्तनं भवति। तेन परिवर्त्तनेन अक्षांशानामपि परिवर्त्तनं स्यात्। अत्र प्रत्यक्षं प्रमाणं तु वर्त्तमानकालिका लंकाया अक्षांशाः। सूर्यसिद्धान्तस्य निर्माणकाले भूमध्यरेखा लंकां स्पृशन्ती गच्छति। सांप्रत तु वोर्नियो· सुमात्रा आदि द्वीपान् स्पृशन्ती गच्छति। अतः सूर्यसिद्धान्तस्य निर्माणकाले यो लंकाद्वीपः निरक्षदेश आसीत् सैव सांप्रतं साक्षदेशो जातः। सांप्रत लंकायां सप्तसख्याका अक्षांशाः सन्ति। सांप्रतिकैर्लंका

सिहलद्वीप मत्वा 'सिलोन'इति संज्ञा कृता, सा भ्रमपूर्णा, सिंहलद्वीपस्तु भारतादतिदूरे आसीत्। सिहलद्वीपविषये लिखित वराहमिहिराचार्येण स्वकीयबृहत् संहितायां कूर्मविभागे क्रमशः द्वीपानां निवेशः—

अथ दक्षिणेन लकाकालाजिनसौरिकीर्णतालिकटां।
कांचीमरुचीपट्टनचैर्यार्यकसिंहलऋषभाःबृहत्संहिता ॥

अत्र भारताद्दक्षिणे क्रमशो द्वीपानां निवेशः—भारताद् दक्षिणे लंकाद्वीपः ततोऽस्माद् दक्षिणे कालाजिन, सौरिकीर्ण, तालिकट, कांची, मरुचीपट्टन, चैर्यार्क, सिंहल, ऋषभाः द्वीपा आसन्। अत्र सिंहलद्वीपस्तु भारताद् दक्षिणे अतिदूरे लिखितः। सिंहलद्वीपेन कथंचित् "सिगापुर"स्तु गृहीतो भवेदपि न लंकाद्वीपः। अतः आधुनिकैः यत् लङ्कां सिंहलद्वीप मत्वा लंकायाः या सिलोनसंज्ञा कृता सा मिथ्याभूता सिहलद्वीपेन कथंचिद् सिंगापुर एव गृहीतव्यो भवेत्।-अतः पृथिव्या उत्तराभिमुखया गत्या ध्रुवं स्थानं चलायमानं वर्त्तते इति ज्ञातव्यम्। अनया गत्या प्राक्तनी भूमध्यरेखा लंकातो दक्षिणे गता विद्यते। लका च तस्मात् स्थानादुत्तरे समागता। यत आकाशस्य विषुवत्रेखा सूर्यादिना स्थिरीकृता वर्त्तते तथा भूपृष्ठस्था विषुवतरेखा पृथिव्या उत्तराभिमुखीगतिवशाच्चला। पृथिव्या उत्तराभिमुखीगतिवशात् आकाशस्थ विषुवतरेखाया सन्मुखात् अधः भूपृष्ठस्थस्थानानि उत्तराभिमुखं अपसरन्ति, तत्र च दक्षिणस्थानि स्थानानि आयान्ति तान्येव भूमध्यरेखास्थानि भवन्ति। यथा सांप्रतं भूमध्यस्थानात् लका उत्तरंगता, तत्र च "वोर्नियो" सुमात्रादिद्वीपाः समागताः, त एव भूमध्यरेखां द्योतयन्ति इति सारांशः। प्राक्तने काले लंकाद्वीपः यत् निरक्षदेश आसीत् सैव सांप्रतं साक्षदेशः सजातः, सांप्रत लकायां सप्तसंख्याका अशांशाः सन्ति।

इत्थं भूगोलीयपरिस्थितेः परिवर्त्तनेन जातं देशकालयोः परिस्थितेः परिवर्त्तनम्। यस्मिन् काले यत्र द्वादशमासात्मकं अहोरात्रं आसीत् तत्राधुना चतुर्विंशतिघंटात्मकं अहोरात्रं भवति, इति कीदृशं एतत्परिवर्त्तनम्।

'उदाप्लुतं विश्वमिद तदासीन्निद्रया मीलितदृङ् न्यमीलयत्" इति श्रीमद्भागवततृतीयस्कंधे लिखितं सृष्ट्युत्पत्तिप्रकरण प्रकारं च प्रत्यक्षमेवेतिहासस्य प्रारम्भं करोति। भूगोलेन सह इतिहासः प्रारभ्यते चात्र।

आदौ भूपिंड आत्मारूप आसीत्, तत आकाशरूपः वायुरूपस्ततस्तेजोरूपस्ततो जलेनावेष्टित आसीत्, इदमेव विश्व उदाप्लुतं यदासीत्तदा जलस्य ह्रासादनन्तरं सर्वतः प्रथमं तत्र हिमालयात्मकः मेरुपर्वतो निःसृतः, तस्य शिखराणि च कमलकर्णिकाकाराणि निःसृतानि, इदमेव लोककमलं नाभिकमलं वा। अत्रैव ब्रह्मर्षेर्लोकपितामहस्य उत्पत्तिः। तदनंतरं यथायथा जलराशेर्ह्रासः, स्थलानां निःसरण तथा २ ऐतिहासिकमानवानामुत्पत्तिस्ततो जगद्विस्तारः आसीत्। प्रथमं ब्रह्मा ततो यथा यथा प्रजापतयो ब्रह्मर्षयो राजर्षयश्च उत्पन्नास्ततो यथा यथा प्रजाः वृद्धि गतास्तत्सर्व भारतीयपुराणादिषु वर्णितं विद्यते। तेषु प्रथमः कः भूपतिर्बभूव, का वा तस्य शासनप्रणाली, राज्ये शासनाय के के विभागाः स्थिरीकृताः इत्यादिकं सर्वं पुराणेषु तत्तच्छासनवर्णने लिखितं विद्यते। तेषां शासनकालविभागस्तु केषांचित्तु तत्रैव लिखितः केषांचिच्च सृष्टेर्वर्षसख्यातो गृहीतव्यश्च। एवं ब्रह्मातः स्वायंभुवमनुतस्तेषां कालसंख्या च निश्चिता भवितुमर्हति। मन्वन्तराणां वर्णने तेषां सन्ततेर्वर्णनं एवं तेषां तात्कालिक इतिहासः। तैः कति २ वर्षैः कथं कीदृशं शासनं कृतम्—इति तत्रैव लिखितं विद्यते।

# कविः कालिदासः

श्रीचारुदेवशास्त्री, देहली।

कवयः क्रान्तदर्शना इति पूर्वे सूरय । सत्यं कविर्न केवल व्युत्पत्तिमान् भवति प्रतिभानवानपि । तथापि प्रतिभा यथा कवित्वे कारणं न तथा व्युत्पत्तिः । प्रातिभेन चक्षुषा हि पश्यन्ति कवयो विदूर च व्यवहितं च। न हि तेषां किञ्चित्तिरस्कृतं नाम । ऐन्द्रेण विमानेन विहायस गतो दुष्यन्तो देवकार्यं पर्यवसाय्य यदा तेनैव वाहनेन भुवमवतरीतु प्रक्रमते तदाऽध स्थो मर्त्यलोकोऽस्याश्चर्यदर्शनो भवति । हर्षसध्रीचीनेन च विस्मयेन स एवं प्रणिगदत्यवतरणक्रियां स्वाम् ।

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात्पादपाः ।
सन्तानात्तनुभावनष्टसलिला व्यक्ति भजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥

विमानेन गगन विगाहमानस्य दूरं गतस्य जनस्यैवं तावद्भाति शैलाः स्वमुच्चैस्त्वं विमुच्य मेदिन्या ऐकरूप्यमविवेकं गताः, न ततो विलक्षणा उच्चैस्तरा पृथक्त्वेन वा स्थिता इति । ततोऽवतरणेन सनिकृष्यमाणा भूः शैलानां शिखरेभ्योऽवरोहतीति जायते प्रतीतिः,

---

यथा श्रीरामचन्द्रस्य श्रीरामायणे इतिहासो लिखितः। तस्य आयुरपि तत्रैव लिखितम्। षष्टिवर्षसहस्राणि पृथ्वीपिड आदौ क्रमश अग्निमयोः जातस्ततः क्रमशः शीतलतां गतः इति । अत्र एतद्विचार्यम्—किं, शीतलः सर्वत एव सजातः, वा स्थानविशेषाः क्रमशः शीतलतां गता इति वक्तव्यम् । यतः प्रथमं सर्वतोऽग्निमयः पिडः तस्य भूमध्यरेखायाः पार्श्वे तु सूर्यतापस्य साहाय्यं मिलति, अतो भूमध्यरेखापार्श्वे तु चिरात् शीतलता भवतीति सिध्यति, पर याम्योत्तरयोर्ध्रुवयोः स्थाने सूर्यस्य दूरे स्थितत्वात् तापो अल्परूपेण आयाति अतो भूमध्यरेखातः पूर्वमेव तत्र शीतलता आयाति, यत्र शीतलता आयाति तत्रैव प्रथमं जलस्य प्रादुर्भावो भवति, जलह्रासात्तत्रैव स्थलभागाः नि सरंति, स्थलभागे एव सृष्टिरुत्पद्यते इति वैज्ञानिक, दर्शनाना च नियमः। अनेन नियमेन अनया पद्धत्या वा पृथिव्या ध्रुवस्थाने मेरौ वा प्राथमिकसृष्टेरुत्पत्तिर्जाता, सैव उत्तरे मेरौ, मेरुप्रदेशरूपे भारते च आदिसृष्टेरारभः, सैव आर्यसृष्टिः । एवमेव दक्षिणध्रुवस्थाने अमेरौ अधोमेरौ अमेरिकास्थाने पाताललोकेऽपि प्रथमा सृष्टिः संजाता, यतस्तदपि स्थानं उत्तरध्रुवेण सहैव शीतलतां गतम् । तत्र अनार्यसृष्टिः संजाता, सैव आसुरी सृष्टिः । एवं भूपिण्डस्य उत्तरीयगोलार्धविभागः क्रमशः सुराणां आर्याणां च भूमिर्जाता। एवमेव दक्षिणीयगोलार्धः असुराणां, अनार्याणां च भूमिर्जाता। आर्यजातिः, अनार्यजातिश्च पृथक् विद्यते । नहि तयोरुत्पत्तिस्थान एक, भिन्नं २ स्थानं च वर्त्तते। ततः तयोरन्योन्यसम्मिश्रणात् अन्या अनेका जातयो जातास्ता एव अधुना अनेकाः अनेकरूपेण भारते वा अन्यस्थानेषु निवसंति-इति निरवद्यम्। एषः सृष्टेः संक्षिप्तः इतिहासः।

शैलाश्चोन्मज्जन्त इव भुवः। उन्मज्जनं नामामीषां पृथिव्या नानात्वेन स्थितिः, तत उद्भवतामुदञ्चतामिव दृग्विषयावतरः। इदं चापरं तदानीं दृश्यं भवति—पूर्वं पलाशिनः पलाशप्रचयात्तिरोहितात्मान. एव नयनयोरयन गता, सम्प्रति स्कन्धा अपीति स्वरूपाविष्कारस्तेषाम्। एवं सरितोपि वैदूर्यकृततनूभावेनादृश्यमानजलौघाः सम्प्रति सामीप्ये सति सन्तायमाना इव स्पष्टमवभासन्ते। इद चापरमद्भुतं दृश्यते—कोपि देवो वा दानवो वा तिरोधायात्मान सशैलद्रुमनिम्नगामिमां गां साम्प्रत्युत्क्षिपतीव। एवं हि त्वरिततमामवतरति विमान यथा तदारूढो नृपतिर्दुष्यन्तो चेतयते गतिमदिदं विमान येनावतरामीति। अतएव परकृत पृथिव्या उत्क्षेपणमुत्पश्यति। इदमिह वर्णनायां विमर्ष्टव्यं भवति—न हि कवे. कालिदासस्य विमानेन दिव आरोहणं शक्यक्रियं संभाव्य वास्ति। अविषयो हि स देशस्तादात्विकस्य जनस्य। न हि यथेदानीं तथा तदानीं विहङ्गमानामिव गगनविहारोऽभून मानुषाणाम। वर्णना चैषा तथा स्फुटा तथा च सत्या यथा केनापि साम्प्रतिकेन विमानस्थेन समर्थेन जनेन शक्या निर्वर्तयितुम्। अहो अपूर्वा कापि प्रेक्षा कवेर्ययोपपन्नोयमत्यन्तमदृष्टमपि दुरासदमप्यर्थं समुत्प्रेक्षितुमलम्, अविकलं च यथातथं सनिधापयितुम्।

इद मे दर्शनमुपमोत्प्रेक्षयोरर्थान्तरन्यासे च यः प्रभवति. योऽविहतगतिर्भवति, यस्य पद्ये पद्ये प्रियङ्करा अनवद्या रस्याः प्रत्यग्राश्चेमा अलङ्कृतयः स्फुरन्ति, अभिधेयाभिव्यक्तिकर्यश्च रसपोषकर्यश्च सत्य एव काव्यशरीरशोभामुत्कर्षन्ति स कवि स क्रान्तदर्शनः। तत्रैवान्वर्थोय कविरिति शब्द। आस्वाद्यतां तावदियमुपमा कालिदासीया—

म न्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्।<br>
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः॥

महाकविरपि कविकुलकैरवसुधाकरोपि कालिदास आत्मान मूढ मन्यते। इद मे बालिश्यं यदहं मूढोऽपि कवियशः प्रार्थये, कविरिति प्रथितः स्यामिति कामये। दुर्लभ मे तदङ्गेनेति च न विभावये। नियतमेवमाचरँल्लोक उपहास्यतां यास्यामि। यथा वामनः कश्चित् प्रांशुना प्रलम्बवर्ष्मणा लभ्ये फले वृक्षस्थे गृध्यति, तदादातु स्वल्पां स्वभुजामुन्नमयति न च पारयति तत्स्प्रष्टु कुत एव ग्रहीतुम्। एव चेष्टमान तमवलोक्य बाढ हसति जन आत्मनोऽनीश। तथा नैसर्गिको दुर्निरोधश्च स हासो भवति यथा यतिरपि सशितव्रतस्तं न संयच्छेत्।

यदि च भवतां सन्देहालंकृतेरासिस्वादिषा, तर्हीयमास्वाद्यताम्—

प्रवालनीलोत्पलनिर्विशेष-<br>
मधीरविप्रेक्षितमायताक्ष्याः।<br>
तया गृहीत नु मृगाङ्गनाभ्य-<br>
स्ततो गृहीतं नु मृगाङ्गनाभिः॥

प्रायेण लौकिकेर्थे सन्दिहाना वय परं क्लिश्यामहे निर्णयमनुधावितुमपारयन्तः। इह तु महाकविना सहैव सर्वथा सांशयिका अपि वयं कामप्यपूर्वां निर्वृतिं भजामहे। अहो अलङ्कारचारिम्णो माहात्म्यम्।

दुर्वाससः शापेन प्रमुषितस्मृतिर्दुष्यन्त. शकुन्तलां प्रत्याख्यात्, अंगुलीयकदर्शने च सति प्रतिलब्धस्मृतिः स्वः परिग्रह एव मया निराकृत इति जातानुशयो यदा शकुन्तलां संगच्छति तदा तां क्षमयन्नाह—

सुतनु। प्रत्यादेशव्यलीकमपैतु ते

किमपि मनसः संमोहो मे बलवानभूत्।

प्रबलतमसामेवं प्रायाः शुभेषु हि वृत्तयः

स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया॥

उत्प्रेक्ष्यतां तावत्पुरतः स्थितः कश्चिदन्धो यस्य सञ्चिकीर्षया तत्सखो वा तद्बान्धवो वा तस्य शिरसि स्रजं क्षिपति। न च क्षेपात्पुरा चिकीर्षितं वेदयति स्रजयितुं त्वेच्छामीति। क्षिप्तमात्रायां च स्रजि किं तु वेदयतेन्धः। सर्पो मे शिरसि पतित इति। महानस्योद्वेग। रक्षणीया असव इति ससंभ्रमो धूनयति शिरोऽवधुनाति च स्रजम्। नान्यच्चिन्तयते, नान्यदाद्रियते। अनवसरोऽर्थान्तरचिन्तायाः संशयितेषु प्राणेषु। इष्टं परिहरन्नपि नासौ विजानातीष्टं परिहरामीति। एव प्रकृतेपि मुनिशापेन हृतचेता दुष्यन्तः परिगृहीतपूर्वां कल्याणीं कल्याणगर्भां कुलसन्तानकरीं प्रियां जायां शकुन्तलामुपसृतां परकीयेति परिज्ञाय पराकरोति परपरिग्रहग्रहेण पांसुलः पातकी नारकी च भविष्यामीति शङ्कमानः। अहो अप्रहतपूर्वो वाचामेष पन्थाः। किं नाम हारितरं दृष्टान्तान्तरं स्यात्। किं वाऽन्यच्छ्रेयो वस्तुसतत्त्वनिरूपणं स्यात्।

कविसम्प्रदाये हासादीनां धवलता प्रसिद्धा। सेयं धवलता केवलमुत्प्रेक्षामात्र न भवति। दशनरुचोऽवदाता भवन्तीत्यनपलाप्योर्थः। हासे च मुखं व्यात्तं भवतीति दशना उत्कटदर्शना भवन्ति। तदेषां या स्फुरन्ती भाः, तां हासे संक्रमय्य कवयो हासस्य धवलतामास्थिताः। इमां च धवलतामाश्रित्य या उपमोत्प्रेक्षाः कविनोपज्ञातास्ता दृश्याः। ता हि रस्यतमा भवन्तीत्यपरिहार्यास्वादाः। ऋतुसंहारे तावच्छरदि प्रगे कुमुदसंकोचं वर्णयन्कविराह—

कुमुदमपि गतेस्तं लीयते चन्द्रबिम्बे,

हसितमिव वधूनां प्रोषितेषु प्रियेषु।

अस्तं गते शशिनि कुमुदमपि संलीयते सावसादं प्रियेण विप्रयुक्तम्। तदिदं तदवस्थं निशाम्य दूयते चेत सचेतस। अयं च कुमुदसंलयः प्रोषितभर्तृकाणां हसितसंलयं स्मारयति तेन सध्मति निपुणं करुणरसपरिपोष कृतः कविनोत्तरार्द्धेन।

प्रसिद्धमिदं हासधावल्यमाश्रित्य पूर्वमेघे कैलासवर्णनायां यत्तस्याचलस्याट्टहासतोत्प्रेक्षिता कविना तत्कस्य सहृदयस्य हृदयं नावर्जयति। आह खल्वेम्—

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः

कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः।

शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं

राशीभूतं प्रतिदिनमिव त्र्यम्बकस्याट्टहासः॥

अट्टहासो हि कियतश्चित्क्षणानेव व्याप्नुयात्, ततो विलयं यायात्, समुत्तुङ्गपर्वतावभासना तु दूरेऽपास्ता स्यादिति जानानः कविः प्रत्यहं प्रवर्तमानस्य भगवतोऽट्टहासस्य निचेकायोयमित्यपि समुत्प्रेक्षते। इयं च समुत्प्रेक्षा निर्निमित्ता सत्यसंभाव्यतालीढा प्रत्यायिका न स्यादिति निमित्तमपि वास्तवं प्राह—शृङ्गोच्छ्रायैः कुमुदविशदैरिति।

यदा कश्चिल्लीलयोपनतमभीष्टमर्थमुपभोक्तुकामोपि केनाप्यपदेशेन वारितप्रसरो नेष्टे तद्भोक्तुं तस्य कोपमा प्रशस्यतमेति जिज्ञास्यचेच्छ्रूयतां यदाह दुष्यन्तो निर्वर्णयञ्शकुन्तलाम्—

इदमुपनतमेवं रूपमक्लिष्टकान्ति

प्रथमपरिगृहीतं स्यान्न वेत्यव्यवस्यन्।

भ्रमर इव विभाते कुन्दमन्तस्तुषारं

न च खलु परिभोक्तुं नैव शक्नोमि हातुम्॥

विभाते कुन्दं सविकासमप्यवश्यमप्रसेकपूर्णमिति भ्रमरो मकरन्दं पिपासुरपि न सहते पातुं न च कुन्दं विहातुम्। न चापसरति, किं तर्हि तत्रैव चिरं परिसरति भ्रमरो हि सः। रसेऽभिनवे लोलः स तं पश्यन्नेव कथं कुन्दसंनिधिं जह्यात्। एवं प्रकृते दुष्यन्तः शकुन्तलाया एवमनाकारितोपस्थितायाः शरीरलावण्यं निभालयंस्तेन बलाद्धृतचेता अपि ममायं परिग्रहो भवति न वेत्यनवधारयन्ममेयं भोग्येति परिग्रहीतुं न पारयति। न च हृदयेन परित्यक्तुम्। महाकविः कालिदास एवंविधेष्वर्थसामान्येषु सौन्दर्यनिर्भरमाधातुमीष्टे नेतरः।

लोके यः प्रभूणां दासेषु समादरः, गुरूणां वा शिष्येषु, ज्यायसां वा कनीयःसु स तथा समुत्साहाय शक्तिसमुन्मेषाय च भवति यथा ते दासादयो दुःसाधेष्वपि तेषु तेषु कृत्येषु सरभसं प्रवृत्तिमन्तो भवन्ति सिध्यन्ति च। अयं भावः केन दृष्टान्तेन व्यक्ततां रस्यतां चोपनीयेत, केन वाऽर्थान्तरेण समर्थ्येत येन जनस्य वा महाजनस्य वा समं प्रत्यायकः स्यादिति कविः कालिदास एव वेद। कति नाम लोकेऽन्वहमनुभवन्तोपीममर्थं कालिदासवद् विशदयितुमीशीरन्। कौतूहलं चेच्छ्रूयतां रसनिरन्तरा भणितिरेषा कवेः—

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम्।
किं वाऽभविष्यदरुणस्तमसा विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत्॥

अत्र पूर्वार्द्धे प्रतिपादितोऽर्थ उत्तरार्द्धगतेनार्थेन समर्थ्येत इति सामान्यस्य विशेषेण समर्थनादर्थान्तरन्यासोऽलङ्कारः, दृष्टान्तः इति तु राघवः। भवतु तत्तथाऽन्यथा वा। इदन्त्ववश्याभ्युपेयं पूर्वत्रोदीरितोऽर्थ उत्तरार्द्धेन परिपोषं नीतो दृष्टान्तोपन्यासेन वा निदर्शितो यथा बुद्धिमुपारोहति चेतश्च चमत्करोति न तथा केवलः। आदित्यो हि महती देवता, अपरिच्छिन्नमस्या ऐश्वर्यम्, अनवधिकं च सामर्थ्यमिति सहस्रकिरण इति व्यपदेशेन ध्वन्यते। सहस्रमनन्ता ह्यस्य देवस्य किरणा इति किमात्मनाऽसहायेन तमो भेत्तुं नालम्? बाढमलम्। तत्किं ऊरुतारमरुणं तत्रार्थे नियुङ्क्ते। पुरस्करिष्यामि स्वजनमिति। धुरि करणं सारथ्ये मे कुर्विति रथाग्रे निवेशनमेव पुरस्करणं सत्करणं वा तस्य भवति। स चारुणः स्वयमनूरुरिति पङ्गुतोपहतः सर्वथाऽक्षमो यत्र तत्र प्रसृतानां सन्तमसानामपाक्रियायाम्। एवमनीश्वरोपि यदीश्वरो भवति दुर्घटं घटयितुं स आदित्यानुग्रहः, स तत्कृतः सत्कारः। नात्र कारणान्तरं किमपि शक्यमभ्यूहितुमिति कविर्नो निश्चिकायिषति।

उर्वश्याः केशिनापहृतायाः पुरूरवसा च प्रत्याहृताया मूर्च्छापायं क्रमिकमुपवर्णयन्कविर्यां मालोपमां बबन्ध सा कमपि शोभातिशयं धत्त इतीह संगृह्यते—

आविर्भूते शशिनि तमसा मुच्यमानेव रात्रि-
र्नैशस्यार्चिर्हुतभुज इव च्छिन्नभूयिष्ठधूमा।
मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा
गङ्गा रोधःपतनकलुषा गृह्णतीव प्रसादम्॥

नहि शशिनः प्रादुर्भावेन सममेव रात्रिस्तमिस्रेण मुच्यते सहसा, अपि तु प्रारभ्यते तस्यास्ततो मोक्षो न तु परिसमाप्यते। तत्र काल उभयोरपि तेजस्तिमिरयोः सहावस्थितेः। मोहो नाम मूर्च्छा संमीलनमिन्द्रियाणामिति साधूपमीयते तमसा। प्रबोधश्चालोकसम इत्युपपन्न उपमानोपमेयभावः। मूर्च्छापि बहुलं गता न त्वखिलम्। सौरं तेजः सायमग्निं संक्रमते, आदित्यो

वा अस्तं यन्नग्निमनुप्रविशतीत्यादिभिः श्रुतिभिर्निशो वह्निरधिकं दीप्यते, प्रायेण विधूमश्च भवति। न चात्यन्तमधूमः। भगवती भागीरथी स्फटिकविशदमम्बुराशिं वहन्त्यपि कूलपातेन कादाचित्केन वार्षिकेण वा कालुष्यमुपैति, मलीमसोदका भवति, पर नचिरादेवापेतकालुष्या प्रसन्ना भवति। यदा च साऽनधिगतपूर्णप्रसादा प्रसन्नप्राया समस्ति तदवस्था सोपमा मोहाद्विमुच्यमानाया उर्वश्याः।

कालिदासे कीदृक् प्रकृतिवर्णनमिति विमृशामः। प्रकृतिशब्देनेह बाह्यवस्तुस्वभाव उच्यते मनुष्यादिप्राणिवर्गस्य च स्वभावः प्रवृत्तिर्वा। तेन सर्गसौन्दर्यवर्णना प्रकृतिवर्णनं भवति मनुष्यादिहृदयनिरूपणं च। उभयत्रायं कविः परां सीमानमुपगतः प्रावीण्यस्य। स्त्रियो नाम कुतूहलिन्योपि निसर्गशालीना भवन्तीत्ययमर्थो यया रीत्या कविनोक्तः सा कामपि हृदयङ्गमां चमत्कृतिं वहति। एवं ह्याह मालविकामधिकृत्य नायकमुखेन—

कात्स्न्र्येन निर्वर्णयितुं च रूप-
मिच्छन्ति तत्पूर्वसमागमानाम्।
न च प्रियेष्वायतलोचनानां
समग्रपातीनि विलोचनानि॥

इदं ह्यसकृदनुभूयते लोके इदम्प्रथमे वरवध्वोः समुपश्लेषे। आयतलोचनानामिति विशेषणं विशेष्यसमर्पकम्। साभिप्रायं चेदम्। आयतलोचना अपि सत्यस्ता योषाः कृत्स्नं रूपं नावलोकितुं पारयन्ते। कस्तत्र हेतुः? किमिच्छाविरहः। नेत्याह। इदम्प्रथममुपनतः समागमः, तत्र कात्स्न्र्येन रूपदिदृक्षा कस्या न स्यादन्यत्र तत्कर्मण्यनर्हायाः। शालीन्यमेव सहज तत्र हेतुरिति कविर्निपुणमीक्षते। शालीन्येन परवत्यस्ता दिदृक्षितेपि प्रिये चक्षूंषि विस्फार्य व्यापारयितुं नोत्सहन्ते।

सूर्यचन्द्रादीनां दशापरिवर्तोपि दशावैषम्यमनुभवन्त लोकं येन प्रकारेण धैर्यमुपदिशति तमित्थमाह—

यात्येकतोस्तशिखरं पतिरोषधीनाम्
आविष्कृतारुणपुरःसर एकतोर्कः।
तेजोद्वयस्य युगपद् व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु॥

इदमत्र हृदयम्—ओषधीनां पतिरपि भैषज्यकुशलः समृद्धिमानपि सन्निति ध्वनिः। अरुणो नामानूरुरुत्थानेभ्युदयेऽक्षमस्तं तथाभूतमपि पुरस्करोति, उदयं गमयति रविः। अत्र यः स्वयमुद्यियासुः परमपि तत्राक्षममुदयं प्रापयति सोपि ध्वन्यते। सूर्याचन्द्रमसोरुभयोस्तेजसोरुदयास्तमयौ समुन्नतिभ्रंशौ लक्षयन् विषमस्थो जनः स्थाने समाश्वस्तः स्यात्। यदि भगवन्तौ पुष्पवन्तावप्यालोकाह्लादैकयोनी एवं दशापरिवर्तमश्नुवाते का कथेतरेषां जनिजुषाम्। प्रभातवर्णनमिदं नाप्रयोजनं कविसामर्थ्यप्रदर्शनमात्रप्रयोजनकं वाऽप्रसक्तम्। वेलोपलक्षणार्थमादिष्टः शिष्यस्तद्वर्णनायां प्रवृत्त इति नितरां प्राप्तावसरमेतदिति कः सुधीः सन्दिहीत। यश्च तेजोद्वयस्य व्यसनोदयोपन्यासः सोपि समासन्नशकुन्तलाविप्रयोगदूनचेतसोः सख्योराश्वासनायेति सुतरामौपयिकः।

इदं चावश्यमभ्युपेयं प्रकृतिं चेतनां सवेदनवतीं ज्ञप्तिमतीं वा प्रतिपादयन्नपि कविरुत्प्रेक्षितोयमर्थो न वास्तव इतीवादिशब्दप्रयोगेण व्यनक्ति। शकुन्तलायां पतिकुलं प्रति प्रस्थितायां मृग्योपि सखीभिरनसूयादिभिः समं दुःखसब्रह्मचारिण्यो भवन्तीति निदर्शयन्नाह—

# दृष्टिकोण-प्रभेदः

( श्री नन्दकिशोर झा, श्रीनगर, बेतिया )

किञ्चिद् वृद्धया अधिकञ्च वध्वाः कार्यदक्षताया हेतोर्गृहकार्येभ्यः प्राप्तावकाशा यशोदा यदा प्रतिवेशिन्या गृहे गल्पगोष्ठीं कर्तुमुपस्थिताभूत्, तदा साप्यावश्यकानि गृहकार्याणि त्यक्त्वा तया सहोपवेष्टुं विवशाभवत्। गल्पस्य मुख्यो विषय आसीद् यशोदाया गृहस्य पारिवारिक दुःखदैन्यम्।

प्रतिवेशिनी यशोदायाः सन्तोषार्थमपृच्छत्—“रामदयालोः ( तस्याः पुत्रस्य ) कीदृशो व्यवहारो वर्त्तते ? अग्रजे !”

“अयि भगनिके, किं पृच्छसि ? वध्वासौ मेषो निर्म्मितो मेषः ! किं तत्सामर्थ्यं यदसौ तस्या आज्ञां विना किमपि कार्यं कुर्यात्। अहन्तु मन्ये काप्यस्यैव नहि।”

प्रतिवेशिनी अस्मिन् ज्वलने अपि च फूत्कारं दत्तवती—“प्रथम तु अति-विचारवान् आसीत्; अस्मभ्यमपि कियत उपदेशान् सततमददात्।”

“अपि त्यजैतद् भगिनिके, तस्य सम्पूर्णं पाण्डित्यं तयैव डाकिन्यापहृतम्।”

गल्पस्य प्रसङ्गः क्रमशो यशोदाया जामातरमभिपरावर्त्तत।

प्रतिवेशिनी तेनैव स्वरेणापृच्छत्—

“शिवपूजनस्य( जामातुः ) कीदृशः समाचारः ? अग्रजे !”

“पूर्णं देवतास्ति देवता ! तादृशं जामातरं तु ईश्वरः सर्वेभ्यो दद्यात्। धनवतीं तु इयन्मन्यते यत्तामपृष्ट्वा किञ्चित्कार्यमेव नहि कुरुते। यद्यहं कथयेयं तदा मातापितृभ्यां बहुशो वार्यमाणोऽपि अत्रैवागत्य स्वगृहमपि निर्मास्यति। अहन्तु तमेव स्वपुत्र मन्ये।”

प्रतिवेशिनी न जाने केन भावेनाकथयत्—“सर्वासां कन्यकानां भाग्यं भगवान् ईदृशमेव कुर्य्यात्।”

( नई धारातः )

---

उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥

अत्र पूर्वार्द्धे यथा मृगीणां शोकपरीतानां मुखगृहीतकवलानामधविलीढानामुद्गरणमुक्तं मयूराणां निरुत्सवानां च नर्तनविराम इत्युभयं वास्तवं भाति न तथोत्तरार्द्धे लतानामश्रुविहारः। इवशब्दो हि कृतस्यापि तस्य मिथ्यात्वं ब्रवीति ॥

# फाल्गुनप्रमोदगोष्ठी

( प्रमोदमेदुरशास्त्री )

मडममहोदया—आधिकरणिकमहाशय ! ( रजिस्ट्रार ) राजेष्टीकरणपुस्तके मम विवाहस्योल्लेखसूचनाऽपि सनिवेशनीया ।

रजिस्ट्रारः—सम्यक् । कच्चित् पूर्वमपि विवाहः संवृत्तः श्रीमत्या ? यदि संवृत्तस्तर्हि, कदा, केन ? इति ज्ञातुमिच्छामि ।

मैडम०—एतत्तु मत्स्मरणशक्तेः परीक्षणमिव । यदि अहमिदमज्ञास्यं तर्हि दैनन्दिनीम् ( डायरी ) एव सह आनेष्यम् । नाऽहं स्वल्पकाले परिगणय्य वक्तुं शक्नुयाम् । विस्तृता संख्या ।

× × ×

होटलस्य प्रबन्धकर्ता—( सिनेमाऽभिनेत्रीं प्रति ) नागदन्तस्थितः[1] सोयं हारो विस्मृतो भवत्या ।

अमेरिकायाः अभिनेत्री – नाऽयं हारः । एषा हि विवाहे प्राप्तानाम् अभिज्ञानांगुलीयकानां मयैव प्रोता माला ।

× × ×

अहंमदः—( एकं सभ्यं प्रति सगर्वम् )—अस्माकं पितामहस्तु परिचितो भवेदेव भवताम् ?

सभ्यः–अवश्यम् अवश्यम् । स एव तु, यो हि अस्माकं प्रतिवेशे प्रत्यहम् उपानद्–विक्रयार्थमागच्छति स्म ?

× × ×

प्रमादशीलः (भुलक्कड) प्रमोदः प्रत्यहमेव पान्थावासे ( होटल ) स्वीयं निवासकोष्ठकं विस्मरति स्म । कदाचित् अष्टसंख्यके प्रकोष्ठे प्रविश्य प्रेमचन्द्रं प्राऽकोपयत् । कदाचिच्च नवसंख्यके निवाससदने निविश्य नवीननारायणं निर्वासयितुं प्रायतत । एकदा त्वतीव लज्जितः स स्वीयं दशसंख्याकं कोष्ठकं निर्निमेषाभ्यां नयनाभ्यां निकामं निरीक्ष्य निश्चिनोति स्म यत् इतःपरं न कदाचिदपि विस्मरणाय प्रमादाय वा दास्याम्यवकाशम् । द्वितीये दिने नगरभ्रमणान्निवृत्तोऽसौ महताऽवधानेन दशसंख्याके भवने प्रविश्य प्रहर्षं प्राऽकाशयद् 'दृश्यताम्, यदद्य कियदवधानं मया रक्षितम् ।" अतएव तत्प्रकोष्ठकस्थितं सभ्यमेकं सोच्चैर्हासं प्रावोचत्—महाशय । दृश्यताम् , अद्य तु निर्भ्रमं दशमसंख्याकमेव प्रकोष्ठमुपगतोऽस्मि । पश्यत, द्वारे !"

सभ्योऽसौ निजकार्ये निविष्टचित्तोऽभूत् । अकस्माज्जातेन अस्योच्चैर्घोषेण नितरां चकितोऽयं प्रमोदमहाशयस्याऽभिमुखम् आनख-शिखं वीक्षते स्म । तादृक् चकितनिरीक्षणेन प्राऽभवत्प्रमोदस्याऽपि नितरां विस्मयः । ततो नवीनसभ्यमहाशयेन सह संलापेन परिज्ञातं प्रमोदेन यत् अद्य प्रमादात् पान्थाऽऽवासमेवाऽपरं प्रविष्टोऽस्मि !!

सभ्यस्याऽट्टहासेनाऽभिनन्दितः, अतिलज्जितश्च परावर्तते स्म निजनिवासं निम्नमुख !!!

## फाल्गुनस्य प्राकृतिकशोभा

घनाक्षरी 'कवित्त'

'कोरका विकासमुपयाताः कर्णिकारेष्वद्य
कान्तिः काञ्चनारे[2] काऽपि भाति कलिकाकुलस्य
श्रूयन्ते समिद्ध[3]सहकारे पिकपुञ्जा[4]ऽऽरवा
मधुकरगुञ्जा सविधेऽसौ सरसीरुहस्य ।
मञ्जुनाथ रसिकसमाजे नवगीतिच्छटा
पिष्टा[5]तकरङ्गघटा शोभते शुचं निरस्य
दत्तमनोलोभा विप्रयोगिमनःक्षोभायाऽद्य
भूरितमशोभा परितोऽसौ भाति फाल्गुनस्य ॥'

---

१. शङ्कु, 'खूँटी' । २. कचनार । ३. पुष्पिते आम्रवृक्षे । ४. कोकिलसमूहस्य आरवाः कूजितानि । ५. पिष्टातक 'गुलाल', 'रङ्ग' एतयोर्घटा ।

# प्रतापस्तोत्रम्

( श्रीकृष्णलाल 'नादान' देहलीस्थहंसराजविद्यालयस्य छात्रः )

[ स्थाने स्थाने शोधनीयोपि छात्रोत्साहप्रवर्धनाय प्रकाशितो निबन्धः प्रोत्साह्येत पाठकमहोदयैः । सम्पादकः ]

महाटवीनिवासकृन्नराधिपोऽपि यः सदा
स्वदेशरक्षणे रतः स्वदेशगौरवे रत ।
धराशयो दृढव्रतो विदेशिनो न्यकासयत्
सदा प्रतापसिंहकः स प्रेरितान् करोतु न. । १।।

स चेतकः प्लवङ्गमस्तुरङ्गमो हि भाग्यवान्
यदीयपुष्टपृष्ठविष्टरे हसन् स भास्करः ।
सुपूजितः स्वदेशिभिः सदा मधूद्यमैरिव
व्यनाशयत् मुगूलमत्सरान् ज्वलनकरैरिव ।।२।।

समुत्थितैश्च हल्दिघाटियुद्धभूमिधूलिभिः
कृताम्बरभ्रमद्घनान्धकारघोरदुर्दिनैः ।
व्यराजताङ्गणं हि तत् प्रतापतप्तकीर्तिभि-
स्तडिल्लतास्समानखड्गविभ्रमैरितस्ततः ।।३।।

ठकट्ठकट्ठकत्तुरङ्गधूयमानमेदिनी—
भयप्रवृद्धभङ्गिमा प्रतापसिंहताण्डवः ।
विमर्दनाय जायतां स्वराष्ट्रघातिनां द्विषां
पदे पदे जने परस्परप्रभेदकारिणाम् ।।४।।

त्वया वनेऽपि भीषणे विभावरीतमः सरः-
प्रपञ्चमग्नपादपप्रसूनमुग्धजन्तुनि ।
प्रकाशमानहिंस्रघोरदंष्ट्रकालवस्तुनि
प्रजागरेण सिंह हे कुटुम्बिना पदं कृतम् ।।५।।

अहो क्व राजविष्टरे समुन्नतं स्वशासन
सुवर्णपात्रभोजनं क्व भीषणं वन परम् ।
न यत्र घासरोटिकाऽपि लभ्यते यथासुखं
जलं न प्राप्यते कुतः पयः शिशुर्लभेत रे ।।६।।

स राजपुत्रवंशमण्डले विभासि-चन्द्रमाः
स्वतन्त्रतापथप्रदर्शनाय दीपकः पुरः ।
हिमालयस्य तुङ्गशृङ्गचारिविग्रही जयो
यतो हि तत्र दृश्यते हिम हिमं यथा यश ः।।७।।

त्वया समुन्नतं शिरस्त्वया विभासितं जगत्
त्वया पदेन विष्णुना प्रतिष्ठिता वसुन्धरा ।
त्वयैव पीनवक्षसाद्य भारते सहिष्णुता
त्वयैव बाहुदण्डताडिता बिभेति द्विड्घटा ।।८।।

शिरःप्रदेशवेष्टनं समुच्चभालपट्टकं
सपत्नकोपकारणेन रक्तनेत्रपल्लवम् ।
वृषांसबन्धुरं प्रवृद्धपीनवृत्तकन्धरं
स्मरामि वीरवत्सलं प्रतापधैर्यकेतनम् ।।९।।

जय प्रतापसिंह वीर मातृभूमिरक्षक
त्वदीयदुर्गभित्तयो वदन्ति प्रस्तरैरिव ।
गरीयसी हि स्वर्गलोकतो जनन्यभीहिता
बिभर्ति या च जन्मभूमिरेव गौरवान्विता ।।१०।।

# "भारतीयांगनानां वास्तविकं कर्मक्षेत्रं गृहम्"

(श्रीजयन्तीलालकरुणाशङ्करभट्टः, काशी)

भारतभूमिः पुण्यभूमिः । प्राचीनकालादारभ्यैवायं देशः सर्वदेशधौरेयत्वेन वरीवर्ति । अस्मादेव देशाद्विश्वस्थास्सर्वे मानवाः निजं चरित्रं शिक्षेरन् । इन्द्रादयो देवा अपि भारतभूमौ जन्म लब्धुमभिलषन्ते स्म ।

ईदृशेऽस्मिन्भारतदेशे नैका पावनचरित्रा सीतासावित्र्यनसूयादमयन्तीद्रौपदीमैत्रेयीगार्ग्यादयस्साध्व्यस्सञ्जाताः यास्स्वभर्तृस्कन्धैस्स्कन्धान्मेलयित्वा तेभ्यो सर्वकार्येषु सहयोगमदु', एतासु बह्व्यस्तु सर्वशास्त्रार्थनिपुणा वेदवेदाङ्गपारगा अपि आसन् किन्तु ताः न विवदिरे पुरुषैः साकं जातु स्वतन्त्रतार्थं स्वाच्छन्द्यार्थञ्च । स्वस्थानं सम्यग्विजानन्त्यस्ताः न च किमप्युक्तवत्यस्स्वच्छन्दवितरणार्थं पुरुषान्प्रति ।

किं ता अज्ञास्सकलागमनिगमगणे ? अविवेकिन्यः किमङ्गनाजनाधिकार-विषयेषु ? न रोचते स्म किं निरर्गलं परिभ्रमणं तेभ्यः ? बलादुत्तरं भविष्यति सर्वं रोचते स्म किन्तु तास्ससम्यग्विजानन्ति स्म यद् भारतीयाङ्गनानां वास्तविकं कर्मक्षेत्रं गृहमेवास्ति । गृहकार्यमेव तासां प्रधानं कर्म । श्रुतिस्मृतिज्ञानवत्यस्ताः बुबुधिरे महर्षीणां तानि वचनानि—

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥
अन्यच्च न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं तु गृहिणीहीनं कान्तारमिति कथ्यते ॥

अत एवानिशं भारतीयादर्शं पालयित्र्यस्ताः पावनचरित्रा नार्यः "गृहस्वामिनी" संज्ञकयोच्यन्ते स्म शेमुषीमद्भिः ।

ता अङ्गनाः गृहमेव निजं वास्तविकं कर्मक्षेत्रं विजानत्यः प्रतिदिवसं नानाविधान्सरसान्भोजनसम्भारान्निर्माय स्वस्वामिभ्यो भोजयन्ति स्म, तासां सेवया च प्रभावितास्ते स्वामिनः आजीवनं तासां पतिप्राणानामङ्गनानामादरमकुर्वत ।

इत्थञ्च नरनारीयुगलमहर्निशमविरतानन्ददाम्पत्यसुखमनुभवत्त्रिदिवादपि अधिकमानन्दसन्दोहमत्रैवाभजत ।

ताः नार्यश्च निजबालकेष्वपि अनुत्तमान्संस्कारान्प्रक्षिप्य तान्बालकानागामिनि जीवने सुनागरिकान्सुचरित्रान्निजपादसन्नद्धांश्च विदधति स्म, किन्तु हा, महत्कष्टं सञ्जायते साम्प्रतं भारतीयाङ्गनानामिमां हीनां दशामवलोक्य ।

वर्तमानकाले बह्व्योयुवत्य विदेशवायुस्पर्शविचित्रदेहा आत्मानं कृतकृत्यं मन्यमाना पुरुषैः साकं स्त्रीणामधिकारविषयेषु विवदत्यो दरीदृश्यन्ते विस्मृतवत्यस्तास्सीतासावित्रीमैत्रेय्यादीनामुदाराणि पूतानि लोकचरित्राणि । विदेशसभ्यतानुभाविता एता नार्यः जातु मनसाप्यनुगन्तुं नेहन्ते तासां साध्वीनां वर्त्म ।

अतएव भारतीयसंस्कृतिपरिभ्रष्टास्ताः नानादुष्पथेषु विचरन्ति ।

स्त्रीणां विषये नेदृशो ममाभिप्रायः यत्ताः पुरुषाणां दास्यो भूत्वा वर्तन्ताम् पुरुषाणां ताडनान्यनवरतं सोढ्वाऽपि नैकं शब्दं वदनविवरान्निष्कासयन्तु । विनापराधं स्त्रीभ्यो दण्डप्रदातारः पुरुषा अवश्यं दण्डार्हाः निन्दनीयाश्च । पुरुषैरपि स्त्रीभिः साकं समत्वेन प्रेम्णा च

व्यवहर्तव्यम्, ताः न दास्यः किन्त्वस्मत्-कुलप्रकाशिकाः देव्यः। किन्त्वहं तु कथयामि यदि साम्प्रतिका नार्यः स्वकर्मक्षेत्रं सम्यग्ज्ञात्वा तत्रैवशेष्य स्वकर्मक्षेत्रात्परिभ्रष्टा न भवेयुस्तदा पुरुषाणां ताडनसमय एव नागच्छेत्।

दिवानिश गृहकार्यं विदधत्यस्ताः स्वस्वामिनः सेविष्यन्ते तेषां मनांसि स्वप्रियवाक्कार्यव्यापारैरनुरञ्जयिष्यन्ति तदा ते पुरुषास्तासां दासा इव भविष्यन्ति गृहेषु देव्य इव तास्समादरं प्राप्स्यन्ति। किन्तु हा! महत्कष्टस्येयं वार्ता यत् पाश्चात्यप्रभञ्जनप्रभावितान्तःकरणवतीनामाधुनिकीनां युवतीनां बुद्धिपथं नायात्ययं स्थूलोऽपि विषयः।

एतस्मिन्विषये साम्प्रतिकाः पुरुषा अपि किञ्चिद्दोषभाजनम्। त एव प्रोत्साहयन्तीमा युवत्यः ब्रुवन्ति च यद् "युगपरिवर्तनं जातम् नाधुना तादृशः प्राचीनस्समयः यस्त्रियो गृह एव तिष्ठेयुः साम्प्रतं तु स्त्रीणां स्वतन्त्रतावश्यकी, ताभिः गृहं परित्यज्य बाह्यक्षेत्रे आगन्तव्यम्, राजनीतावन्यनीतौ च भागो ग्रहीतव्यः।

ईदृशाः विदेशवायुदूषितचेतसः नयन्ति नः स्त्रीसमाजं दुष्कर्मगर्ते।

यथार्थं त्वेतदेव यद् न युगपरिवर्तनञ्जातम् किन्तु मनुष्याणां मनांसि परिवर्तितानि। भगवान्भास्करः सर्गकालादारभ्याद्यावधि प्राच्यां दिशि उदय प्राप्य पश्चिमां दिशमेवास्तमेति। न तत्र किमपि परिवर्तन जातम्। नभस्वन्निशानाथादयोऽपि यथापूर्वमेव स्वकार्याण्यद्यापि कुर्वन्ति। एतेनैवं ज्ञायते यद् युगपरिवर्तन न जातमस्ति किन्तु मनुष्याणां चित्तान्यवश्यं परिवर्तन गतानि।

साम्प्रतं भारतीयाङ्गनाः बाह्यक्षेत्रे कार्य (Service) कृत्वा स्वामाजीविकां स्वयं प्रचालयितुमीहन्ते बहवः प्रचालयन्ति च। किन्तु नैतत्सुष्ठु।

गृहिण्यः यदा बाह्यक्षेत्रे कार्याणि विदधति तदा गार्हस्थजीवनरसो विरसस्सम्पद्यत एव। गृहिण्यः बहिः सेवां (Service) विदधत्यः गृहकार्येषूपेक्षावत्यो दरीदृश्यन्ते ताः स्वशिशुष्वनुत्तमान्संस्कारान्प्रक्षिप्तुमशक्तास्सञ्जायन्ते। बहिः सेवार्थं (For Service) गमनावसरे ताः निजान्बालकान्भृत्येषु निक्षिप्य गच्छन्ति। फलतश्शिशवः भृत्यनिक्षिप्त-निकृष्टसंस्कारदूषितान्त करणाः सन्त स्वीये नागरिकजीवने दुश्चरित्राः परपीडकाश्च जायन्ते। एवञ्च ईदृशाः शिशवः कथङ्कारं देशोद्धारं कर्तुं शक्नुयुः, किन्तु यदि नः भारतीयाङ्गनाः गृहकार्यमेव सर्वस्वं मत्वा बहिः सेवार्थ न प्रयतिष्यन्ते तदा गृहव्यवस्थां सम्यक्तया कर्तुं तादृशकाः भविष्यन्ति बालकांश्च सुसंस्कारसुशिक्षणप्रदानेन सुनागरिकान् निर्मास्यन्ति।

अनेन रूपेण ताः स्त्रियः देशसेवकान् प्रसूय देशसेवां विधातुं शक्ताः भविष्यन्ति, लोकाश्च ताः बहु मन्स्यन्ते।

अद्यापि यदि नः भारतीयाङ्गना विषयेऽस्मिन्ध्यानं दद्युः बुध्यासुश्च स्वचित्ते यथार्थं यद् भारतीयाङ्गनानां वास्तविक कर्मक्षेत्र गृहमस्तीति, प्रयतेरश्च तद्वर्द्धने, तदा पुनः द्रुतमेव सोऽस्माकं प्राचीनः स्वर्णकालः आगमिष्यति। देशश्चायं भारतः प्राचीनकालवत्पुनः "जगद्गुरु" स्थाने विश्वस्मिन्नधिष्ठितो भविष्यति। तथासति—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्र शिक्षेरन् पृथिव्यां सर्वमानवाः।

इत्यस्मद्वचनम्पुनः मूर्तिमद्भविष्यतीत्यत्र न मनागपि सन्देहलेशः।

# यतिपार्थिवौ

( श्रीशिवप्रसादशास्त्री जयपुर )

मृगयां चरन् भूपतिरेकोरण्ये दूरतो नानापादपालंकृतं यतेराश्रमं ददर्श। पिपासाक्रान्तोऽसौ नरपतिराश्रमे गत्वा मुनिमेकं दृष्ट्वा प्रणनाम। दयालुस्वभावो मुनिस्तं जगाद – को भवान्? किमर्थमत्र निर्जने वने भ्रमन् स्वशरीरं पीड़यसि। किमर्थञ्च स्वजीवनं क्षपयसि वृथैव। नास्ति चेत् किमपि गोपनीयं तर्हि श्रावय कारणम्।

मुनेर्दर्शनेनैव प्रभावितो नृपतिराह। भगवन्! मृगयाप्रसंगेन समायातोऽहमत्र वने तृषया च पीडितो भवदाश्रमे समायातः। भवतां दर्शनेन च मे कामक्रोधादिदुर्गुणान् विहातुं मतिरजायत। मुनिराह—मृगयाकर्मवर्णनेन ज्ञायते यत् भवान् जात्या क्षत्रियोऽस्ति। शारीरिकसघटनेन तेजसा चानुमीयते यत्कोपि नृपतिर्भवान्। भवता मृगयां कुर्वता महानपराधो विधीयते। जगज्जनकेन परमेश्वरेण विरचिते ससारे सर्व एव प्राणिनो मिथो भ्रातरः सन्ति। तेषु को हन्तव्यः कश्च रक्षणीयः। सर्व एव जन्तवो रक्षितव्याः। एते मूकाः पशवस्तु नितरां दयाधिकारिणः सन्ति। अद्यप्रभृति कदापि जीवहिंसा न कर्तव्येति ममोपदेशः। इति श्रुत्वा नृपेण प्रतिज्ञायोक्तम् भवदाज्ञानुसारं न कदाप्यहं कमपि प्राणिनं हन्यां परं मया श्रुतमस्ति यत् भारताख्योऽयं देशः पुरा सर्वेषां चूडामणिरासीत् सुवर्णचटकेत्युपाधिविभूषितश्चाभवत। यस्य विषये भगवता मनुना महर्षिणा 'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवा.' इति घोषितं तस्य हीनां दशां संप्रति निशाम्य वेपते चेतः। किमत्र कारणं विद्यते इति मे महती शंका वरीवर्ति चेतसि। इति प्रश्नं श्रुत्वा मुनिरब्रवीत्—राजन् साधु पृष्टम्। आकर्ण्यतांञ्चावधानं दत्त्वा स्वप्रश्नस्योत्तरम्।

देशस्य हीनदशायां स्वसंस्कृतिविसर्जनमेव नायकायते कारणम्। देशस्यास्य प्राचीनायां संस्कृतौ सस्कृतमेव प्रधानतमम्। यतो हि संस्कृतिस्थापकाः सर्वे वेदाः इतिहासपुराणानि च संस्कृतभाषायामेव निबद्धानि सन्ति। तेषां ज्ञान सस्कृतभाषाध्ययनमन्तरा सर्वथाऽसम्भवम्। यो हि देशः स्वसंस्कृतिं विस्मरति स्वपूर्वपुरुषाणां जीवनविषये न जानाति किंचित् स एव पतनस्य चरमसीमानमधिगच्छति। पुरात्र देशे भारते संस्कृतमेव मातृभाषासीदतस्तस्या ज्ञाने किमपि काठिन्यं न प्रतीयते स्म। परमधुना नास्ति सा मातृभाषा कथं तस्याः प्रचारः स्यात् कथञ्चास्माकं सस्कृतिरक्षणाय प्राचीनेतिहासपुराणान्यधीत्य कृतकृत्याः स्युः साम्प्रतिकाश्छात्राः प्रश्नोऽयं वर्तते विदुषां पुरस्तात्। संस्कृतपाठविधि. कथं सुप्रचारः सरलश्च स्यादित्यपि प्रश्नो विद्यते। चेत् संस्कृतस्य मातृभाषाविषये सन्देहस्तर्हि प्रमाणमुपस्थाप्येत भवदग्रतः। हिन्दीभाषासाहित्ये प्रचलिता अपभ्रंशशब्दाः तदध्ययने देवनागरीलिपिश्च प्रमाणत्त्वेन स्वीक्रियते। अपभ्रंशशब्दाश्च यथा—उपानत् शब्दस्य पनही, पादरक्षिका (पगरखी) अंगरक्षिका (अँगरखी) इत्यादयः सहस्रशो मिलेयुः।

वर्तमानकाले तु संस्कृतभाषाया अति काठिन्यं प्रतीयते छात्रैस्तत्काठिन्यं दूरीकर्तुं कोस्त्युपाय इति विचारणीयोऽयं प्रश्नः। संस्कृतपाठशालासु प्रचलिताध्ययनाध्यापनविधिर्नहि छात्रान् सम्यकृतया योग्यत-

## भूयः समायास्यति

( श्रीश्यामदेवः शास्त्री, अमृतसर. )

उच्छ्वासान्निरुणद्धि सान्द्रनयने ! मा मुञ्च बाष्पं मुधा,
बाले ! वीक्ष्य पयोधरं समुदितं तारापथे वा विधुम् ।
स्मृत्वा ते हृदयं च मञ्जुवदनं यातो विदेशं रुषा,
प्राणेशो विरहातुरः सपदि ते भूयः समा समायास्यति ॥

अहायाधरखण्डनं जहि बलात्तुङ्गस्तनोत्पीडनं,
सौधान्मन्दपदक्रमेण वलभीं क्रान्त्वान्यवीथीं व्रज ।
सर्वे सांशयिका अमन्त्यकरुणा पापाः, कदाचिन्नदीं,
व्याजेन प्रहिता मयापि जननी भूयः समायास्यति ॥

राका, गन्धवहेन मन्दगतिना सम्वीज्यमाना नगाः,
आलिङ्गन्ति लता इवाद्य विजने यातो गृहं मालिकः ।
विस्रब्धं परिरम्भणं कुरु मृषा मानं च मुग्धे ! त्यज,
नायं मोदमयः कदापि समयो भूयः समायास्यति ॥

को ब्रूते पिबतस्तवाधरसुधां पूर्णेन्दुकान्तानने !,
कन्दर्पव्यथयाकुलस्य सततं याता नवा याति मे ।
संयोगे तव सा नवातपकुहूः राकासमा यास्यति,
वामे ! सा न परं द्विरागमनिशा भयः समायास्यति ॥

---

मान् विधातुं शक्त इति निर्विवादम् । यतो हि केवलं फक्किकानां रटनेनैव विद्यार्थिनः समयं यापयन्ति । विश्वविद्यालयानां परीक्षोत्तीर्णतायै पठ्यमानग्रन्थावलिभिर्न हि सर्वविध-ज्ञानार्हो भवति छात्रः । तत्तद्विषयपरीक्षामुत्तीर्य नहि विषयान्तरेषु प्रवेशोपि भवतीति महान् प्रत्यवायः । व्याकरणविषयमवलम्ब्य परीक्षोत्तीर्णश्छात्रो नहि वेदमन्त्रान् यथावदुच्चारयितुं शक्तो न च नक्षत्राणां नामापि ग्रहीतुं समर्थः—किं पुनर्व्युत्पत्तिलाभः । चेत्कोपि स्वकीयचेष्टावैशिष्ट्येन विषयान्तरं ज्ञातुं शक्नुयात्तर्हि नहि साम्प्रतिकशिक्षापद्धतिवशाज्जानीतेऽपि तु परीक्षाविषयं गौणतया स्वीकृत्य स्वमतिविभ्रमात् पाटवं लभते ।

अस्माकं स्मृतिग्रन्थेषु किं लिपिकृतं के च स्मृतिग्रन्था इत्यपि न जानन्ति—साम्प्रतिकशिक्षापद्धतिग्रस्ता दयनीयाश्छात्राः । न चात्राध्यापकानां दोषः परं शिक्षापद्धतेः । प्राचीना शिक्षापद्धतिर्नितरां श्रेष्ठा आसीत् । यया सर्वे जनाः सर्वविषयनिष्णाता अभवन् । आंग्लविद्यालयेषु च संस्कृतं वैकल्पिकत्वेन निर्दिश्यतेऽतस्तत्र न किंचिन्मानं विद्यते-सुरभारत्याः । तत्र संस्कृताध्येतारश्च समयाभावात्, प्राधान्याभावाच्च भाषायां न योग्या भवितुं शक्नुवन्ति । शब्दानां मूलतः प्रकृतिप्रत्ययविभागमज्ञात्वा केवलमर्थवेत्तारो भवन्ति । न चेयता ज्ञानेन भाषाधिपत्यं लब्धुं शक्यते । पक्वशब्दे प्रकृतिप्रत्ययनिर्देशः करणीय इति प्रश्ने वैकल्पिकत्वेन संस्कृतपाठकाश्छात्रा मूका एव स्थातुं प्रभवन्तीति निश्चितम् । अतस्तावदुभयत्रापि प्रचलितोऽध्ययनाध्यापनविधिर्नितरामसन्तोषकर एव सर्वथा । भूपते ! यावत्पर्यन्तं शिक्षापद्धतिर्न परिवर्तिष्यते तावद्देशस्य वास्तविकोन्नतिर्न भविष्यतीति मे मतम् । इति श्रुत्वा स महीपतिः प्रणम्य मुनिं स्वनगरीमगच्छत् ।

# समस्या-पूर्तयः

[ प्रणेता—दीनानाथत्रिवेदी 'मधुप.' महाराज-संस्कृत-कालेज., जयपुरम्

## संस्कृतम्

हिन्दीं वाऽऽङ्गलगवीं पठन्तु सुधियः काम पणाकाङ्क्षया
स्वर्गे वा नरके नृणान्तु गमनं लोकादितो निश्चितम् ।
देवैस्तत्र गता जनाः सुरगिरा पृष्टा यदा, ते तदा—
दास्यन्त्युत्तरमत्र किं, न पठितं स्वप्नेऽपि यैः संस्कृतम् ॥

## जीवनं भार-भूतम्

प्रत्यब्दं मे जनयति गृहिणी पुत्रमेकं सदाऽतो,
जाता अद्यावधि दश सुताः सन्ति गेहेऽधुना हा ।
कर्तुं नैषामुदरभरणं नाथ! शक्नोमि दीनः,
क्षिप्रं प्राणान् हर मम यतो जीवनं भारभूतम् ॥

प्राज्यं राज्यं लयमुपगतं सर्वसौख्याऽऽकरं नः,
दासा दास्योऽपि कुविधिवशाद् दूरभूतास्तथाऽद्य ।
सन्तो लाका इव यव-कणा दुर्लभा हन्त ! जाताः,
भूपालानामपि भुवि ततो जीवनं भार-भूतम् ॥

रुद्धे भूतेऽद्दृत-सुत-गिरा साम्प्रतं सम्प्रचारे,
काले क्रूरे पाठतुमपि भो नाधुनाऽऽयान्ति बालाः ।
जातं फिक्सेशनमपि च नोऽस्माकमद्याऽपि तस्मात्,
हा केषाञ्चित् जगति विदुषां जीवनं भारभूतम् ॥

गेहे या मे चपलनयना शिक्षिता चास्ति कान्ता,
कार्यं सा नो किमपि कुरुते, दर्पणे दत्तदृष्टिः,
कालं सर्वं गमयति मुधा, नाऽपि मां सेवते ऽतो,
नूनं भ्रातर्मम समभवज्जीवनं भार-भूतम् ॥

## भाति सूर्यो नवीनः

याऽऽसीद्बाला ग्रहण-समये हर्म्य-पृष्ठाऽधिरूढा,
धृत्वा पाणौ सपदि मुकुरं कज्जलाङ्काङ्कितं च ।
पश्यन्ती सा नभसि सहसा कौतुकाढ्या तदाऽद्य
सद्योऽवोचत् कथमयमहो भाति सूर्यो नवीनः ॥

ध्वान्तं गाढं वचन-किरणैरान्तरं ध्वंसयन् यः,
छात्र स्वान्तोत्पल-कुलमहो फुल्लयन् यश्च नित्यम् ।
उद्यन् घस्रे निशि च सततं शेखरश्चन्द्रपूर्वः*
सोऽयं श्रीमान् सुखमुपगतो भाति सूर्यो नवीनः ॥

यः पूर्वस्यामुदयमयते पश्चिमायां तथाऽस्तं,
रक्तः प्रातर्दिन-परिणतौ चापि रक्तः सदा यः ।
मध्याह्ने यः प्रखरकिरणैस्तापयत्येव लोकं,
तथ्या वो वागियमिह कथं 'भाति सूर्यो नवीनः'॥

बालाः केचिद्विमलसलिले वातनुन्ने तडागे,
मध्ये चाह्नो लघु दिनमणेर्बिम्बमालोक्य लोलम् ।
मन्दाक्रान्ताः कुतुक-कलया प्रोक्तवन्तस्तदेतत्—
भूमेर्भागेऽप्ययमिह कुतो भाति सूर्यो नवीनः ॥

## भारतं भारतं नः

प्रायो लोकाः कर-भर-रुजा पीडिता हन्त । यत्र,
राजानः सांप्रतमिह तथा सन्ति नो राजमानाः ।
जातश्चाऽय धनिक-निवहः क्षीणव्यापारसत्त्वः,
तस्मादेतत् किमु भणसि भो भारतं भारतं नः ॥

अस्मिन् काले नहि सुरगिरां पूर्ववत् सम्प्रचारः,
चिन्ताक्रान्ता जगति च जनाः सन्ति दीना अनाथाः ।
पाकिस्तानं बत ! समभवत् खण्डमत्राद्य यस्य,
तस्मादेतत् किमु भणसि भो भारतं भारतं नः ॥

*जयपुरीय-महाराज-संस्कृत कालेजाऽध्यक्ष-महोदयः ।

बालभारती

# वीरपरीक्षा

( ले० विद्याभूषण' प० श्रीगणेशरामशर्मा, साहित्यरत्नम्, झालावाड)

एकदा द्वौ नवयुवको वीरौ कस्यचित् नृपस्य राजसभां अगच्छताम् । यदा तौ नृपं प्रणम्य यथास्थान उपविष्टौ तदा किंचित् विचार्य नृपः अपृच्छत्—"अयि, भोः । युवानौ !! किमर्थं युवां अत्र आगच्छताम्? मम सकाशात् किं वा वाञ्छथः ??" इति । नृपस्य प्रश्न श्रुत्वा वीरौ अवदताम्—"सम्माननीय नरेश । आवां वीरौ स्वः । रणक्षेत्रे शत्रुभिः सह युद्धमेव आवयोः कार्यं, स्वस्य प्रभोः शुभचिन्तनं आवयोः धर्मः, रणकौशलप्रदर्शनं च आवयोः गुणः । श्रीमान् नरेशः शूरो वीरो गुणग्राहकश्च इति भवतो यशः कीर्तिं च लोकेभ्यः भूयोभूयः श्रुत्वा आवां भवतः दर्शनं आश्रयं जीविकां च लब्धुं सेवायां समुपस्थितौ स्वः । राजन् । प्रसन्नो भव, कृपां कुरु । यदि श्रीमतः राज्ये आवयो योग्यं किमपि कार्यं सेवा वा भवेत् तदा आज्ञापयतु भवान् ! आवां मनसा वचसा कर्मणा प्राणपणेन सर्वात्मनापि च स्वाश्रयप्रदातुः श्रीमतः सेवां करिष्यावः !"

अथ राजा तयोः तद्वचन श्रुत्वा स्वमनसि किंचित् गूढं अहसत् । स्वविषये कथितानि तयोः द्वयोः वीरयोः वचनानि नृपः न सत्यानि अमन्यत, प्रत्युत सः ससन्देहं मिथ्यात्मश्लाघां मेने । तयोःव चनेषु शूरवीरतायां च शङ्कमानः स नृपः अवदत्—'अयि युवकौ । यदि युवां सत्यमेव शूरौ वीरौ वा स्थः तदा अत्र इदानीमेव किमपि चमत्कारयुक्तं वीरताकार्यं शूरोचितं कमपि गुणं वा प्रदर्शयतम् । तदाहं भवतोः वीरतायाः गुणानां च परीक्षां कृत्वा युवाभ्यां किमपि पारितोषिकं दास्ये, स्वसेनायां युवां सैनिकस्थाने नियोक्ष्ये ।"

नृपस्य तद् वचनं श्रुत्वा तौ द्वौ अपि वीरौ तत्र राजसभायां नृपस्य सम्मुखमेव हि स्वस्य खड्गौ कोशाभ्यां बहिः निस्सार्य सपराक्रमं परस्परं योद्धुं आरभताम् । एवं रणकौशलं प्रदर्शयन्तौ मुहुर्मुहुः मिथो युद्ध्यन्तौ क्षणादेव अन्योन्यं शिरसी छित्वा अम्रियेताम् । तयोः कबन्धौ भूमौ अपतताम् ।

नृपः तयोः धीरतां, वीरतां, शक्तिं, बलं, सामर्थ्यं, युद्धचातुर्यं च दृष्ट्वा अतीव प्रासीदत् परंतु तयोः द्वयोः अपि वीरयोः तत्रैव इत्थं मरणात् अति दुःखं अन्वभवत् । स खलु पश्चात्तापं कुर्वन् अवदत्—

"इमौ तु सत्यमेव वीरौ अभवताम् ! मया सर्वसाधारणमिव तौ परीक्षितुं समादिष्टं परं तौ तु एतौ परस्परं खड्गाभ्यां शिरसी छित्त्वा मम पुरतः एव मृतौ ! एतादृशाः अनयोः वारयोः परीक्षां कुर्वाणो नाहमजानां यदिमौ मम समक्षमेव मारिष्यतः । हा धिक् ! मया सत्येऽपि च तयोः वीरत्वे सन्देहं कृत्वा परीक्षितौ तौ च स्वर्गं गतौ । यदि चाहं तौ परीक्षां विनैव सेनायां सैनिकौ न्ययोक्ष्यम् तदा इमौ जातायां सत्यां आवश्यकतायां मम हिताय कियन्तं पराक्रमं अकरिष्यताम् ! हा ! हन्त !! इमौ परीक्षमाणेन मया साधु न कृतम् । एवंविधयोः वीरशिरोमण्योः प्राणत्यागात् मम वीरहत्यादोषो जातः हानिश्च महती अभवत्, यतः तादृशौ वीरौ अधुना अतीव दुर्लभौ ।" इत्यादि वदन् स नृपः भृशं दुःखं अन्वभूत् ।

अनया लघुकथया वयं शिक्षां लभामहे यत् पूर्णतः सत्यवस्तुनः सत्यस्य मनुष्यस्य च विनोदभावेन कौतुकवशात् वा परीक्षणं नोचितम् ।

## सम्पादकीयम्—

**अखिलभारतीय-संस्कृतसाहित्यसम्मेलनस्य त्रयोविंशाधिवेशनम्**—यदा भारतवर्षे संस्कृतस्य भूयस्तरां जागरूका चेतनाऽऽसीत्, यदा पण्डितानां, संस्कृतग्रन्थानां संस्कृतेश्च समादरः समीचीनः समभूत्, तदैव संस्कृतविदुषां सफलसमागमस्य सूत्रपातं कुर्वाणस्यास्य सम्मेलनस्यारम्भो हरिद्वारनगरेऽभवत्। एतदनन्तरं यद्यपि भारते बहव्यः तादृश्यः संस्थाः संस्थापिता याः सम्मेलनस्य सहकृत्याः सन्ति, यथा ओरियन्टल-कान्फरेंस, विश्वसंस्कृतपरिषद् इत्यादयः, किन्तु भारते सर्वतः प्रथममेतदेवाऽऽसीत् संस्कृतसम्मेलनमिति निर्विवादम्। कदाचन शिथिलया, कदाचन तीव्रया कदाचन च धीरगम्भीरया गत्या प्रचलतोऽस्य सम्मेलनस्य त्रयोविंशमधिवेशनं महता समारोहेण मुंबईनगरे भविष्यतीति भूयसः कालाद्श्रुतम्। भगवत्कृपयाऽधुना तस्य पूर्वसूचना, अपेक्षापत्रकं, विज्ञप्तिः, सम्मेलने समागन्तुकानामावेदनपत्रकादिकं चास्माकं कार्यालयेऽधिगतम्।

१९५६ वर्षस्य मेमासे प्रथमे द्वितीये वा सप्ताहे समेलनमिदं मोहमय्यामधिवेक्ष्यति। स्वागतसमितेः कार्याध्यक्षः प्रा० माधवाचार्य, कार्यवाहौ च पं०गणेश-शास्त्रिजोशी-श्री० ल० म० चक्रदेवमहाशयौ स्तः। अधिवेशनसम्बन्धे विशेषजिज्ञासुभिः ३१८, चर्नी रोड मुंबई४ सङ्केतेन महाशया एते प्रष्टव्याः, स्वागतसमित्या मुद्रिता विज्ञप्तिरत्र ... या। समेलनाध्यक्षस्य विषये न ज्ञातमद्यावधिः।

**संमेलनेऽस्मिन् कर्त्तव्यत्वेन**—संस्कृतसंकटकारणानामालोचनम्, लिपिसमस्यासमाधानम्, संस्कृतग्रन्थानां प्रदर्शनी, द्वौ नाटकप्रयोगौ (श्रीदाजी भाटवडेकरमण्डलद्वारा, यद् देहल्यामर्जितयशस्कम्), शास्त्रार्थाः शलाकापरीक्षा चेति निर्धारिताः सन्ति।

अध्यापकानां समागमनाय, ग्रीष्मावकाशादिसौविध्यमनुचिन्त्य समीचीनं समायोजितमिदं संस्कृतसाहित्यसम्मेलनं सर्वतः समुल्लेखनीयं साफल्यं समासादयेदिति सकलसंसारनायकं सादरं सम्प्रार्थयामहे।

**शोकविषयाः**—कतिपयेष्वेवैषु दिवसेषु भारतीयानां राष्ट्रियविभूतीनां देहावसानं समघटतेति महच्छोकास्पदम्। भारतस्य, भारतीयसंस्कृतेश्च पुनर्निर्माणसमयेऽस्मिन्नेतादृशानामुल्लेखनीयानां महापुरुषाणां सहसैव जगतोऽस्माद् यात्रा महतीं क्षतिं समुपस्थापयतीति नाविदितम्। एषु महापुरुषेषु विधानसभाध्यक्षाः श्रीगणेशवासुदेवमावलङ्करमहोदयाः, आचार्यनरेन्द्रदेवमहोदयाः, सर्वोच्चन्यायालयप्राड्विवाकाः श्रीमुकर्जीमहाशयाश्च समुल्लेख्याः। भारतीपरिवारो दिवंगतानामेषां पूतात्मनां शाश्वतशान्त्यै चराचरगुरुमभ्यर्थयते।

**जयपुरे श्रीमाधवस्य स्वागतम्**— राष्ट्रीयस्वयंसेवकसंघसंचालकस्य श्रीमाधवरावगोलवलकरमहाभागस्य एकपञ्चाशत्तमे जन्मदिवसे भारतव्यापिमहोत्सवः समायोजितः सघेनानेन। एतदुपलक्ष्ये श्रीगुरवे 'श्रद्धानिधि' समर्पणम्, अभिनन्दनमित्यादयः समारोहाः समायोजिताः। जयपुरेऽपि १५ मार्चदिवसे सायं श्रीगुरवे उपचतुरशीतिसहस्रमुद्राणां श्रद्धानिधिः समर्पित। रामलीलामैदानस्थले समायोजितेऽस्मिन् विशालसमारोहे ७५संस्थाभिः महाशयायास्मै पुष्पहाराः समर्पिताः।

श्रीगोलवलकरमहाशयेन स्वभाषणे कथितं यद् देशेऽस्मिन् निवसतामहिन्दूनां पूर्वजाः पुरा हिन्दव

एवाऽसन्, लोहबलेन तेऽहिन्दवः संजाता। आश्चर्यमस्ति यत खड्गबलेन साधिता सेयं विचाराणां दासता भारतेऽद्यापि जागर्ति। एतेऽहिन्दव मोहम्मदस्य ईशोर्वा विचारैः प्रभाविता भूत्वा धर्मं परिवर्त्तयामासुरिति नाऽस्ति सत्यम्. किन्तु लोकशक्त्या एतेषां विचाराः परिवर्तिता। एप कातरताया भीरुताया दासतायाश्च बर्बर इतिहासः एतस्या दासताया निर्वासनमस्माकं कर्त्तव्यमित्यादि महाभागेनानेन, भारतं संस्कृत्या एकम् एवास्ति, काश्मीरेभ्यः कुमारीपर्यन्तम् एक एव आत्मा व्याप्त इत्यादि मार्मिकमुदीरितम्।

**राजस्थाने संस्कृतोद्धारप्रयत्नः**—हर्षस्य विषयोऽस्ति यद् राजस्थाने संस्कृतशिक्षायाः सुधारस्य प्रसारस्य च कृते राजस्थानसर्वकाराय मन्त्रणां दातुं संस्कृतविशेषज्ञानामेका समितिः राजस्थानराजप्रमुखेन मनोनीता, या विचारविमर्शानन्तरं सर्वकाराय स्वकीयं प्रतिवेदनं (Report) प्रदास्यति। समितावस्यां निम्नोद्धृताः सदस्याः सन्ति—

श्रीलक्ष्मीलालजोशीमहोदयः,

भट्टश्रीमथुरानाथशास्त्री,

श्री के० माधवकृष्णशर्मा,
(संस्कृतपाठशालानिरीक्षकः)

श्री चन्द्रशेखरशास्त्री द्विवेदी,
(जयपुरसंस्कृतकालेजाध्यक्षः)

श्रीयुगलकिशोरशर्मा M. A. (रजिस्ट्रार डि० परीक्षायै)

संयोजकः-श्रीरामचन्द्रवामनकुंभारे महोदयः।

**संस्कृतविकाससमितेः राजस्थानप्रान्ते परिभ्रमणम्**—संस्कृतोद्धाराय सर्वकारेण नियमितायाः 'संस्कृतविकास'समितेः कार्यकलापः सततं प्रचलतीति समये समये विदितं भवति। एषु दिनेषु समितेरस्या राजस्थानप्रदेशस्य तेषु नगरेषु परिभ्रमणं प्रक्रान्तं येषु हि संस्कृतस्य विद्यालयाः, अन्या वा संस्था संस्कृतप्रचाराय प्रयत्नं कुर्वन्ति। पूर्वं हि कोटापरिसरे समितेः समुपगमोऽभूत्, यत्र हि संस्कृतसंस्थानां परिस्थितिदर्शनम्, संस्कृतप्रचारकाणां सम्मतिग्रहणादिकं च समपद्यत। एषु दिवसेषु सेयं समितिः उदयपुरप्रान्ते स्वीयं कार्यं निरवर्तयदिति विदितमभूत्। पूर्वं हि 'ब्यावर'नगरे संस्कृतज्ञानां सभामायोज्य संस्कृतविकाससम्बन्धे तेषामभिमतं समग्रहीत्। एतदनन्तरं कॉंकरोलीनगरे संस्कृतज्ञानामभिप्रायान् समगृह्णात्। ततः उदयपुरनगरे संस्कृतमहाविद्यालयं निरैक्षत। एतस्य महाविद्यालयस्य प्रमुखाः श्रीखड्गनाथमिश्र-श्रीचम्पालालशास्त्रि-श्रीलक्ष्मीनारायणपुरोहितमहाभागप्रभृतयो महतोत्साहेन समितेः कार्याणि समपादयन्। आगमनावसरे कालेजस्यास्य वार्षिकोत्सवोऽपि नियतोऽभूद् यस्मिन् संस्कृतसेवकानां समागमादतिरिक्तं संस्कृतनाटकस्याऽभिनयोऽपि तत्राक्रियत। उदयपुरे संस्कृतसेवकानामुत्साहः समभिनन्दनीयोऽभूत्। एतैर्हि समितिप्रचारतायाः प्रश्नावलया उत्तरेषु सम्मतियोग्या बहवो विषयाः सूचिताः।

एतदनन्तरं श्रीनाथद्वारे समितेरस्याः समुपगमोऽभवत्। नाथद्वारमिदं भारतवर्षे धार्मिकसंस्थानत्वेन यथा प्रसिद्धं तथा संस्कृतविद्यानां प्रचारायाऽपि दत्तहस्तावलम्बनम्। अत्रत्यो 'विद्याविभागः' बहोः कालात्संस्कृतसेवामाचरति। विद्याविभागस्य प्रमुखः श्रीआनन्दिलालशास्त्रिमहाभागः, तथा संस्कृतकालेजस्याध्यक्षः श्रीगुलाबचन्द्रचतुर्वेदिमहोदयश्च महतोत्साहेन समितेरस्याः कार्याणि समपादयताम्। एतस्य धर्मसंस्थानस्य प्रमुखपीठाध्यक्षाः श्रीगोविन्दलालगोस्वामिमहोदयाः समितेरस्याः कार्येषु साधीयसीं सुविधां समघटयन्।

ततः अजयमेरुनगरे समित्या संस्कृतसेवकानामभिप्रायाः समगृह्यन्त। अत्र हि एतत्प्रान्तीयशिक्षाविभागाध्यक्षश्रीसियालमहोदयेन, तथा श्रीरामेश्वर ओझामहोदयाद्यन्यान्यैः प्रमुखसज्जनैश्च समितिकार्यकलापे भूयस्तरां साहाय्यमापादितमिति सोयं समितेः संवादः प्रामाणिकद्वारेणावगतः।

भारतीयलोकसभायाः प्रवक्तुः संस्कृतभाषायाः प्रकामं स्नेहिनः श्रीमदनन्तशयनम् अय्यङ्गारमहोदयस्य

# "भारत्यै" शुभाशंसा

[ सुरगिरः परमस्नेहिनां, संस्कृतविदुषां श्रीअय्यङ्गारमहोदयानामयं सन्देशो न केवलं 'भारती' परिवारायैव, अपि तु सर्वेषां संस्कृत-संस्कृति-सेविनां प्रबलं प्रोत्साहक इति समनूद्य प्रकाश्यते । ]

—सहसम्पादकः

श्री एम्. अनन्तशयनम् अय्यङ्गारः
उपप्रवक्ता, लोकसभा, ६ अशोकमार्गः, नवदेहली

१२ दिसंबर, १६५५

'भारती'— संस्कृतमासिकपत्रं, यस्य प्रकाशनं पञ्चवर्षेभ्यः पूर्वं समारब्धं, भारतवर्षे संस्कृतगिरः संस्कृतेश्च पुनर्जागर्त्तेः कृते महतीमावश्यकीं च सेवां कुर्वाणं वर्तते ।



यदि भारतवर्षम् अद्यत्वे विश्वस्मिन् विश्रुतम् यदि अद्येदं जगति समादरदृष्ट्या कीर्त्यते, तस्य कारणमेतन्नास्ति यद्भारतस्य समीपे अणुबम्बं, उदजनबम्बं वा वर्त्तन्ते, अथवा इदं खलु विश्वस्यापराणि राष्ट्राणि वित्तीयसहायतयाऽनुग्रहीतुं शक्नुते । भारतवर्षस्य महत्त्वं विश्वस्मिन् केवलमस्य प्राचीनायाः संस्कृतसभ्यतायाः कारणादेव ।

भारतवर्षस्य प्राचीना सभ्यता सेवायाः, बलिदानस्य चाधारेण निर्मिताऽभूत् । अद्यापि सामाजिकमूल्यानां महत्त्वस्य परिमाणदण्डः पुनः परिवर्त्तनं वाञ्छति । पूर्वं भारतीय-संस्कृतौ सर्वप्रथमं महत्वस्थानं त एव जना आसन् ये बलिदानं त्यागं वा कृतवन्तः । द्वितीयं स्थानं तेभ्यो दीयते स्म, ये खलु राष्ट्रस्य सुरक्षायै सर्वदैव स्वार्थानां त्यागपुरस्सरं प्राणपणेन सन्नद्धा अभूवन् । केवलं तृतीयं स्थानं तेषां कृते दीयते स्म, ये धनिनः, उत्पादकाः, व्यवसायिनो वाऽऽसन् ।

अन्याः संस्कृतयः विभिन्नेष्वादर्शेषु आधारिताः सन्ति । अद्य पुनरपि "सेवा" एव जगति सामाजिकमहत्त्वस्य मानवीयमूल्याङ्कनस्य च परिमाणदण्डः सम्पद्येत इत्येतदावश्यकमस्ति ।

अन्यैः राष्ट्रैः वैज्ञानिकप्रगतिद्वारा प्रकृतेः बाह्यस्वरूपं विजितं, किन्तु भारतेन सर्वदैवान्तरिकस्यात्मनो विजयाय प्रयत्ना विहिताः । स्पर्द्धा हि पशुताया नियमरूपा । युगेऽस्मिन् तस्याः स्थानं मानवसमाजे पारस्परिकसहकारिता गृह्णीयात् अनेकतायाश्च स्थानमेकता गृह्णीयात् इत्यावश्यकम् ।

'भारती' सदृशान्यन्यान्यपि पत्राणि प्राचीनसभ्यताया आदर्शानां पुनरुज्जीवनायावश्यकानि । इदं पत्रम्, अन्यान्यपि चैवंविधानि पत्राणि, भारतीयायाः संस्कृतेः, संस्कृतभाषायाश्च प्रसाराय समीचीनानि प्रयतनानि विधास्यन्ति ।

अहमेतस्याः पत्रिकायाः उज्ज्वलं भविष्यत् कामये ।

**एम्० अनन्तशयनम् अय्यङ्गारः**

---

प्राप्ति-स्वीकारः—पुस्तकानीमानि समालोचनार्थं 'भारती' कार्यालये प्राप्तानि, येषां समालोचनाऽऽगामिष्वङ्केषु प्रकाशयिष्यते –

१—"हरनामामृत" काव्यम् पं०श्रीविद्याधरशास्त्रिविरचितम् (बीकानेरतः)

२—"पत्रदूतम्" काव्यम् पं०श्रीरुद्रदेवत्रिपाठिरचितम् (बबई)

३—"वेद का राष्ट्रीय गीत", (कांगड़ी)

४—"भाषा", संस्कृतवारपत्रिका, (गुंटूरतः)

# ★ शठे शाठ्यं समाचरेत् ★

[ श्री वि भा मुसलगाँवकरः, गुना (मध्यप्रदेश) ]

इह जगति सर्वत्र दुर्जनाः अधिकाः सज्जनाः अल्पाः च। दुर्जनैः सह कथं व्यवहर्तव्यम् ? शठ प्रति सत्यं" इति महात्मनां नीतिः। सत्पुरुषाः दुर्जनैः सह अपि सत्येन आचरन्ति। एकदा सौदासो नाम राक्षसः भगवन्तं बुद्धं हन्तुं गतः। भगवान् बुद्धः तस्य पुरतः निर्भीकतया अतिष्ठत्। महात्मा गांधीमहोदयः तथैवाकरोत्। एकदा एको दुर्जन समूहः गांधीमहोदयान् प्रहर्तुं गतः। किन्तु गांधि-महात्मनः प्रसन्नं हास्य शान्तवृत्ति च दृष्ट्वा दुर्जनानां कोपः विनष्टः। ते गांधि-महात्मनः शिष्याः भूत्वा परावर्तन्त।

किन्तु सर्वे जनाः महात्मानः न सन्ति। सर्वे जनाः एवं वर्तितुं न शक्नुवन्ति च, ते एवं मा आचरेयुः। एतेन आचारेण साधारणजना स्वाभिमानशून्याः कापुरुषाः भविष्यन्ति। अतः "शठं प्रति शाठ्यम्" इति तेभ्यः नियमः भवति। "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति भगवान् कृष्णः अर्जुनं कथयति।

यदि शठं प्रति सत्यं वयम् आचरामः तर्हि दुर्जनाः अस्मान् दुर्बलान् मन्यन्ते। "देवो दुर्बलघातकः" इति सर्वैः ज्ञातम्। अतः ते अस्मान् अधिकं वञ्चयन्ति। अतः शठे शाठ्यम् समाचरेत्।

यदिः दुर्जनः अत्याचारं करोति तर्हि तस्य प्रतीकारः कर्तव्यः। अन्याय-अत्याचारसहनं महापापम्। अतः दुर्जनस्य प्रतीकारं कृत्वा साधूनां परित्राणं कर्तव्यं भवति। दुष्टानां विनाशाय यदि असत्याचारो भवति सहि न असह्यः।

भ० लो० तिलकः राजनीत्याम् अपि 'शठं प्रति शाठ्यम्' एव तत्त्व स्वीचकार।

इस जगत् में सब जगह दुर्जन अधिक और सज्जन कम है। दुर्जनों के साथ कैसा व्यवहार करना चाहिये ? दुर्जन के साथ भी सत्य व्यवहार करना चाहिये यह महात्माओं की नीति है। सज्जन लोग दुर्जनो के साथ भी अच्छा व्यवहार ही करते है। एकबार सौदास नामका एक राक्षस भगवान् बुद्ध को मारने गया। भगवान् बुद्ध उसके सामने निर्भीकता से बैठे रहे। महात्मा गांधी ने भी ऐसा ही किया। एक बार दुर्जनो का एक झुण्ड महात्मा गांधी को मारने गया। किन्तु महात्मा गांधी की प्रसन्न मुद्रा और शान्त वृत्ति को देखकर दुर्जनो का क्रोध नष्ट हो गया। वे गांधीजी के शिष्य बन कर लौटे।

किन्तु सब लोग महात्मा नही होते। सब लोग ऐसा बर्ताव नही कर सकते और न उन्हे ऐसा करना ही चाहिये। क्योंकि इससे जनसाधारण स्वाभिमान-शून्य और कायर हो जायेंगे। इसलिये "दुर्जन के लिए दुर्जनता" यह नियम है। "जो मुझे जिस भाव से देखता है उसे मैं उसी तरह लेता हूं।" यह भगवान् कृष्ण ने अर्जुन से कहा।

यदि दुर्जन के प्रति हम सत्य आचरण करे तो दुर्जन हमे दुर्बल मानेंगे। देवता दुर्बलों के घातक होते हैं। यह सब लोग कहा करते हैं। इसलिये वह हमें अधिक ठगते हैं। इसलिये दुर्जनों से दुर्जनता का ही बर्त्ताव करना चाहिये।

यदि दुर्जन अत्याचार करते हैं तो उसका प्रतीकार करना चाहिये। अन्याय और अत्याचार सहन करना महा पाप है। इसलिये दुर्जन का प्रतीकार करके सज्जनों की रक्षा करनी होती है। दुष्टों के नाश के लिये यदि असत्याचरण किया जाता है वह असह्य नहीं लगता।

लोकमान्य तिलक ने राजनीति का तत्व भी "शठ प्रति शाठ्यम्" स्वीकार दिया है।

# भारती

अहिंसा-सत्य-सिद्धान्तं मानवेषु प्रचारयन् ।
सिद्धार्थो बुद्धभगवान् बुद्धिं बोधयताद् भुवि ॥









बुद्धं शरणं गच्छामि-
धर्मं शरणं गच्छामि-
संघं शरणं गच्छामि ।

राजस्थान-मद्रास-मध्यप्रदेश-सौराष्ट्र-भूपाल-उत्तरप्रदेश-बिहार-पञ्जनद-आन्ध्र-सर्वकारैः स्वीकृता—

# ❀ विषय-सूची ❀



## —❀ "भारती" पत्रस्य उद्देश्यानि नियमाश्च ❀—

१. संस्कृतभाषायाः प्रचारः, सरलेन संस्कृतेन सामयिकानां विचाराणाम्, उत्कृष्टायाः मानसिकविचारपरिपोषिकायाः सामग्र्याश्च समर्पणम्, अस्य पत्रस्योद्देश्यानि ।

२. 'भारती' पत्रस्य वार्षिक शुल्क ३) रूप्यकत्रयम् ।

३. मासिकमिदं प्रतिमासं पूर्णिमायां पूर्णिमाया तिथौ प्रकाशितं स्यात् ।

४. एकस्यांकस्य मूल्यम् ≈) आणकषट्कम् ।

## भारती-प्रतियोगिताः—

भारतीद्वारा आयोजितानां कथा काव्य नाटकप्रतियोगितानां कृते समागता कथा काव्यानि नाटकानि च निर्णायकमहाभागानां सविधे प्रेषितानि सन्ति । त्रयाणामपि निर्णायकानां मतैक्ये सति प्रतियोगिता-निर्णयो घोषयिष्यते ।

सम्पादकः—
कविशिरोमणि
भट्टश्रीमथुरानाथशास्त्री
सहसम्पादक.—
देवर्षिकलानाथशास्त्री B. A.
जयपुरम्

# भारती

भानुवद् भारतीयानां भास्वद्भवनभासिनी।
भागीरथीव भावाढ्या भारते भातु भारती॥

प्रबन्ध-सम्पादकः—
गिरिराजशर्माशास्त्री

वर्षः ६ | वैशाखशुक्ला १, सं० २०१३ | अङ्कः ७

## जानकीजाने !

[ श्रीरुद्रदेवत्रिपाठी साहित्याचार्यः, मोहमयी ]

जीवन मम भारभूत, जानकीजाने ! निभालय।
पादयो पतित मृत मा, नाथ ! शीघ्रं पालय।
वाहिता कति वासरा नो, त्वत्पदस्मरणं विना,
हन्त ! हन्त ! कृत मया कि, ससृताववि वेकिना।
दारपुत्रसुतास्नुपादौ रञ्जित निरत मनः,
सत्यमेव समापित, निजजीवन भजन विना।
कल्पतरुमपहाय हा हा ! निम्बवृक्षनिषेविणी,
स्वार्थसिक्ता दुर्विनीता, शेमुषी परिचालय॥ जीवन०
सर्वदा समुपेक्षिता. सुकथा. सतामथ सर्वथा,
सश्रिता ससारसागरसारिणी सतत प्रथा।
मोहमायामत्सरादिषु सम्प्लुतः सहसा विभो !
विक्लवीभूयाचरामि समुद्धृतेर्यतन वृथा।
समुचितः पन्था भवेद्यस्त प्रभो ! मां कान्दिशीक,
दर्शयाशु सुबोधदायिन् ! करुणया करुणाऽऽलय! ॥ जीवनं०
प्रत्यवायपरम्पराणा, पार एव न विद्यते,
उद्भवन्ति परा अनेका, यावदेका छिद्यते।
किञ्च यावच्छक्यमधुनावधि मया यतित बहु,
किन्तु लब्धा नैव शान्तिस्तेन चेतः खिद्यते।
सर्वतो भूत्वा हताशस्त्वत्पदं समुपागतः,

# औपनिषदः सिद्धान्तः

[ श्री नरहर दामोदर शास्त्री, ठाणे ]

अस्मिन् जगति सकलमानवसमाजाय नव चैतन्यं प्रदाय निरतिशयशान्तिसुखप्रदाने श्रेयोभागस्माकमौपनिषदः सिद्धान्त एव। उपनिषत् साक्षात् कामधेनुरेव। ब्रह्मसूत्रप्रणयनमासामुपनिषदामाधारेणैव समभूत्। श्रीमद्भगवद्गीतापि गोपालनन्दनकृतदोहनमुपनिषद्रूपकामधेनोः परमं मधुरं दुग्धामृतमेव। भारतवर्षे यावन्त आस्तिकसंप्रदाया विद्यन्ते तेषां निखिलानामप्याधारभूतानीमानि त्रीणि ग्रन्थरत्नानि यानि प्रस्थानत्रयीति नाम्ना प्रथन्ते। अद्वैतविशिष्टाद्वैतशुद्धाद्वैतद्वैताद्वैतशिवाद्वैतादीनामाधारभूता भगवती प्रस्थानत्रयी। अस्याः प्रस्थानत्रय्या आधारेणैव सर्वसम्प्रदायाचार्याः स्वस्वमतिबलानुसारं विवेचनात्मिका व्याख्या विधाय परमस्य सत्यस्यान्वेषणं कृतवन्तः। उपनिषदां प्रादुर्भावो वेदानामत्युच्चात् शीर्षस्थानीयाद्भागात्समभूत्। यः प्रायेण वेदान्तो ब्रह्मविद्याम्नायमस्तकमिति वा कथ्यते। वस्तुत उपनिषदेषा ब्रह्मविद्याया आदिमं स्रोतः। एतस्मान्निर्गत्य विविधवाङ्मयस्वरूपे विकसिता सती ज्ञानगङ्गा जीवानां पापतापान् शमयति। यासामुपनिषदां मन्त्राणां पाठमात्रेणापि हृदयमपूर्वं कमप्यानन्दमनुभवति तासामुपनिषदां महिम्नो वर्णन नाम सूर्याय दीपप्रदर्शनसमान वर्तते। आस्माकीन औपनिषद. सिद्धान्तो ब्रह्मविद्याया जिज्ञासुजनमात्मज्ञानसपादनायाऽऽदिशति नह्यशेषविद्यामहार्णवसपन्नशास्त्रज्ञतालाभाय। यतः केवलशास्त्रज्ञः संसृतिचक्ररूपशोकसमुद्रपारं गन्तुं न शक्नोति। तस्मात् स जिज्ञासुरनुभवशाली परमात्मवेत्ता भवत्वित्येतदावश्यकम्। एतदर्थमुपनिषत्स्वनेकाख्यायिकाभिः सृष्टिप्रपञ्चस्य निरासं कृत्वा जिज्ञासोर्बुद्धावभेदज्ञानस्थिरीकरणाय 'एकमेवाद्वितीयम्' 'इदं सर्वं यदयमात्मा' 'उदरमन्तरं कुरुते' 'अथ तस्य भयं भवति' इत्यादिनानाश्रुतिवचनैरभेददर्शिनः प्रशंसा भेददर्शिनो निर्भर्त्सना च प्रदर्शिता।

अद्वैतवेदान्तप्रक्रियानुसारं मलविक्षेपावरणनामधेयाभिरविद्यायास्तिसृभिः शक्तिभिर्जीव आवृतः। अन्तःकरणस्य मलिनसंस्कारजनितदोषाणां (मल) निवृत्तिर्निष्कामकर्मणा भवति। विक्षेपस्य नाम चित्तचाञ्चल्यस्य नाश उपासनाभिर्भवति। आवरणस्य ( नाम स्वरूपविस्मृते ) नाशस्तत्त्वज्ञानाज्जायते। अर्थाच्चित्तस्यैतेषां त्रिविधानां दोषाणामपगमायोपनिषत्सु भिन्नानि भिन्नान्यौषधानि पदर्शितानि सन्ति। येन त्रिप्रकारा गतयो भवन्ति। सकामकर्मिणो जना धूममार्गेण स्वर्गादिलोकान् प्राप्य क्षीणे पुण्ये पुनर्जन्म लभन्ते। निष्कामकर्मिण उपासका अर्चिरादिमार्गेण निजोपास्यदेवताया लोकं समवाप्याधिकारानुसारं सालोक्यं सामीप्यं सारूप्य सायुज्यं मुक्तिविशेषं वा प्राप्नुवन्ति। इमौ द्वौ यौ सकामकर्मी निष्कामकर्मी च परस्परविभिन्नौ तत्त्वज्ञानिनौ, तयोः प्राणानामुत्क्रमण (लोकान्तरगमन) न भवति। अर्थात्तयोः शरीर स्वस्वतत्त्वेषु लीनं भवति तेन तौ कैवल्यपदमश्नुवाते। अस्तु।

अनेन प्रकारेणास्मदीया अनादय उपनिषदस्तस्य परब्रह्मणः स्वरूप विशदीकृत्य तस्य च स्फुटतरं निरूपणं कृत्वाऽऽस्माकीं हृदयभूमिकामेतादृशीं योग्यां

निर्मान्ति येन तस्यां तत्त्वज्ञानरूपांकुरः शीघ्र प्रस्फुटेत्। एवं कस्या अपि कल्याणकारिण्या विद्याया ग्रहणाय मनुजस्य सत्यतपःसेवात्यागश्रद्धाविनयादीनां कियत्याऽवश्यकता वर्तत इत्ययं विषय उपनिषत्सु काभिराख्यायिकाभिः प्रदर्शितो वर्तते। न केवलमियदेवापि तु ब्रह्मनिष्ठस्याभयप्राप्तिनिरूपणेन साकं ब्रह्मणो वेत्तुरानन्दस्य सर्वोत्कृष्टतानेकेषु स्थलेषु प्रदर्शिता वर्तते। तात्पर्यमेतद्विद्यते यत् प्राधान्येनोपनिषदां लक्ष्यं ब्रह्मविद्याया उपलब्धिरेव। तदर्थे तत्त्वज्ञानस्य तदुपयोगिकर्मणामुपासनानां विस्तृतं विशदं च वर्णनं व्यधायि।

ब्रह्मविद्यायाः प्रसादात् समत्वदर्शनं भवति। अज्ञानग्रन्थयो भिद्यन्ते। सर्वसंशयाः क्षीयन्ते। एवं चित्तचाञ्चल्यं नष्टं भवति। चित्तमन्तर्मुखं जायते। ब्रह्मविद्यया मिथ्यानुभूतिर्नश्यति। स्वयंप्रकाशस्यावाङ्मनसगोचरस्य चेतनानन्दरसैकघनस्य विज्ञानस्वरूपस्य परब्रह्मणः साक्षात्कारो जायते। ब्रह्मविद्यामृतपानस्यावर्णनीयं माहात्म्यं विद्यते। येनास्य तत्त्वामृतस्य पानं कृतं स तृप्तः संवृत्तः। तस्य पुन किमपि कर्तव्यं न वर्तते न वा प्राप्तव्यम्। ब्रह्मवेत्तुर्दृशि निखिलस्य प्रपञ्चप्रसारस्य विलयो भवति। स च सच्चिदानन्दस्वरूपो जायते येनासज्जड दुःखरूपं प्रतीतं न भवति। तस्य दृष्टौ द्रष्टा दृश्य दर्शनमित्यात्मिका त्रिपुटी विलीना जायते। स एको निश्चलो निर्बाधो निष्कलश्चिदानन्दघनसत्तामात्रस्तिष्ठति। स यान्यादर्शभूतानि कार्याणि विधत्ते तानीतरेषां जनानां दृष्टावपि संभवन्ति। ब्रह्मवेत्तृदृशि न कोपि कर्ता न वा किमपि कार्यम्। यतस्तत्त्वदर्शिनो जलतरङ्गयोरन्तरं न पश्यन्ति। तद् भिन्नत्वं बाह्यदर्शिनां जनानां दृशि प्रतीतं भवति यया दृष्ट्या प्रेरितास्ते वदन्ति यज्जले तरङ्गा उत्पद्यन्ते। किन्तु जलं तरङ्गान् दृष्ट्वा कदापि तेषां गणनामकरोत् किम्? कथनस्येदमेव तात्पर्यं यदेकमखण्ड चिद्घन वस्तु वर्जयित्वोत्पत्तिप्रलयबद्धसाधकमुमुक्षुमुक्तादिप्रकारकः कोपि व्यवहारो न वर्तते।

ब्रह्मात्यन्तं दुर्दर्शं वर्तते यतः सदा व्यवहारेपि निरतानां विषयिणां जीवानां व्यवहारातीतलक्ष्यब्रह्मपर्यन्त दृष्टिप्रापणं नितान्त कठिन वर्तते। येषां वेदपारगामिनां मुनिजनानां रागद्वेषलोभभयक्रोधादीनां विकाराणां निवृत्तिर्ब्रह्मनिष्ठस्य श्रोत्रियस्य सद्गुरोः कृपया समजायत तेषामस्य प्रपञ्चातीतस्याद्वयपदस्य बोधो भवति। अस्य विशुद्धस्य तत्त्वस्य बोधे जाते स महात्मा सर्वथा निर्द्वन्द्वो निर्भयो भवति तथा स्तुतिनमस्कारस्वधाकारादिककर्मश्रेणीभ्यो विरक्तो यदृच्छालाभसन्तुष्टो भवति। अथ बाह्याभ्यन्तरेषु सर्वत्रैकमात्मतत्त्वमोतप्रोतं पश्यंस्तस्मिन् रममाणः कदापि तत्त्वच्युतो न भवति। एषा बोधस्थितिः। एतदर्थं जिज्ञासूनामखिलः प्रयत्नो भवति। एतस्याः स्थितेर्लाभे च प्राणी कृतकृत्यो भवति। कथनस्येदं तात्पर्यं यदौपनिषदं दर्शनमेव सम्यग् दर्शनम्। यत्प्रसादाद्भवभयनिरसनपूर्वाऽऽत्यन्तिकानन्दावाप्तिर्भवति। अस्या विशुद्धाया दृष्टेर्लाभ एव मनुष्यजीवनस्य परममुद्देश्यम्। एवं गहनतानुप्रविष्टस्यौपनिषदसिद्धान्तस्य लाभमन्तरा जीवनं व्यर्थम्। एतद्प्राप्तिर्महत्तमा विनष्टिर्वर्तते।

# गोविन्दस्य कथा

[ ले० महोपाध्याय प० वासुदेवशास्त्री बागेवाडीकरः साहित्याचार्यः, काव्य-वेद-तर्क-तीर्थम्, शोलापुरं ]

"अयि भोः, तात, किं मम नवीना जननी समागमिष्यति ? किमेतत् सत्यम ?" इति मातृवञ्चितो गोविन्दः सहसा कुतोऽपि श्रुतवृत्तान्तः स्वपितरं पृच्छति। तस्य पिता विद्याधरपण्डितः प्रतिभाषते। "अथ किम्। सा त्वां प्रेम्णा लालयिष्यति पालयिष्यति च।" प्राह बालः—"किं मे दिवगता माता प्रत्यागच्छति तथैव मयि स्निह्यति"। इदं मातृवत्सलस्य सुतस्य वचनं निशम्य विद्याधरपण्डितो विधूयमानेन मूर्ध्ना प्रतिवचनं दत्वा तूष्णीमतिष्ठत्। बालस्तु ततः प्रभृति मातृदर्शनं नचिरात्मे भूयो भवितेति प्रसन्नवदनः प्रहृष्टान्तरात्मा सञ्जातः। वयस्येभ्यश्च कथयति। "मम जननी पुनरायास्यति। मां क्रोडे करिष्यति। नवाश्चित्राः कथाः कथयिष्यति। मिष्टं चान्नं मां भोजयिष्यति। न सा कदापि मे दूरवर्तिनी भविष्यति।"

विद्याधरपण्डितः पण्डितकुले जातः अधीतव्याकरणादिशास्त्रो नन्दपुरग्रामे न्यवसत्। स्वाध्यायं कुर्वन् यदृच्छया लब्धेन वृत्तिमुपकल्पयन्नास्त तस्य पत्नी सती सत्यदेवी प्रेष्ठा श्रेष्ठा च गोविन्दं पुत्रं प्रसूय वर्षत्रयेण परलोकं गता। तदा विद्याधरपण्डितः परमदुःखितः। ततोऽपि गोविन्दः। अस्मिञ्जगति मातृहीनो बालः परमकरुणास्पदम्। स जनन्या ऋतेऽन्यमाश्रयं न पश्यति। सर्वेषां दीनानां नाथः परमकारुणिको भगवान् परमात्मा वर्तते। अनाथास्तं करुणां याचन्ते। स्वदुःखभारं चाधरीकर्तुं शक्नुवन्ति। परं जननीहीनो बालस्तमपि दीननाथं शरण्यभावेन नोपैति। स केवलं मातुः स्मरति। अतः स सर्वस्मादपि वञ्चितो भवति। जननीविरहितो बालः पक्षविकलः पक्षी।

एवं दुर्दैवहतो गोविन्दः सदैव खिन्नः। नाहारमभिनन्दति नापि पानीयम्। न समानवयोभिर्बालैः सम रमते। न वा पितुः सन्निधौ क्षणमपि तिष्ठति। न दिवा न वा रात्रौ निर्भरनिद्रासुखमनुभवति। एवं मातृवियोगदुःखितस्य तस्य षण्मासा गताः। यदा च जननीलाभो भूयो जायते इति वार्ता तस्य श्रवणसरणिमापन्ना तदा स भृशं हृष्टः। तस्य मनो दुःखमजहात् सपदि। अहो कियती विचित्रा शक्तिः केवले जननीशब्दे। तस्य चित्तात् खिन्नता अपेता। क्षणादेव सर्वं विश्वं तस्यानन्दमयं प्रतिभातम्। अहो मुग्धत्वं बालकस्य।

(२)

विद्याधरपण्डितस्य विवाहसभारो गोविन्दस्य च जननीलाभो निश्चिते दिवसे यथाविधि संपन्नः। तदा मिलितानां ज्ञातीनां समुल्लासो भिन्नो गोविन्दस्य च कोऽप्यन्य एव। वध्वा गृहप्रवेशानन्तरं काचिद् वृद्धा गोविन्दं गृहीत्वा वधू विद्यावतीं प्राह—"नन्दिनि, मातृवत्सलोऽयं मुग्धो बालो महान्तं कालं त्वां प्रतिपालयति। एतं सदैव स्निग्धया दृष्ट्या अभिवर्षय।" गोविन्दश्चारुगात्रीं भूषणभूषिताङ्गीं तां विलोक्य चकितचकितः सहर्षं तस्याः प्रावारकं च धृत्वा "अयि मातः" इत्युदगिरत्।

यौवनवसन्तोदारसमये प्रीतिवाततरङ्गैरान्दोलिता लतेव सहकारसमागममपेक्षमाणा सा विद्यावती तस्या-

अस्य बालस्य वात्सल्यपूर्णमपि वचनं कुलिशपातसमं मेने। असहमाना सपदि परुषतरमभाषत। "मैवं मां संबोधय"। एतेन निष्ठुरेण वचसा बालस्य मनसि परिपूर्ण आमोदो बिन्दुमात्रोऽपि नावशिष्टः। स साश्चर्यं सास्रं तस्या वदनं विलोकयन् स्थितः। तदा सा वृद्धा भूयोऽपि जगाद। "वत्से, अलं क्रोधेन। कथं वा जानातु एष वराको बालकः केन शब्देन त्वं संबोधयितव्या। विलोक्यतामस्य प्रेमपूर्णमन्तःकरणं न तु अनभिमतं ते वचः। अनेन शब्देनापि संबोधितायाः का ते क्षतिः। अनुगृहाण जननीवत्सलतयेमम्"। "जननि" इति संबोधनमस्य न मे रोचते" इति वदन्ती वदनं पटान्तेनावृत्य रोदितुमारब्धा।

अथ अल्पैरेव मासैर्विद्यावती गर्भिणी जाता। पूर्वं गोविन्दं क्वचित् क्वचित् लालयन्ती सा संप्रति रूक्षतरं व्यवहरति। यदा सा सुतमसूत तदा सा गोविन्दं सर्वथा दूरतो विसर्जयन्ती अतिष्ठत्। तस्य बालस्य गोपाल इति नाम चकार। जनन्या अङ्कगतं तं शिशुं लालयितुं यदा यदा गोविन्दः प्रवर्तते तदा तदा तं सा निषेधति। बालकप्रिया हि बाला। तथा निषिद्धो गोविन्दश्चिरं भृशमखिन्नत। रहसि च गत्वा स्वगतं व्याहरति। "इमं रामणीयकमर्भकम् अङ्के निधायोपलालयितुमुत्सहते मे चेतः। परं तथा कर्तुं माता मां नानुजानाति। किमहं तं भूमौ पातयामि? किमिति मां निषेधति न जाने।" सापत्नमातुर्हृदयं ज्ञातुं बालः कथं नु शक्नुयात्।

अथैकदा गोविन्दो जननीं महानसे कार्यान्तरव्यापृतां वीक्ष्य दोलायां प्रसुप्तं शिशुं निभृतमुपैत्। चिरं तं प्रेक्षमाणः सुकोमलौ कपोलौ ललितं पर्यचुम्बत्। तस्य स्पर्शेन संजातनिद्राभङ्गः स बालक उच्चैराक्रन्दितुं प्रारभत। तेन तस्य रोदनध्वनिना त्वरया समागता विद्यावती दोलासमीपगतं गोविन्दमवालोकयत्। सक्रुद्धा च तं कपोलेऽचपेटयत्। भूयो गृहं प्रतिनिवृत्ताय विद्याधरपण्डिताय "सुप्तस्य गोपालस्य कपोलौ गोविन्देन अंगुल्यग्रेण पीडितौ" इति तया निवेदितम्। एवं सपत्नमात्राऽन्यथा प्रचोदितः पिता सक्रुद्धो गोविन्दं दण्डेनाताडयत्। गोविन्देन प्रथममेवेदं पितुस्ताडनमनुभूतं तच्च सापत्नजनन्याः कुटिलनीतिवशात्। इतः आरभ्य तस्य जीवनक्रमः परिवर्तितः।

अथ गच्छता कालेन गोविन्दः प्रेममयेन सहवासेन परिवर्जितः। ततः प्रायेण स भोजनाय शयनाय च गेहं समायाति। इतस्ततो ग्रामे क्वापि परिभ्रमति। अध्ययनव्यवसायादपि तस्य मनः शनैः शनैर्विरतमासीत्। अन्ते स पाठशालामपि परित्यक्तवान्। प्रथमं यः कुशलः कुशाग्रबुद्धिः सच्छीलः इति सर्वेषां ग्रामे प्रशंसाविषय आसीत् स एव संप्रति तेषां तिरस्कारविषयो जातः। ग्रामवासिनः प्रत्यहं तस्य पीडाकरत्वं दुःखशीलत्वं च पितुरग्रतो व्यवृण्वन्। पिता च तं वारं वारं ताडयामास। न कोऽपि गृहस्थः स्वसुतं तेन साकं संपृक्तं सहते स्म। एवं स स्वकीयैः परकीयैश्चापि परिवर्जितः। न कस्यापि प्रीतिभाजनं सः।

( ३ )

गोपालस्तु नियतं पाठशालां गच्छति स्वपाठांश्च पठति। तेन हि गुरवः मातापितरौ च तमभिनन्दन्ति। तं पाठयितुं गेहेऽपि अध्यापको नियुक्तः। सदा प्रसन्नवदनः स विनयशाली सुचरितैः सर्वान् प्रीणाति स्म। एवं तयोर्भ्रात्रोर्महति विरोधे वर्तमानेऽपि परस्परोपरि महती प्रीतिरासीत्। गोविन्दो न कस्मिन्नपि स्निह्यति न वा कोऽपि तस्मिन्। परं कनीयसि बन्धौ तदन्तः-

करणे महान् स्नेहानुबन्धः । पितृभ्यां निवारितावपि तौ मिथः स्नेहानुवर्तिनौ । यथा गोविन्दस्य कनीयसि तथैव गोपालस्यापि स्वाग्रजे स्नेहानुवृत्तित्वम् । अशनपानादिषु पक्षपातिन्या मात्रा सार्धं विवदमानेन तेन भूयो भूयो ज्यायसि स्वपक्षपातित्वमाविष्कृतम् । गोविन्दोऽपि गोपालसङ्गतौ महान्तं सन्तोषमनुभवति स्म । गोपाल एव जगति तस्यैकं महतः प्रमोदस्य स्थानम् । "स्नेहेन स्नेहो वैरेण वैरं प्रवर्धते" इति यदुच्यते तत्सत्यम् ।

अथैकदा पिता गोविन्दं "इदानीं त्वं पाठशालां न गच्छसि । अध्ययनं च न करोषि । किमिदम् । कि ते मनसि वर्तते । पित्रैव तवोदरभरणभारः अत्यन्तं वोढव्यः" इति अध्ययनपरिवर्जनं निमित्तीकृत्याऽपृच्छत् । "अहं तु शालां गच्छामि । पर शिक्षको मां निःसारयति । यतो मम प्रतिमास देयं शुल्कं सुबहु अवशिष्टम् ।" इति तस्य प्रतिवचनं निशम्य विद्याधरपण्डितो न्यगदत् । "त्व सम्यङ्नाधीषे । एकस्यामेव कक्षायां वर्षत्रयं शिक्षसे । अथापि नोत्तीर्णतां भजसे । तवानुजः परस्मिन् वर्षे तव कक्षां प्रविशेत् । कि न जिह्रेषि एतस्मात्" । ततः स वदति—"मम ललाटे विद्यैव नास्ति" । पिता पुनः पृच्छति—"किं ते ललाटे लिखितम्" । "मम ललाटे भिक्षाटनं लिखितम्" । इति तस्योत्तरं श्रुत्वा सक्रोध पित्रा स उक्तः "यद्येवं भिक्षां याचस्व । निर्याहि मे गृहात्" ।

एव पित्रा निष्ठुरं धिक्कृतः स सदनं परित्यज्य क्वापि सुदूर गन्तुं निरचिनोत् । "प्रेयान् कनीयान् बन्धुः स्वनिर्गमनं न कदाप्यनुमन्येत । प्रत्युत निरुन्ध्यात्" इति कृत्वा केनाप्यलक्षितः परेद्यवि एव एकाकी अकिञ्चनः स्वग्रामं स्वभवनं प्रेयांसमपि कनीयांसं भ्रातरं सहसा परित्यज्य प्रस्थितः । पादचारो ग्रामाद्ग्राममटन् भिक्षां भिक्षमाणः कैश्चिदहोभिः श्रमोपजीव्यां मुम्बापुरीं प्रविष्ट. ।

नास्ति किञ्चन धनं नापि विद्या । न वा परिचितः कोऽपि । एतादृशो युवा विशालायां मुम्बापुर्यां किं करिष्यति । क्व निवत्स्यति । कथ वा जीविकां सपादयिष्यति । युवावस्था ईदृशी खलु । सा नभसि मन्दिराणि रचयति । सागराम्भसि पद्भ्यां चलति । भूमौ च नावं सचारयति । नास्ति किमपि दुर्घटं नाम । न गणयति विपदम् । महान् किल आत्मनि विश्वासः । एवविधः एव युवा गोविन्दः । तेन प्रागेव व्यवसितः स्वव्यवसायः । मुम्बां प्रविष्टमात्र एव स एकस्यां धर्मशालायाम् आवास रचयामास । पथि भिक्षार्जित किञ्चिद् द्रव्यमासीत् । तेन कानिचित् वृत्तपत्राणि क्रीत्वा श्रमजीविनां निवासेषु चतुष्पथे प्रत्यूषे एव विक्रीणीते । प्रथमदिवस एव तेन अष्टौ आणकाः प्राप्ताः । शनैः शनैः प्रतिदिन तस्य धनलाभो वर्धते स्म । एतद्व्यवसायवशान्मासाभ्यन्तर एव भूयसां श्रमजीविनां परिचयो जातः । ततस्तेन तेषामेव निवाससमूहे किचिद् आगारं भाटकदानेन स्वायत्तीकृतम् । तत्र प्रौढानां कृते साक्षरताप्रसारकार्यं प्रारब्धम् । श्रमजीविनां विश्रामसमये तेभ्यः अक्षरशिक्षां विदधाति । स सकृत् प्रातः पाकं विधाय भुङ्क्ते । स्वयमेव पात्राणि परिमार्ष्टि । वस्त्राणि च क्षालयति । भूमौ शेते । न कदापि खिद्यते । अनेन तस्य समुदाचारेण सर्वे श्रमजीविनस्तस्मिन् भृशं स्निह्यन्ति । पर स सदैव स्वभ्रातर चिन्तयति स्म । स्वस्थः स एकदाऽनुजन्मने पत्रेणात्मनः सकलमुदन्तजातं न्यवेदयत् । न चिरेण तस्योत्तरमपि तेन प्राप्तम् । तत्पत्रदर्शनेन नितरां सुसन्तुष्टः सोऽमन्यत । "नाहं जगति परित्यक्तः एकाकी । विद्यते

खलु भूमण्डलेऽस्मिन् सः यो मयि स्निह्यति । मामपेक्षते स्मरति च ।" यथा तृषिताय जलं तथा गोविन्दाय गोपालेन प्रेषितं पत्रम् । केवलेन पत्रदर्शनेन संतुष्टं तस्य मानसं गोपालस्य विद्याभिवृद्धिं पठित्वा समधिकं संतोषमभजत । "प्रतिमासं शिक्षणार्थं तस्मै किमपि धन दातव्यम्" इति मनीषया तेन स्व परमान्नभोजनमपि परिहृतम् । किं पुनरारामविरामव्ययः । ततस्तेन कागजादीनां लेखनसाधनानां पुस्तकानां च विपणः समारब्धः । अल्पीयसी विपणिः संपादिता । अत्र यावान् द्रव्यलाभो जायते तदर्धं प्रतिमासं भ्रात्रे प्रेषयति ।

( ४ )

गृहं नाम प्रीतेर्महदाश्रयस्थानम् । महताऽऽयासेन प्रीत्या चेदं स्थानं प्राप्यते । एतद् बाल्ये मातापित्रोः प्रेम्णा भगिनीबन्धूनां च स्नेहेन सततं चेतः समाकर्षति । यौवने च कलत्रपुत्रादीनां प्रीत्या । भुवि इदमेकमेव स्थान यन्मानवानां जीवनयात्रायां स्थैर्यमुत्पादयति । एषा मञ्जूषा खलु नराणां शीलरक्षणाय विहिता । असौ नौः किल मनुजान् निखिलेभ्यो विप्लवसागरेभ्य उत्तारयति । परं गोविन्दस्य ईदृग् गेहं क्वास्ति । क्व च तत्सामर्थ्यम् । यत् तं सततं मुम्बापुरीगतान्मोहमयादपायात् पायात । नास्ति मातृवात्सल्यं न विद्यते पितृस्नेहः । न चापि पुत्रप्रीतिः । सर्वथैव न वर्तते गृहिणीबन्धनम् । परं केवलं बन्धुस्नेहेन बद्धः स सदवात्मानं रक्षति । स केवलं भ्रातृस्नेहवशात् धनसंचयं कर्तुं प्रारभत । तस्य बन्धुर्गोपालोऽपि अवहितमना अध्ययनपरोऽभवत् । तस्य विद्यारतत्वं सर्वातिग च बुद्धिकौशलं शृण्वन्तो बहवो गृहस्थाः प्राप्तवयस्कां रूपाढ्यां स्वां स्वां कन्यां तस्मै प्रदातुं समायान्ति । वधूमुखदर्शनोत्सुका माताऽपि तस्य विवाहकौतुकं निर्वर्तयितुं त्वरते स्म । अत्रान्तरे गोपालः आचार्यपरीक्षायां प्रथमश्रेण्या प्रथमाङ्केनोत्तीर्णतामलभत । ततः स तत्रैव पाठशालायां साहित्याध्यापकत्वेन सपदि नियुक्तः ।

जनन्या भूयोभूयः प्रेरितोऽपि गोपालो ज्येष्ठे भ्रातरि अविवाहिते स्वविवाहं प्रथमं विधातुं नेच्छति । "गोपालस्य विवाहनिरपेक्षतायाः कारणं गोविन्द एव" इति विद्यावती मेने । तन्निमित्तीकृत्य तस्या विद्याधरपण्डितेन सह महान् कलहो जातः । ततस्तेन गोविन्दं पत्रमलिखत् । तत्र अद्ययावद् यन्मौनं स्वीकृत तदुद्दिश्य प्रथमं शुचं प्रदर्शितवान् । "त्वां तव भ्रातरं च वधूसमन्वितं विलोकयितुं समुत्सुकमावयोर्मनः । अहमत्यन्त दुःखार्तो भवामि यदि त्व मे न पूरयसि पश्चिमामिमामभिलाषाम् ।" एवंविधं पितुः पत्रं पठित्वा गोविन्दः परमदुःखितोऽभवत् । सोऽचिन्तयत्—मम गृहान्निर्गतस्य बहूनि वर्षाणि व्यतीतानि । न मे जीवनवृत्तान्तस्य जिज्ञासा कदाप्येकेनाप्यक्षरेण पित्रा कृता । इदानीमेव मे स्मरणं सर्वथा स्वाभिप्रायेण । 'असंपादितविवाहं मां स्मृत्वा नून गोपालः स्वविवाहं संपादयितुं नोत्सहते । यतः स मयि भृशं स्निह्यति । एतदेव महत् पीडाकरं तातचरणानाम् । अतो यथा गोपाल आत्मनो विवाहं विधास्यति तथा मया कर्तव्यम् । स मम स्नेहवशान्न सकलमपि कुलं विपरीतं विधातुं प्रवर्तताम् । अस्माकं कौटुम्बिकं जीवनं पूर्वत एव न कल्याणमयम् । संसारे मानवः कश्मलेन प्रायो वैमनस्यं क्रौर्यं च निर्मिमीते । व्यामोहं गतः स प्रेष्ठेभ्योऽपि द्रुह्यति । यद् अद्ययावन्मया संसारेऽनुभूतं तदत्रैव परिसमाप्यताम् । यत्किञ्चिन्मया संपादितं तत्सर्वं भ्रात्रे समर्प्यते । स समीहितसंपादनेन पितरौ प्रीणयताम् ।

एवं विचार्य गोविन्दः अन्येद्युरेव रूपकाणां सहस्रेण सह पित्रे पत्रं प्रेषितवान्—"अहो सुफलितं मे महद्भाग्यमद्य। यत्प्रसादेनात्रभवता चिरादनुगृहीतोऽस्मि। गोपालस्य विवाहमहोत्सवः संपाद्यताम्। तस्य श्रेयोदर्शनेन मम मनः प्रमोदस्य परां काष्ठामधिरोहति। तदर्थं मया किञ्चिद् धनमितः प्रेष्यते। तेन वध्वाः कृते मङ्गलमयानि भूषणान्युपकल्पनीयानि। मम विवाहमधिकृत्य त्वेवमेव वच्मि। एवंविधस्य भागधेयस्य नाहं भाजनम्। आजन्म यन्मया दृष्टं श्रुतम् अनुभूतं च तत्सकलमेकपदे विस्मृत्य मृगतृष्णिकासमानाय श्रेयसे यतिष्ये चेन्नास्ति जगति मत्समोऽन्यः कोऽपि मूढः। क्षन्तव्योऽयं बालः। विवाहशब्दमपि न सहते मे चेतः।"

तेन च गोपालं प्रति लिखितम्—"मातापित्रोरादेशः सुपुत्रेण न कदापि विहन्तव्यः। मादृशेन तु मूढेन दुर्भाग्येन न कापि कन्या परिणेतव्या। चेखिद्यते मे चित्तम् यदहं ते विवाहमङ्गलं संपादयितुं समुपस्थातुं न क्षमः। तव श्रेयसोऽन्यन्न विद्यते मम परसतोषस्थानं भूतले।"

पत्रं पठित्वा गोपालस्य मनस्येवमभवत्—"मातापित्रोः प्रेम्णा बाल्यादेव वञ्चितो मे ज्यायान् भ्राताऽऽत्मनि निष्ठुर ईदृशः संजातः। शैशवात् प्रभृति स सर्वैर्न्यक्कृतः। उपेक्षितश्च। इदं सर्वं मे प्रत्यक्षम्। न मे वचनस्यापि तत्रावसरः किमुत प्रतीकारस्य। एवंस्थिते यदि गार्हस्थ्ये तस्यैवमनभिरुचिर्नात्र चित्रम्। एतत्सर्वं प्रत्यक्षीकुर्वता विजानता मयापि कथमिव न परिहर्तव्येयं संसारविपद्।" इति विचार्य तेनापि एवं विषयः सर्वथा परित्यक्तः। गोपालस्येमं निश्चयं विदित्वा तस्य जननी गोविन्दस्योपरि संक्रुद्धा भर्तारमब्रवीत्—"दूरस्थोऽपि चाण्डालोऽयं ममानर्थाय भवति। अनेनैव दुष्टेन ममाज्ञाकरः पुत्र एवमविनीततां नीतः। विलोक्यताम्। का गतिः। किं करोमि।" एवं शपमानां तां विद्याधरपण्डितः कथमपि प्रशमं नीतवान्।

( ५ )

माता विद्यावती प्रतिदिनं लब्धावसरा सुतं विवाहायानुकूलयितुं किमपि किमपि भाषमाणा तिष्ठति। "कस्य कन्या गुणवती सुरूपा वर्तते। कस्याः पिता कियत् शुल्कं प्रयच्छति। कस्याः पिता लोके कियन्तीं प्रतिष्ठामधिगतः।" एतत्सकलं निरलसं वर्णयति। पर न किमप्यवधत्ते गोपालः। प्रतिसंवत्सरमुक्तेषु मासेषु ज्ञातीनां परिचितानां च गेहेषु विवाहमङ्गलकृत्यानि संपद्यन्ते। परिणीता बह्वः कन्यका मातृपदमधिरूढाः। कासाञ्चिद् वसनानि शिशुजनाङ्गरजसा मलिनानि भवन्ति। एतद् वीक्ष्य विद्यावती आत्मानमधन्यं मन्वाना "भगवन् कदा वा द्रक्ष्यामि सुन्दरं वधूमुखम्। कदा वा सुललितं दशनविहीनं पौत्रमुखदर्शनं मे भविष्यति। अपि नाम विद्यते ममैवंविधं भागधेयम्।" एवं शोचन्ती सा प्रायेण भ्रान्तचित्ता संपन्ना। "केनाप्युपायेन गोपालः स्वाध्यवसायान्न विरमति" इति यदा सा विजज्ञुषी तदा सा अनर्थस्यास्य हेतुं गोविन्दं मेने।"

"त्वं महान् नीचः कुटिलः। कृतघ्नेन त्वया मम सुतो मोहजालेन बद्धो वशीकृतः। अनन्तजन्मसंचितस्य वैरस्य निर्यातनाय त्वमस्मत्कुले समुत्पन्नः। न त्वं केवलं मातृद्रोही पितृद्रोही कुलघ्नश्चापि। ममात्मजमेवं विवाहोन्मुखं कृत्वा त्वया पश्यतः पितुः सन्तानविच्छेदः कृतः। निरयादृते नास्ति तेऽन्यच्छरणम्।"

एवमाशयं हृदयविदारकं पत्रं गोविन्दाय सम्प्रेष्य किञ्चित्प्रशान्तक्षोभाऽभवत्। नैवं सकृत् पत्रप्रेषणेन प्रशान्ता। परेद्युरपि तथैव पत्रं लिखितम्। असकृद् ईदृगाशयानि हृदयमर्मच्छिन्दि नैकानि पत्राणि दिनान्तरेण प्रेषितानि।

गोविन्दात् प्रतिमासं प्राप्यमाणं धनं गोपालेन अध्यापकवृत्तिवशान्न समीहितम्। तेन हि गोविन्दः आत्मानं निरालम्बं मन्यमान उद्विग्नो भूतः। तस्मिन्नेव समये विद्यावत्याः प्रथमं पत्रं तस्य हस्तगतमासीत्। तद् वाचयित्वा तस्यान्तःकरणं बलवद् दुनोति स्म। दिनान्तरेण द्वितीयं प्राप्तम्। तत् तदनुगामीनि चान्यानि पत्राणि तथाविधाशयानि मत्वाऽपठित्वैव वह्निसात्कृतानि। एभिर्मर्मच्छिद्भिरक्षरैः स्वान्ते तथा नितान्तं विद्धः सोऽशनपानादीनि समुचितकर्तव्यानि पूर्ववन्नाभ्यनन्दत्। अहन्यहनि कृशाङ्गः संजातः। एवं दुर्बलः स विपणिं तत्याज। एकान्ते सदैव निमग्नः सोऽचिरादेव नैकैर्व्याधिभिराक्रान्तः। एवं तस्याधिव्याधी प्रकोपतां गतौ।

एवं रुग्णशय्यां गतस्य तस्य एकस्मिन् दिने कनीयान् प्रेयान् भ्राता गोपालः सहसा समीपं समागतश्चरणौ प्रणतः। अकस्मादागतं भ्रातरं समवलोक्य भ्रातृवत्सलः स तथावस्थोऽपि समुत्थाय प्रेम्णा गाढमाश्लिष्यत्। हर्षातिरेकात् स क्षणं सगद्गदस्तूष्णीमतिष्ठत्। तथा जर्जरितदेहं जराजीर्णमिव लक्ष्यमाणं व्याधिग्रस्तकलेवरं तमग्रजं संवीक्ष्य गोपालः साश्रुनयनोऽवदत्—'अयि बन्धो, किमियं ते दशा। स प्रत्यब्रवीत्—"मम दैवदुर्विलासस्य परिणामः। परं त्वमकस्मात् कथमिवागतः। पत्रेण तवागमनं कथं न सूचितम्" स प्रत्युवाच—"पूर्वमेव मया पत्रं प्रेषितम्। न त्वया तत् संप्राप्तमिति भाति।" तदुपरि स उवाद "कदाचित् पत्रं विपण्यां पतितं स्यात्। विपणिमप्रविष्टस्य मम बहूनि दिनान्यतीतानि। भवतु। अपि कुशलं मातापित्रोः?" ततः स प्रतिबभाषे—"कुतोऽद्यापि तातः।" स आह—"किम् अत्याहितम्?" स कथयति—"दुरवस्थयाऽनया नः कुलस्य पीडितस्य त्वामेव सततं चिन्तयतः पितुरुपरतस्य मासो व्यतीतः। विपन्ने जनके विभ्रान्तचित्ता माता किमपि किमप्यन्यथा प्रजल्पन्ती कथमपि न प्रकृतिमापद्यते। अधुना त्वमेव तस्या जीवितस्यालम्बनं परमभैषजम्।" इत्युक्त्वा विरतवचसि तस्मिन् गोविन्दः प्राह—"अहो बत, अवसन्नं नः सकलं कुलम्। मातुर्दर्शनाय श्व एव प्रभाते प्रस्थास्यावहे। सा हि परमं दैवतमावयो। यत उक्तं च—

"न मातुः परदैवतम्।"

## संसारे सर्वतः कठिनं कर्म !

• दन्तमञ्जनद्रवस्य (टूथपेस्ट) नलिका (ट्यूब) तो निष्कास्य पुनः नलिकायां प्रवेशनम्।

# पिपासुकश्चातकः

[ श्यामदेवशास्त्री बी ए., अमृतसर ]

ओ प्रियतम ! तावन्निस्सारं, हाऽपेक्षे नैवामृतसेकम् ।
आ ! म्रियमाणोऽहं तृषापर, कामये तु जीवनकणमेकम् ॥१॥
हे श्यामघनामृतमय शाश्वत ! आकाशवितत परिपूरिताश ! ।
निस्तप्तनिवहनिश्वासमलिन ! नवनीलनलिनकाननीकाश ! ॥२॥
नीहारमया हि मया निभृतं, नदनदीमनोहरहारधराः ।
तृष्णाज्वालासन्दग्धहृदा, सेविता हन्त नैकधा धराः ॥३॥
ज्वालामुखीति नाम्ना विदिताः, शीता अप्येते बहिः परम् ।
चिरसञ्चितमिव पुटपाकनिभाः, अन्तर्वहन्ति सन्तापभरम् ॥४॥
रत्नाकरोऽपि पारावारः, हे करुणावरुणालय ! सुचिरम् ।
दृष्टो बडवानलदूनोऽसौ, स्वान्तं न वहति हानिजं स्थिरम् ॥५॥
क्षारोदधिना तृष्णा शान्ता, हे सरसहृदय ! वद कस्य कदा ? ।
बाष्पं स परेषां हरतु कथं, मुञ्चति बाष्प यः स्वय सदा ॥६॥
शुश्रूषितानि शीतानि तानि, पुष्करिणीपल्वलपावनानि ।
घनसारगन्धसारावृतानि, दीनेन मया बहुशो वनानि ॥७॥
त्वक्सारस्तम्बे भजमानं, सङ्कोच वा निद्राभावम् ।
तत्रापि ददृशिवान् मन्दोऽहं, दारुणरूपं दहन दावम् ॥८॥
अत एव तुषारान् कासारान्, कूलेष्ववेदय खद्योतगणान् ।
नोपैमि विहस्तश्चापन्नः, मत्वैव नाथ ! तानग्निकणान् ॥९॥
विद्युद्गर्भेऽपि जडेऽतितमां, इमे भव्य ! दिव्ये तव देहे ।
वीक्षे गिरिसागरगहनानां, प्रतिमूर्तिमिव प्रिय ! प्रियतम ! हे ! ॥१०॥
एते त्वत्तो जननीसदृशात्, दीना न लभन्ते पयोऽनिशम् ।
तत्किमिति न याचे त्वामेकं, जीवनाधार ! वद भुवनेशम् ॥११॥
केऽप्याहुरधन्याः 'यः स्वीयं विद्युद्दाहं नो हर्तुमलम् ।
शमयिष्यति स कथं जडमूर्तिः, तावक तोयदः तृषानलम् ॥१२॥
हे घनश्याम ! ते किन्तु नाम, श्रुतमपि द्रुतमिव तुहिनसोदम् ।
किरति स्वान्ते च मनोऽभिराम !, नुदतीवामन्दामोदमदम् ॥१३॥

# राजयक्ष्मा

[ ले० भिषग्मणि, प्राणाचार्य, वैद्य मणिराम शर्मा गौड़, श्रीगंगानगर ]

हा हन्त ! यस्मिन्देशे यक्ष्मणः आक्रमणं नाममात्रेणाऽपि नाभवत् स एव देशः यक्ष्माश्रमः संजातः। अत्यन्तविषयासक्तः शीतांशु राजयक्ष्मणा गृहीतः। सोऽपि औषधप्रयोगेण रोगात् नितरां प्रमुक्तः। प्राचीनकाले यक्ष्मणः प्रकोप कथं नु भवति स्म ? साम्प्रतं स कथं वायुवेगेन, नहि नहि विद्युद्वेगेन प्रतिगृहं प्रतिजनं स्थानं कुर्वन्नवलोक्यते। साम्प्रतं चाकचक्ययुता बाह्याडम्बरयुता विज्ञानसम्मता ऐलोपैथिकचिकित्सा यथा यथा यक्ष्मरोगार्णवनिमग्नान् समुद्धर्तुं प्रचार्यते तथा तथा ह्यस्य रोगस्य अभिवृद्धिर्भवति। कोऽत्र हेतुः ?

ईशात अभ्ररसवेदाब्द (४६०) पूर्वं यूनानस्य सुविख्यातचिकित्सकेन हिपोक्रैटिजमहोदयेन लिखितमस्ति—दूषितशरीररचनायाः फलं यक्ष्मा। अतस्तेन सामुद्रिकजलवायुना तस्य चिकित्सा प्रतिपादिता। पुनश्च सेल्सस एवं गेलिन इत्याभ्यां वैज्ञानिकाभ्यां चरकसुश्रुतानुसारेण अजादुग्धेन तस्य चिकित्सा उक्तेति।

तदनन्तरं इटली, फ्रांस, स्पेन, चिकित्सकैः सक्रामकोऽयं रोगः इति निर्णीतः। अतः फ्रांसे राज्यविधानेन यक्ष्माक्रान्तरोगिणां पृथङनिवासः विहितः। किन्त्वनेन विधिना न शान्तोऽयं रोगः। अनन्तरं पाश्चात्यवैज्ञानिकेषु विचारपरिवर्तनं जातं पुनश्च ते वैज्ञानिकाः प्रकृत्या एव क्षयः भवतीति अनुमेनिरे। तदनन्तरं जर्मनदेशस्य डाक्टररोबर्टकाकमहोदयेन १८८२ सन् वत्सरे यक्ष्मणः कारणं रोगकीटाणवः सन्तीति प्रतिपाद्य विज्ञाने नवीनः कीटाणुवादसिद्धान्तः प्रकाशितः। पूर्वं ते वैज्ञानिकाः कीटाणून् अजरामरेति मन्यन्ते स्म

---

करुणां कुरु यातु सर्पाद् दूरं, तृष्णा च कृष्ण ! भयदा सेयम्।
रसमये विलीनस्त्वयि खेऽह, आनन्दमयो येन भवेयम् ॥१४॥
प्रार्थना-वचांसि मदीयानि, ग्रस्तान्यपि चेदन्तरान्तरा।
भावना धार्यतेऽवच्छिन्ना, हे नाथ ! तथाहि विशुद्धतरा ॥१५॥
श्रान्ते न नितान्तमनन्तपथे, लिप्सयाऽप्यशान्तहृदा भ्रान्तम्।
शक्नोम्यधुना नात्रस्थातुं, तृष्णा न च जीवनमेत्यन्तम् ॥१६॥
आः ! कान्त ! वहामि निराशोऽहं, लोचनयोर्यद्यपि बहुतोयम्।
रुष्ट इव चिरात्तृष्णावह्निर्न तथापि सदयघन ! शान्तोऽयम् ॥१७॥
क्लान्तस्यातितमां हा शुष्कः, यद्यपि च विद्यते मे कण्ठः।
हे प्रेष्ठ ! परं हृदये स्नेहः, त्वां प्रति तु मामको भूयिष्ठः ॥१८॥
ओ प्रियतम ! तावन्निस्सार, हाऽपेक्षे नैवामृतसेकम्।
आः ! म्रियमाणोऽहं तृषापरः कामये तु·········॥

किन्तु यदा रुग्णस्य कफे मृतान् कीटाणून् विलोकितवन्तस्तदा कीटाणवः अजरा अमरा इति भ्रमो विगलितः। साम्प्रतं मोलरप्रभृति वैज्ञानिकाः स्वीकुर्वन्ति यत् शरीरात् बहिर्हि रोगकीटाणुध्वंसकानि तत्त्वानि सन्ति किन्तु शरीरे हानिमकृत्वा शरीरस्थरोगकीटाणून् विध्वंसेरन् एतादृशानि तत्त्वानि नोपलब्धानि। अस्मिन् सिद्धान्ते सर्वे वैज्ञानिकाः एकविचाराः सन्ति।

अधुना पुनश्च प्रकृत्या क्षयः इति केचन वैज्ञानिकाः मन्तुमारब्धवन्तः। अहो यस्य विज्ञानस्य जगति महान् डिण्डिमघोषः प्रभवति स कियद्विधपरिवर्तनशील इत्येवावलोकनीयमस्ति।

साम्प्रतं भवतां पुरतः आयुर्वेदसम्मता चिकित्साप्रणाली समुपस्थाप्यते।

यक्ष्मणः कारणम्। प्रथमम्--स्वास्थ्य-रक्षणस्य नियमोल्लघन, दिनचर्या-निशाचर्या-ऋतुचर्यादीनाम् व्यतिक्रमश्च। द्वितीयम्--अधिकवीर्यविनाशो ब्रह्मचर्याभावश्च। तृतीयम्--सामर्थ्यादधिकः श्रम पौष्टिकभोजनालाभश्च। तथा पौष्टिकभोजनसेवनं परिश्रमाभावश्च। चतुर्थम्--चिन्ताशोकक्रोधादिना मानसिक आघातः संसर्गश्च।

यक्ष्मणः स्वरूपम्--कासो ज्वरो रक्तपित्त त्रिरूपे राजयक्ष्मणि इतिभोजोक्तेः--

भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनम्।
स्वरभेदश्च जायेत षड् रूपं राजयक्ष्मणि॥

इति सुश्रुतोक्तेः षड्रूपम्--

स्वरभेदाऽनिलाच्छूल सकोचश्चांसपार्श्वयोः।
ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः॥

इत्यादि माधवोक्तेः एकादशरूपं वा। रा: यक्ष्मणि सर्वत्रैव ज्वरः कासः पित्ताद् रक्तनिर्गमोऽपि हितः।

राजयक्ष्मणि पथ्यम्--

पूर्णब्रह्मचर्यपालनम्। सात्म्यभोजन। शुद्धजलवायु सेवनम्। मरौ वा गिरौ निवसनम्। उद्यानेषु गृहारामे चंक्रमणं भ्रमणं वा। शोकमोहचिताक्रोधादिमानसिक विकाराणाम् दूरतः सर्वतः परिवर्जनम् पूर्णविश्रामश्च

चिकित्सा--सक्षेपत: क्रियायोगो निदानं परिवर्जनम् यैः यैः कारणैः रोगोत्पत्तिर्भवति तानि तानि सर्वाणि परिवर्जयेत्। पाश्चात्यवैज्ञानिकाः रोगकारणं कीटाणून् मन्यन्ते अतस्ते कीटाणुनाशकौषधप्रयोग कुर्वन्ति किन्त्वस्माक आयुर्वेदसिद्धान्तानुसारेण मिथ्याहारविहाराभ्यामदृष्टाच्च शरीरे यक्ष्मणो विषमुत्पद्यते, तेन विषेन समुद्भूताः कीटाणवः वक्षसि यक्ष्मरोगं जनयन्ति। तेन उरसि व्रणः संजायते। यत्रैते कीटाणवस्तिष्ठन्ति।

कीटाणूनां शुद्धमासमपेक्षित भवति अतस्ते वक्षसि मांस भुंजानाः अग्रे अग्रे परिधावन्ति इत्थ प्रकारेण यक्ष्मिणः वक्षसि सर्वत्र कोथः सजायते। अतः राजयक्ष्मणः कारणं विषमेव न तु कीटाणवः। यदि विषस्य चिकित्सा क्रियेत तर्हि कीटाणूनामुत्पत्तिरेव प्रतिबद्धा भवेत्। विषयस्य विषोद्भूतानां कीटाणूनां च चिकित्सा यज्ञाद् भवति। तदुक्तं अथर्ववेदे--

मुंचामि त्वा हविषा जीवनाय अज्ञातयक्ष्मादुत राजयक्ष्मात्। ग्राहि जग्राहि यद्यते देव तस्या इन्द्राग्नि प्र मुक्तमेनम्।

अस्मिन् मंत्रे हविषा यज्ञेन, यक्ष्मात् उत राजयक्ष्मात् मुंचामि। इत्यादिपदैः राजयक्ष्मणः चिकित्सा

# हे राष्ट्रकर्णधारा नहि वयमुपेक्षणीयाः

[ विद्यावाचस्पति श्रीपरमानन्दशास्त्री व्याकरण-साहित्याचार्यः (पञ्जाम्बुविश्वविद्यालयस्य संस्कृतविभागः) ]

हे राष्ट्रकर्णधारा । नहि वयमुपेक्षणीया हे वयमपि तु भारतीयाः

१. अस्माभिरेव कष्टैः कौपीनमात्रतुष्टैः
मुक्तैः शिलोञ्छभक्तैः प्रत्याशया विमुक्तैः
सर्वोच्चसंस्कृतिः सा समगोपि भारतीया । वयमपि०

२. लोकेष्वलौकिकत्वं यद्भारतेन वाप्तम्
निष्कामसेवकानामस्मादृशां निरीह
बलिदानमत्र चित्र जागर्ति नोऽर्हणीयाः । वयमपि०

३ यद्यत्र संस्कृतज्ञास् त्यागाय नाभविष्यन्
लोकेषु गीयमाना आदर्शमानवीया
नो नामतोभविष्यत् संस्कृतिरिय स्वकीया वयमपि०

४. आशाभिरापि सत्ता काभिर्न काभिरेषा
उपजीव्यघातिनीय सर्वाङ्गशोषिका सा
हा हन्त किन्तु नान्त यातार्तिरस्मदीया । वयमपि०

५. ताभिर्विडम्बनाभिर्हा नवनवाभिरेवम्
अपमानमथ निराशां गमिताः पर विचार्याः
ते नो प्रतारणीया ये सन्ति माननीया । वयमपि०

६ अद्योन्नतिर्ग्रहाणां हा पल्लवग्रहाणाम्
संदृश्यते समन्तात् काले विलक्षणेऽस्मिन्
हंहो फलेग्रहीणामिव नतिरवेक्षणीया । वयमपि०

---

यज्ञेन प्रतिपादिता । तथैवाह चरकाचार्योऽपि—राजयक्ष्मा पुरा जितः तां वेदविहितामिष्टिमारोग्यार्थी प्रयोजयेत् । चरके चिकित्सास्थाने तद्वदेव ट्रि लिट् साहबमहोदयेन सितायाः धूमेन यक्ष्मकीटाणूनां विनाशो भवति, इत्युक्तं ।

एतत्तु वैज्ञानिकैः सर्वथा स्वीक्रियते—यत् सूक्ष्मवस्तु स्थूलवस्तुनि प्रवेष्टुमर्हति । किन्तु न स्थूलवस्तु सूक्ष्मवस्तुनि प्रवेष्टुं क्षमं । यक्ष्मकीटाणवः एकस्मिन् इंचस्थाने पंचविंशतिसहस्रसंख्यकाः स्थातुं शक्नुवन्ति । गुंजाष्टमभागे एककोटिकीटाणवः तोलयितुं शक्यन्ते । यक्ष्मकीटाणवः ईदृग्विधाः सूक्ष्माः तूलाश्च प्रभवन्ति तर्हि कीटाणुषु कः औषधप्रभावो भवेदिति चिन्तनीयमस्ति । प्रोफेसर मैक्समूलरः फिजिकल रिलिजननामकपुस्तके लिखति स्म, औषधभक्षणात् औषधनस्यस्य प्रभावोऽधिको भवति । चीनजापानयोर्होमि धोममिति वदन्ति, अनेन च होमेन तत्र महाभयकरकष्टान् कष्टतरान् असाध्यांश्च रोगान् दूरीकुर्वति जर्मनदेशे लवेंडरवर्तिकया रोगान् दूरीकुर्वन्ति। पारसीयाः यज्ञ कुर्वन्ति । जर्नेल किङ्ग आई, एम, एस, सेनेटरी कमिश्नरमहोदया "प्यूवानिकालेग" नामकपुस्तके लिखति सुगन्धौषधधूमेन महामारीयक्ष्माद्याः सक्रामका असाध्यतमा रोगाश्च नश्यंति ।

इत्थप्रकारेण प्राचीनकाले कीटाणुनाशकौषधिभिः यज्ञेन च यक्ष्मणः चिकित्सा भवति स्म ।

यज्ञधूमेन वायुमंडलं शुध्यति तेन रोगा अवरुध्यन्ते। अतः यज्ञेनैव यक्ष्मणः अवरोध कुर्वन्ति स्म । साम्प्रतं तत्स्थाने बी, सी, जी, प्रयोज्यते येन रोगाः विवर्धन्ते ।

---

# संस्कृतस्य वैशिष्ट्यम्

[ पं० मुनिदेव उपाध्यायः काव्यतीर्थ, धार, मध्यभारत ]

[असुबोधशैल्या लिखितोऽप्ययं लेखः प्रेरणाप्रद इति पाठकानां पुरतः प्रकाश्यते--सपा०]

पातञ्जलयोगशास्त्रे "प्रतिपादितमस्ति—भोगापवर्गार्थं दृश्यम्", इयं विविधा विचित्रा च सृष्टिः "परमेश्वरेण रचिता सा भोगार्थमपवर्गार्थञ्च । यदि मनुष्यशरीरं गृहीत्वा भोगपरायणो भूत्वा श्रेयसार्थमपवर्गार्थं न प्रयतते तर्हि जन्मधारणस्य सार्थकता न विद्यते । श्रीमता भगवता कपिलाचार्येण सांख्यतन्त्रे प्रथमसूत्रे लिखितम्—"त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" आध्यात्मिकाधिभौतिकाधिदैविकेति तिस्रो विधा यस्य तत् त्रिविधं दुःखञ्चेति त्रिविधदुःखं तस्य निःशेषतो निवृत्तिः सोऽत्यन्तपुरुषार्थः।

श्रीमता भगवता शङ्कराचार्येणापि विवेकचूडामणौ प्रोक्तम् "दुर्लभं त्रयमेतद् दैवानुग्रहहेतुकम्, ।मनुष्यत्वं मुमुक्षुत्वं महाजनसश्रयः, अस्मिन् संसारे मनुष्यशरीरं विधार्य मोक्षाय यः न चेष्टते वृथैव तस्य जन्म" श्रीमता भगवता कणादेनापि वैशेषिके उक्तम्—इहामुत्र वाऽभीष्टोदयः, त्रिविधदुःखात्यन्तनिवृत्तिलक्षणा मुक्तिर्निःश्रेयसम्। तत्र यस्मिन्नमुत्र लोके सर्वमपि श्रेयः कल्याणं परिसमाप्यते न किञ्चिदपि परिशेषं तिष्ठति स धर्मः।

"तद्वचनादाम्नायस्य प्रामाण्यम्"—तस्य कर्त्तव्याकर्त्तव्यरूपस्य विधिनिषेधस्वरूपस्य प्रमाणं वेदः। महर्षिमनुना स्वस्मृतौ विहितम्।

"वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः।

तद्धि कुर्वन् यथाशक्त्या प्राप्नोति परमां गतिम्।।"

तत्र परमेश्वरवचनत्वेन वेदस्य प्रामाण्यमङ्गीकृतम्—'हिताहितबोधकत्वं धर्माधर्मनिरूपकश्चाम्नायो वेद', स वेदः संस्कृतभाषायामथ च संस्कृतमन्तरेण कथं यथायथं ज्ञायते? विशिष्टज्ञानरताः वयं भवेम अन्यत्र मनुना प्रत्यपादि यद् वेदादेव सर्वं सिध्यति। इदमेव कारणमस्ति संस्कृतं देववाणी इति उच्यते। यथार्थतया परंपरया परमेश्वरोऽस्माकं पिता माता च, तस्य देवस्य जगन्मातुः भाषा संस्कृतभाषा, अपि च मातृभाषापदयोग्या, वेदस्याम्नायो वाक्यम्, 'त्वं हि नः पिता वसो, त्वं माता शतक्रतो।' अतो मातृभाषापदवाच्या यथार्थेन वेदभाषा, अन्याः भाषाः प्रतिच्छायारूपकाश्च।

ऋग्वेदे समायातम्

ओं स्तुता मया वरदा वेदमाता प्रचोदयन्तां पावमानी द्विजानाम्, आयुः प्राणं, प्रजापतिं, द्रविणं कीर्तिं स्तुता व्रजत ब्रह्मलोकम्।

वेदभाषा (संस्कृत) अस्माकं माता, धर्माधर्मौ विहिताविहितौ च सर्गकालतः चोदयति प्रेरयति चास्मात् कारणाद्, पतञ्जलिमुनिनोक्तम्—"स पूर्वेषामपि गुरुः कालेनानवच्छेदात्। स एवेश्वरो भाषाज्ञानादिप्रकाशकत्वेन—अग्निवायुसूर्यादि महर्षीणामपि गुरुः। उपनिषदि समायातं परापरारूपेण भेदेन च द्वे विधे वर्त्तते, परा विद्या, ब्रह्मविद्या यया तदक्षरं विनाशविरहितमधिगम्यते। अपरा विद्या लौकिकी भौतिकज्ञानम्।

# एको रसः करुण एव

[ ले० श्रीधरप्रसादपन्त , श्रीदुग्धेश्वरसस्कृतकालेज, पीलीभीत, उत्तरप्रदेश ]

कल्पनाजन्य-जगज्जीवन-जाले सुखदुःखयोः महान् प्रभावो विद्यते । वस्तुतो दु खस्यैव सहानुभूति करुणारस प्रधानतया ददाति । यद्यपि मनोवैज्ञानिक-दृष्ट्या सुखेन प्रसन्नता भृशं जायते किन्तु तेनैव सार्धं विलासिताऽपि समुत्पद्यते ।

नवसख्यकरसेषु करुण एव रसं शास्त्रवेत्तारो विद्वज्जनाः शीर्पस्थानाधिकारिण कथयन्ति । यद्यपि मतेऽस्मिन् विभिन्न-सिद्धान्ताः सन्ति विद्वद्गणेषु, तथापि मताधिक्येनाऽयमेव रसः प्रमुखतमो वर्तते । कविराजभवभूतिकवेः 'उत्तररामचरित' नामधेये महाकाव्ये करुणारसस्यैव प्रधानता परिलक्ष्यते ।

प्रायेण सर्वेषु देशकालेषु करुणायाः प्राधान्य-मासीत् । अस्मिन्भारतेवर्पे तु काव्यस्योद्गमः करुणाया एव प्रादुर्बभूव । कविता-वनिता कान्तस्य महर्षि-वाल्मीकेः करुणाकलितकोमलहृदयेन कामविह्वल-क्रौञ्चयो एकतरस्य, व्याधद्वारा नृशसवधकारणेन कवित्वशक्तिः प्राप्ताऽभूत् ।

यथा—

'मा निषाद प्रतिष्ठां त्वमगमः शाश्वती समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥

यस्यां करुणायां वाल्मीकीयरामायणस्य प्रादुर्भावो जातस्तस्या अन्तस्रोतेषु विजयोल्लासावपि प्रवाहितौ

---

वर्त्तमानकाले भौतिकज्ञानस्य पराकाष्ठा प्रतीयते किन्तु आत्मज्ञानशून्याः जनाः सदाचारविरहिताः कूट-नीत्यवलम्बिन विद्वेषप्रियजनाः परस्पर कलह कुर्वन्तः सन्तः प्राणिसहारं सदा चिन्तयन्ति च प्रत्यक्ष-मिदम् ।

पुराकाले यदा वेदविद्यापठनपाठनमासीत् तदा सप्तमर्यादां पालयन्तिस्म,यथा निरुक्ते यास्कमुनिना वेद-मन्त्रस्य प्रतीकमादाय लिखितम्—"स्तेय, तल्पारोहणम् ब्रह्महत्यां, सुरापाण दुष्कृतस्य कर्मणः पुनः पुनः सेवां पातके अनृतोद्यामिति वैदिककालत युधिष्ठिरकालपर्यन्तं वैदिकमर्यादापालनेन अस्माकं राष्ट्रस्य अतीव उत्कर्ष. आसीत् । अपरञ्च वैदिकशिक्षाऽभावेन सर्वे पतनोन्मुखाः जाताः, यत्र तत्र सर्वत्र राष्ट्रे सम्प्रति अशान्तिर्दृश्यते । प्रत्यक्षमिदम् वेदमार्गत्यागस्य कुफलम् – वेदपरायणैः भवितव्य सदा शान्तिपथेच्छुकैर्जनैः अथ च सदा वेदविद्योपासकाः भवेयुः, वेदविद्यामन्तरेण कुतः शान्ति , शान्तिविहीनाः कथ सुखिनः भवेयुः, वेदाध्ययनशीलानां संस्कृतमेव द्वारम् । यथा कस्मिश्चिद् गृहे द्वारमन्तरेण प्रवेशमसम्भव तथा कथ सस्कृतं विना वेदे प्रवृत्तिः स्यात् ।

'निरुक्ते विहितम, षडङ्गो वेदोऽध्येतव्य', एष एव प्रकारो वेदाध्ययनस्य, वेदस्य षडङ्गानि संस्कृतभापा-यामतः संस्कृतपठनस्य पाठनस्य च अत्यन्तमावश्यकता वर्तते ।

समुपलक्ष्येते। रामवनवासम् सीताहरणम्, लक्ष्मण-शक्तिस्तथा सीतापरित्यागादयः मार्मिका प्रसङ्गाः करुणाया स्निग्धधारया रसार्द्राः सन्ति।

महाभारते यद्यपि रणक्षेत्रस्य रौद्रताण्डवं श्रूयते, तथापि तस्मिन् विजित-विजेतॄणामुभयपक्षीयकरुणायाः साम्राज्यमासीत्। वीरार्जुनहृदये मानवीय-कोमलतायाः नाशः श्रीकृष्णस्य कर्तव्योपदेशस्यैव फलमासीत्, धर्मराड्युधिष्ठिरादयः पञ्चपाण्डवाः—कथं रुधिररञ्जित-साम्राज्यं नोपभुक्तवन्तः ?, करुणाया एव भावस्तानवरुद्धवान्।

नैषधकाव्ये तु करुणा विशेषरूपेण राजते। राजहंसो राजानं नल प्रति सकरुणं कथयति:—

"मदेकपुत्रा जननी जरातुरा
नवप्रसूतिर्वरटा तपस्विनी,
गतिस्तयोरेकजनस्तमर्दयन्नहो,
विधे। कथ त्वां करुणा रुणद्धि न।"

भवभूतेः 'उत्तररामचरित'काव्ये सीताहरणानन्तरं शोकातुरो रामः स्वशोक प्रकटयन्कथयति—

'हा हा देवि। स्फुटति हृदयं ध्वंसते देहबन्धः,
शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा,
विश्वङ् मोहः स्थगयति कथं मन्दभाग्यः करोमि॥"

न केवलं भारतीयकाव्येषु करुणा परिदृश्यते, अपितु विदेशीयकाव्यगीतेष्वपि रसोऽयमुपलक्ष्यते, सोफोक्लीज - यूरिपिडीसप्रमुखकवीनां प्रतिभा, दुःखान्तनाटक लेखनेष्वेव विराजते।

महाकवि—कालिदास-विरचित 'अभिज्ञानशाकुन्तलम्' यद्यपि सुखान्त नाटकः तथापि तस्मिन् शाप-वश-परित्यक्तानारीहृदयस्य मर्ममयी वेदना दीर्घ-निश्वासाना मुष्णस्पर्शे प्राप्यते, महाकवेः 'शाकुन्तलम्' सर्वोत्कृष्टा कृतिरस्ति।

विश्वस्य प्रमुखतमासु भाषासु अस्यानुवादोऽभवत्। केनापि कविना उक्तिवैचित्र्येण उक्तम्—

"कालिदासस्य सर्वस्वमभिज्ञान शाकुन्तलम्"

महाकविभवभूतेः कविता तु पाषाणद्रावणकारुण्येनैव अगाधा संस्कृतसाहित्यस्य विभूतिः संजाता।

विदेशीयकविसम्राजः शेक्सपीयरमहाशयस्य 'ओथेलो' हैमलेटादि, नाटकेषु मानवहृदयस्य विषाद-मयी छाया करुणारूपेण शोभते।

हिन्दी-साहित्य-गगनस्य रविशशिनोः सूरतुलस्योः कविनाः करुणारसेनोताः प्रोताः सन्ति। आधुनिक काव्यसाहित्येषु करुणा विशेषेण नृत्यति।

न केवलं काव्ये, अपितु धर्मे अपि करुणा परिलक्ष्यते।

अतोऽस्मिन् विकटसमयेऽपि करुणायाः पालनं कर्तव्यम्, करुणाऽभावे तु दैन्यदारिद्र्यक्लेशात्याचारादीनि दुष्कर्माणि भविष्यन्ति।

बालभारती—

# एका वाणी सत्या

( ले० विद्याभूषणः प० श्रीगणेशरामशर्मा, साहित्यरत्नम , झालावाड )

एकस्मिन् समये क्वचित् द्वौ सुहृदौ परस्परं वार्तालापं अकुरुताम्। प्रसङ्गात् तयोः मध्ये एकेन उक्तम्—बृद्धानां परमज्ञानवता अनुभविना पण्डितानां कथनानुसारं एतत् श्रूयते यत् अत्र लोके मनुष्यः दिवा रात्रौ च यत् यत् भाषते तत्र प्रत्येकस्य जनस्य मुखात् निर्गतेषु वचनेषु एक वाक्य सत्य भवति। मनुष्यस्य ज्ञानं सान्त अल्प च भवति तस्मात् सः न जानाति निश्चयात् यत् तस्य मुखात् निर्गतासु वाणीषु कदा कि बचनं सत्य भवति तस्य च वाक्यस्य क्व नु कः प्रभावः भवति। परन्तु एतावत् तु ध्रुव सत्यं यत् एकस्मात् सूर्योदयात् पुनः द्वितीय सूर्योदय यावत् अष्टप्रहरेषु मनुष्यस्य मुखात् एक वाक्यं तु अवश्यमेव सत्यं निर्गच्छति तस्य प्रभाव. फल चापि नूनं भवति एव।"

एवं स्वमित्रस्य कथन श्रुत्वा अन्येन मित्रेण चिन्तित यत् अस्य विषयस्य सत्यासत्यनिर्णयस्तु अवश्यमेव करणीयः। बहु विचार कृत्वा स क्रियात्मकेन प्रयोगेण तथ्यातथ्यं परीक्षितुं एकां योजनां रचयामास। तथा हि—एकशेरभारं चतुष्कोण ताम्रस्य धातोः पिण्डं नीत्वा सः उषसि शीघ्रमेव गहनं वनं जगाम। तत्र गत्वा सः एकान्ते स्थित्वा तं ताम्रपिण्डं प्रति 'सुवर्णं भूयाः !' इति पुन पुनः एकमेव वाक्यं वदन् स्थितः। सः स्वमनसि इत्थ विचारयामास 'यदि रात्रिन्दिवं उच्चार्यमाणेषु एक वाक्यं सत्य भवति तदा अयं ताम्रपिण्डः, मदीयेन एकस्यैव वाक्यस्य पुनः पुनः उच्चारेणन अवश्यमेवात्र रूपान्तरितः बहुमूल्यं सुवर्णं भवेत् एव' इति।

अथ मुहुर्मुहुः एकमेव वाक्यं 'सुवर्णं भूयाः !' इति उच्चारयन् सः दिनस्य चतुरः प्रहरान् अत्यवाहयत्। परं स ताम्रपिण्डस्तु न सूर्यास्त यावत् सुवर्णत्वे परिणतः। प्रदोषे जाते, शोभितायां रागारुणायां सन्ध्यायां, विराजिते च निर्मलाकाशे चन्द्रदेवे, देदीप्यमानेषु तरलतरतारकपुञ्जेषु, विभातायां च रजन्या सः पुन धैर्य अवलम्ब्य तं ताम्रपिण्डं प्रति 'सुवर्णमयो भव !' इति साध्यवसायं पुनः पुनः वदन् तस्थौ।

इत्थं कुर्वतः तस्य रात्र्याः त्रय, प्रहरा व्यतीताः परं स ताम्रपिण्डस्तु यथापूर्वम् अतिष्ठत्। त ताम्रपिण्ड सुवर्णत्वे अपरिवर्तितं दृष्ट्वा सः किंचिदिव निराशः अभवत्। अशान्ति, निराशां, खेदं च अनुभवन् अपि त ताम्रपिण्ड प्रति 'सुवर्णे परिवर्तस्व !' इति एकमेव वाक्यं वारं वार उच्चारणपरः तस्थौ।

यदा सः प्रभातां रजनी आलोकत, पूर्वक्षितिजे उपसः अरुणं प्रकाशं अपश्यत्, पक्षिणां कलरव च यत्र तत्र अशृणोत् तदासौ प्रायः पूर्णतया निराशोऽभूत्। यदा सः सूर्योदयस्य समयं समीपं आगच्छन्तं अपश्यत् तदा स स्वमनसि शेषामपि च आशाकणिकां अत्यजत्। रात्रौ जागरणेन खिन्न क्षुधा तृषा क्षामः, परिश्रमेण च क्लान्तः भूत्वा सः भृशं अक्रुध्यत्। क्रोधस्य आवेशवशात् स तं सुवर्णसिद्धेः प्रयोगं उपसहरन् इव तत्र स्वसम्मुखं स्थापितं तं ताम्रपिण्डं प्रतिवीक्ष्य तं च सम्बोध्य प्रोच्चैः उवाचः—'अरे, जड ! ताम्रपिण्ड !! यदि त्वं सुवर्णरूपं न धत्से तदा रजतमयः भव !' इति। तस्य तद्वाक्यस्य उच्चारणसमकालमेव स

# सम्पादकीयम्

## संस्कृतं च केन्द्रीयशिक्षामन्त्रालयश्च

सम्कृतभाषासेवकैर्बहोः कालात्पूर्वं तदिदं परमोत्साहेन पठितमासीद् यत् पञ्चाम्बुप्रदेशीये कुरुक्षेत्रे 'संस्कृतविश्वविद्यालयः' भारतसर्वकारद्वारा नचिरादेव संस्थापितो भवेत्। 'संस्कृतरत्नाकर'प्रभृतिभिः पत्रैश्चातितमामाशापूर्णया दृष्ट्या तदिदं प्रतीक्षितमासीद् यत्सोऽयं विश्वविद्यालयस्त्वरितमेव भारतवसुन्धरामलंकुर्यात्। यतो हि जनतन्त्राधिष्ठिते स्वतन्त्रेऽप्यस्मिन् भारते संस्कृतस्य स्वतन्त्रो विश्वविद्यालयो नैकतमोऽप्यस्ति, यदा च विदेशीयभाषाया आङ्गलभाषायाः प्रतिप्रान्तमेव विराजन्ते विश्वविद्यालयाः। अतएव संमिलितैः सर्वैरेव संस्कृतानुरागिभिः संभूय भारतराजतन्त्रस्य सविधे प्रार्थना चिराद्क्रियत यत् आर्याणां जीवनभूतायाः संस्कृतभाषाया विश्वविद्यालयो न चिरादेव संस्थापनीय इति।

गतेऽस्मिन् अखिलभारतीये संस्कृतसाहित्यसमेलनस्य द्वाविंशतितमेऽधिवेशनेऽपि संमिलितैः सर्वैरपि सुप्रतिष्ठितैः संस्कृतसेवकैः संस्कृतविश्वविद्यालयविषयकः प्रस्तावः पारितोऽभूत्। अत्र हि वित्तमन्त्रिणः श्रीदेशमुखमहाभागाः प्रधानाध्यक्षपदममण्डयन्। एतस्य विश्वविद्यालयस्य संस्थापनप्रयत्नार्थं स्वामी श्रीसत्यानन्दमहाभागेनापि सुबहु परिश्रान्तमासीत्। मध्ये मध्ये, तदिमे सुप्रियसंवादा अप्यश्रूयन्त यत् पञ्चाम्बुप्रदेशीयेन सर्वकारेण विश्वविद्यालयस्थापनमिदमनुमतमपीति। अतएव प्रत्येकस्य संस्कृतानुरागिणः सेयं सुमहती प्रत्याशाऽऽसीद् यत् अचिरादेव "संस्कृतविश्वविद्यालयः"

---

ताम्रपिण्डः भास्वरस्य शुद्धस्य अतिमहर्घस्य देदीप्यमानस्य च रजतस्य रूपे क्षणात् परिवर्तितः।

अधुना तं ताम्रपिण्ड रजतरूपे परिणतं दृष्ट्वा सः मनसि इत्थं पश्चात्तापं कर्तुं आरभत—अहो मे धैर्यच्युतिः! अहो मे कातरत्वम्!! अहो मम आत्मविश्वासदौर्बल्यम्!!! हा, हन्त! हन्त!! दुर्भाग्येन वञ्चितोऽहम्!!! केवलं एक एव वाक्यं अवशिष्यते स्म

परं मया भाग्यहीनेन धैर्यं परित्यक्तम्। नो चेत् अयं ताम्रपिण्डः शुद्धं कलधौतकान्तं महाभूयं सुवर्णं अभविष्यत् नूनम्। धैर्याभावे मया सिद्धोऽप्ययं प्रयोगः भ्रष्टतां नीतः! अहह!! अधुना किं करोमि क्व च गच्छामि, कं पृच्छामि अहं मन्दभाग्यः!!!' इति एवंविधान् अनेकान् विलापकलापान् कुर्वाणः—'सर्वस्यापि विनाशकालसमये ह्यर्द्धं त्यजेत्पण्डितः!' इतिवत् कथमपि स्वमनसः समाधानं कृत्वा तं सद्योजातं रजतपिण्डं नीत्वा स्वगृहं ययौ।

अनया वार्तया वयं काश्चित् बहुमूल्याः शिक्षाः लभामहे। प्रथमा शिक्षा तु इयं यत् मनुष्यः रात्रिन्दिवं यावत् यत् किमपि च भाषते तत्र एका वाणी सत्या भवति। द्वितीया शिक्षा यद्धि धैर्याभावे सिद्धः अपि अर्थः क्षणात् विनश्यति। तृतीया शिक्षा यत् पुरुषः कियन्तं अपि परिश्रमं घोरं पुरुषार्थं वा कामं करोतु परं भाग्यात् अधिकं किमपि नो लभते। चतुर्थी शिक्षा यद्धि मनुष्येण विचार्य वचनं उच्चार्यम् यतः न ज्ञायते कदा का वाणी शुभा अशुभा वा मुखात् निर्गच्छेत् विश्वेदेवा अन्तरिक्षे 'तथास्तु' 'तथास्तु' इति वदन्तः तां वाणीं सत्यां प्रमाणयेयुः। इति।

—

प्रतिष्ठितो भवेत्। किन्तु 'हिन्दुस्तानटाइम्स' पत्रादिदं प्रमोदवृत्तं मूलत एव सचूर्णितमेव सपद्यते।

तत्र हि संस्कृतसेवकैः सुमहता विषादेन तदिद वृत्तं पठित यत्—श्रीमौलानाआजादमहोदयस्य मन्त्रालयेन संस्कृतविश्वविद्यालयस्य कार्यक्रमः स्थगितः कृतः।" हन्त, यस्य कृते सपूर्णभारतीयानामाशापूर्णा दृष्टिः सर्वतोऽप्यत्र संलग्नाऽभूत् तस्यैव एवं परिस्थितिर्भवेत्? श्रीमौलानाआजादमहाभागः आर्यदेशस्यास्य भारतस्य सर्वतोऽपि प्रमुखः शिक्षाकर्णधारः। स हि आर्याणामादिभाषायाः संस्कृतसरस्वत्याः प्रकाण्डपण्डितो न भवेत्तथापि सस्कृतस्य सामान्यतः परिज्ञाता त्ववश्यं भवेदेव इति हि साधारणबुद्धिरपि जनो विश्वसिति स्म। किन्त्वस्मिन् विश्वासे किञ्चिदन्तरायभूतमिवाऽऽलोक्यते। पूर्वोक्तात् हिन्दुस्थानटाइम्सपत्रादेव पाठकैरवगत यत्–'जगद्विख्यात श्रीरवीन्द्रनाथटागोरमहोदयद्वारा सुप्रतिष्ठितस्य विश्वभारती-विश्वविद्यालयस्य प्रमुखवाक्यम् ('मोटो') "सत्यं-शिव सुन्दरम्" इति हि आजादमहाभागेन कारणेनाऽनेन निराकृतं यत् एतस्मिन् 'शिवम्' इति पदं हिन्दूदेवतायाः शिवस्य बोधकम्। अतएव साम्प्रदायिकं, ततश्च नेद वर्तमानकाले स्वीकर्तुमर्हम्" इति। हन्त! कोयमगाधो ज्ञानमहिमा'!!

'सत्य शिवं सुन्दरम्' इति वाक्य संप्रदायगन्धशून्यैस्तटस्थैरप्युपादीयते। कि बहुना, 'थीयोसोफिस्ट' महाभागा अपि तदिदं वाक्य सादरमुद्धरन्ति, घोषयन्ति। अद्य अस्मिन् वाक्ये 'शिवस्य' शकरस्य भगवतः कथमवतारः समभूत्? अस्तु

सस्कृतसेवका निर्निमेषया दृशा पश्यन्ति, कर्णौ च सावधानमायोजयन्ति यत् सोयं संवादो मृषाभूतः सिध्येत् संस्कृतविश्वविद्यालयश्च त्वरिततमं सुप्रतिष्ठितो भवेत्।

**जयपुरे जनसंघस्य प्रतिनिधिसभा**—२१ अप्रेल नारिकायां भारतीयजनसंघस्य प्रतिनिधिसभाया वार्षिकाधिवेशनं रामलीलामैदानस्थाने ससमारोह समघटत। एतस्या अध्यक्षः श्री देवप्रसादघोपः आसीत्। अन्यान्यावश्यककार्याणां मध्ये अध्यक्षीयं भाषणमपि प्रमुखमभूत। अत्र हि घोपमहाभागेन सामयिकराजनैतिकविषयाणां मार्मिको विमर्शोऽभूत् कृतः। एतेन "कल्याण"राज्यस्यालोचनां कुर्वाणेनोक्तं यत् पूर्वं क्षुधा म्रियमाणायाः परोलक्षजनतायाः कृते भोजनस्य, चिकित्सायाः शिक्षायाश्च प्रबन्ध आवश्यकः, तदनन्तरं महामहतीनां योजनानां निर्माणं, विदेशीयान् प्रभावयितुं भूयसो द्रव्यराशिव्ययस्य प्रदर्शन च भवेत्। एतस्याऽधिको भागो नेहरूसर्वकारस्यालोचनायां, पूर्ववङ्गाद्विवासितानां हिन्दूपरिवाराणां दीर्घसंख्यायां भारते समागमनस्य कारणानां मीमांसायां राज्यपुनर्घटनायोगस्य समीक्षायां चोक्तोऽभूत्। अन्ते घोपमहाशयेन सम्यगुक्तमासीत् यत् नेहरूमहाशयो हिन्दुत्वस्य विरोधं भयं च परिहृत्य पुनः हिन्दुसस्कृतेः स्वर्णसिद्धान्तानामनुसरणं कुर्यादित्यहं प्रार्थये। पुरा हि राज्ञां शासनस्यायमादर्शोऽभूत्—

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्,
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः।
प्रजानां विनयाधानाद्रक्षणाद् भरणादपि।
स पिता, पितरस्तासां केवलं जन्महेतवः।

(कालिदासः)

## संस्कृतसमाचाराः--

**तोराबाट्यां संस्कृत--सम्मेलनम्**— राजस्थान-संस्कृतसाहित्यसम्मेलनस्य शाखारूपेण उपजिला-तोराबाट्यां संस्कृतसाहित्यसम्मेलनं ११ अप्रेलदिने नीमकाथानाग्रामे, श्रीहेमचन्द्रशास्त्रिणां सभापतित्वे सम्पन्नम्। अत्र प्रातः संस्कृतविकाससम्बन्धे विमर्शो विहितः। संस्कृतविकाससमित्या प्रकाशितायाः प्रश्नावल्या उपरि विचारः सजातः। प्यारेमोहनशास्त्रिणः. स्वागतभाषण, मण्डनमिश्रस्योद्‌घाटनभाषण, प्रस्तावाष्टकस्य स्वीकृतिश्च समभूत्। प्रस्तावेष्वेषु हाईस्कूलपरीक्षायां संस्कृतस्यानिवार्यता, संस्कृताध्यापकाना फिक्सेशन प्रशिक्षण च, संस्कृतछात्राणां कृते वृत्तिप्रदान, संस्कृतविभागस्यायुर्वेदवत् पृथक् स्थापना--इत्यादयो मुख्यमुल्लेखनीया आसन्। साय सार्वजनिकस्थाने सभा समायोजिता यस्या बालासहायशर्मणां नाजिममहोदयानामध्यक्षत्वे संस्कृतप्रचारविषये विदुषा भाषणान्यभूवन्।

अग्रिमवर्षकृते श्रीगोविन्ददेवजोशी सभापतिः श्रीराधामोहनशर्मा च मन्त्री निर्वाचितौ।

---

भागवतस्यायं श्लोको नेहरूमहाभागेनाऽऽलोचयितव्यः—

"यावद् भ्रियेत जठरं तावत स्वत्वं हि देहिनाम्,
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति।"

अस्माभिः सर्वैरपि—'सगच्छध्वं, सवदध्व, सं वो मनांसि जानताम्" इति वेदमन्त्र उद्‌घोषयितव्यः।

——

**अखिलभारतीयसंस्कृतसाहित्यसंमेलनस्य त्रयोविंशमधिवेशनम्**—

गतसचिकायां पाठकमहाभागैः पठित स्याद् "यत् अ० भा० संस्कृतसाहित्यसंमेलनस्य त्रयोविंशं यदिदमधिवेशनं मोहमय्यां भविष्यति तद्धि मेमासस्य प्रथमे द्वितीये वा सप्ताहे सपद्येत।' एतदपि तस्मिन् समये नाऽभून्निश्चितं यत् अधिवेशनस्य अध्यक्षपदं को वा महाभागो मण्डयिष्यतीति। किन्तु देहलीनगरस्थात् संमेलनकार्यालयात् कार्यालयमन्त्रिणः श्रीलीलाधरशर्ममहाभागस्य ३ मई लिखितं पत्र साम्प्रतमेव भारतीकार्यालये प्राप्तम्। तदनुसारमिदमधिवेशन जूनमासस्य २-३-४ तारिकासु मोहमय्यां सपद्येत। एतस्याऽध्यक्षपदं पुरी गोवर्द्धनपीठस्य वयोवृद्धाः प्रसिद्धविद्वांसः श्रीजगद्‌गुरुशंकराचार्याः श्रीभारतीकृष्णतीर्थमहाभागा अलंकरिष्यन्ति। भारतस्य प्रसिद्धपुरातत्त्वज्ञः श्रीपाददामोदरशास्त्री सातवलेकरमहोदयःस्वागताध्यक्षः एवं ल० म० चक्रदेवमहाभागोऽस्य स्वागतमन्त्री निर्वाचितोऽस्ति। मोहमयीप्रान्तस्य राज्यपालः श्रीहरिकृष्णमेहताबमहोदयश्च महोत्सवस्योद्‌घाटनं करिष्यति।

स्मरेयु. पाठकमहाभागा यद् द्वाविंशतितमे देहलीसंमेलने स्वीकृतस्य प्रस्तावस्याऽनुसारं संस्कृताऽनुसधानमन्दिरस्य स्थापना प्रस्तुताऽऽसीत्। तदनुसारं केन्द्रीयशासनस्य जनतायाश्च सहयोगेन देहल्यामनुसधानमन्दिरस्य स्थापनार्थं समेलनेन पूर्णः प्रयत्नोऽद्यावधि कृतः। शीघ्रमेव मन्दिरस्याऽस्य शिलान्यासः संपाद्येत। कार्येऽस्मिन् समेलनकार्याध्यक्षः श्रीनरहरिविष्णुगाडगिलमहाभागः, मन्त्री श्रीकेदारनाथसारस्वतमहोदयश्च भूयस्तरां प्रयत्नशीलौ।

मोहमय्यधिवेशनेऽस्मिन् भारतीयसंस्कृतशिक्षण-पद्धतेर्देशकालोपयोगितासंपादनार्थं प्रमुखयोजना प्रस्तूयेत । एतदतिरिक्तम्-केन्द्रीयसंस्कृतविश्वविद्यालयस्य, पुस्तकालयस्य, प्रकाशनविभागस्य तथा अन्यान्येषामावश्यककार्याणां योजनास्तत्रोपस्थिताः क्रियेरन् । ग्रीष्मावकाशे भाविनोऽस्याधिवेशनस्याऽऽयोजना विशालरूपे प्रारब्धाऽस्ति । भारतस्य सर्वेभ्योऽपि प्रान्तेभ्यः सहस्रपरिमिताः प्रतिनिधयः संमिलेयुरिति कार्याधिकृता आशासते । प्रतिनिधीना यातायातार्थं बाष्पयानविभागतो यात्राव्यये न्यूनताकरणमपि (रेलवे कन्सेशन) क्रियते । वर्तमानाधिवेशने प्रतिनिधिशुल्कं पञ्चमुद्रा नियतीकृताः । सम्मेलनप्रतिनिधिभ्यो मुम्बईनिकटस्थानामैतिहासिकदर्शनीयस्थानानां प्रदर्शनस्याऽपि व्यवस्था कृता । अधिवेशने प्राचीनसस्कृतपुस्तकानां प्रदर्शनी, मृच्छकटिकनाटकस्याभिनयः, एतदादेरपि योजना चिकीर्षिता सप्रति । संमेलनसंबन्धिसर्वविध-विषयपरिज्ञानार्थम् –

स्वागतमन्त्री–'अ० भा० संस्कृतसाहित्यसमेलनस्य [ २३ अधिवेशनम् ]

स्वागतसमितिः, ३१८ चर्नीरोड, बम्बई ४' स्थाने पत्रव्यवहार कार्य ।

बीकानेरनगरे संस्कृतसमितेरागमनम् :—

२८ अप्रेलदिनं प्रात. राजस्थानसर्वकारनियमिताया संस्कृतसमित्याः सदस्या. बीकानेरस्थपण्डितैः सहसङ्गत्य विचारविनिमयं कर्तुं बीकानेरनगरं प्रापुः । समित्या शार्दूलसस्कृतविद्यापीठनिरीक्षणं कृतम् । सन्तोषः प्रकटितः । सायम् ६ वादने बीकानेरविदुषां महती सभा समभिलत् यत्र समितिप्रचारितायाः प्रश्नावल्या प्रदत्तानि विद्वद्भिरुत्तराणि । स्मृतिपत्रञ्च श्रीविद्याधरशास्त्रिणा समर्पितम् । रत्नदुर्गस्थैः श्रीकृष्णचन्द्रशास्त्रिभि, उदयवीरशास्त्रिभि, भगवानदास हरियाणा, ब्रजलाल बी ए श्री स्वर्णलता अग्रवाल एम ए, इत्यादिभि सभाया भागो गृहीतः ।

२६ अप्रेलदिने प्रात द्वितीया सभाऽभूद्यत्र श्रीलक्ष्मीलालजोशि–चन्द्रशेखरशास्त्रि प्रभृतिसदस्यैः, प्रो मूलचन्द–रामनारायण आचार्यप्रभृतिभिर्विद्वद्भिश्च स्वविचारा प्रकटिता । विद्याधरशास्त्रिभिः स्वकीया पंचवर्षीया योजना स्थापिता ।

**संस्कृतवाग्विर्वाधिन्यां कविगोष्ठी विद्वद्गोष्ठी च :**—२३ अप्रेलदिवसे सायमष्टवादनसमये एक कविसम्मेलनमभूदस्मिन् श्रीनरहरिभट्ट-श्रीद्विजेन्द्रलाल-शर्म एम० ए०–नारायणकाङ्कर–दीनानाथत्रिवेदि–चन्द्रशेखरशास्त्रिप्रभृतीनां कविताः, कलानाथशास्त्रि, शिवदत्तशास्त्रि प्रभृतीनां भाषणानि चाऽभूवन् । सम्मेलनाध्यक्षेण श्रीचन्द्रशेखरशास्त्रिणा स्वभाषणे संस्कृतपण्डितानां परिस्थितिमावर्ण्य सस्कृतसस्कृतेः प्रसारस्यावश्यकता सूचिता ।

एतस्य समारोहस्य दिनद्वयानन्तर २५ अप्रेलदिवसे परिषदस्तत्त्वावधाने काश्याः सुप्रसिद्धविदुषां श्रीराजेश्वरशास्त्रिणां सम्माने एका गोष्ठी अनूपशहरस्थ पं० श्रीअखिलानन्दशास्त्रिणां साभापत्ये समायोजिता । यत्र विद्वद्द्वयेन सारगर्भभाषणे प्रत्ते ।

—

# ★ सूक्ति-सुधा ★

तावद्भयाद्धि भेतव्यं यावद्भयमनागतम् ।
आगत तु भयं वीक्ष्य प्रहर्तव्यमभीतवत् ॥१॥

डर की बात से तब ही तक डरना चाहिये जब तक वह सामने नहीं आवे। भय को सामने देखकर ता निःशङ्क होकर प्रहार करना चाहिये, अपनी बहादुरी का परिचय देना चाहिए ॥१॥

हीनसेवा न कर्तव्या कर्तव्यो महदाश्रय. ।
पयोऽपि शौण्डिकीहस्ते मद्यमित्यभिधीयते ॥२॥

यदि सेवा ही करनी पड़े तो हीन पुरुष की सेवा न करे। किसी महान पुरुष का आश्रय ले। क्योंकि हीन की संगति दूसरों को भी हीन बना देती है। मद्य बेचने वाले के हाथ मे पानी भी मदिरा ही समझी जाती है ॥२॥

वैद्यानामातुर' श्रेयान व्यसनी मौनियोगिनाम् ।
विदुषां जीवनं मूर्ख. सद्वर्णो जीवनं सताम् ॥३॥

वैद्यों को रोग पीडित पुरुष प्रसन्न करता है (क्योंकि उसके द्वारा उन्हें धन मिलता है) जो नाना दुर्व्यसनों म (अथवा सकटों मे) पडा हुआ है उसको मौन साधने वाले या योगी (करामात दिखाने वाले साधु) पसन्द करते हैं (क्योंकि वही उनकी सेवा करता है।) पडितों की सेवा मूर्ख से अच्छी तरह होती है। अच्छे वर्ण ब्राह्मण आदि से सब ही सज्जनों की जीवन रक्षा होती है ॥३॥

अम्भसा भिद्यते सेतुस्तथा मन्त्रोऽप्यरक्षितः ।
पैशुन्याद्भिद्यते स्नेहो वाचा भिद्यते कातरः ॥४॥

जल से पुल टूट जाता है। किसी गुप्तमन्त्रणा की यदि रक्षा न की जाय तो वह भी फूट जाती है। चुगली से प्रेम टूट जाता है किन्तु डरपोक पुरुष वाणी मात्र से फूट जाता है ॥४॥

विश्वासप्रतिपन्नानां वञ्चने का विदग्धता ।
अङ्कमारुह्य सुप्तानां हन्तुः किं नाम पौरुषम् ॥५॥

जो विश्वास किये हुए है अर्थात् किसी के विश्वास पर भरोसा किए हुए हैं उनके ठगने मे कौन चतुरता है? जो किसी की गोदी में आकर सोये हुए हैं उनके मारने वाले की क्या बहादुरी है? ॥५॥

बहुभिर्न विरोद्धव्यं दुर्जनैः स्वजनैरपि ।
स्फुरन्तमपि नागेन्द्रं भक्षयन्ति पिपीलिकाः ॥६॥

बहु-संख्यक आदमियों के साथ विरोध नहीं करना चाहिये चाहे वह दुर्जन हो या अपने ही आदमी हों। फडफडाते हुए जहरीले सॉप को भी बहुत सख्या-वाली चीटियां खा जाती है (चाट जाती हैं) ॥६॥

# भारती

संस्कृतस्य प्रमुखं मासिकपत्रम्





आर्यसंस्कृतिसर्वस्व-संरक्षण-विचक्षणः ।
म्लेच्छमूर्छाकरो हिन्दूछत्रपो दृश्यतां शिवः ॥

वर्ष ६ | अष्टमाङ्कः | मूल्यम् वार्षिकम् ३) एकस्याङ्कस्य ।=

राजस्थान-मद्रास-मध्यप्रदेश-सौराष्ट्र-भूपाल-उत्तरप्रदेश-बिहार-पञ्चनद-आन्ध्र-सर्वकारैः स्वीकृता—

# ❀ विषय-सूची ❀



सूचना :—सर्वे ग्राहकाः सूच्यन्ते यत् पत्रव्यवहारावसरे निजग्राहकसंख्यां स्वस्मिन् पत्रे अवश्यं दर्शयेयुः। अन्यथा पत्रोत्तरे बाधा समुत्पस्यन्ते।

## —❀ "भारती" पत्रस्य उद्देश्यानि नियमाश्च ❀—

१. संस्कृतभाषायाः प्रचारः, सरलेन संस्कृतेन सामयिकानां विचाराणाम्, उत्कृष्टायाः भारतीसकविचारपरिपोषिकायाः सामग्र्याश्च समर्पणम्, अस्य पत्रस्योद्देश्यानि।

२. 'भारती' पत्रस्य वार्षिकं शुल्कं ३) रूप्यकत्रयम्।

३ मासिकपत्रमिदं प्रतिमासं पूर्णिमासु पूर्णिमायां तिथौ प्रकाशितं स्यात्।

४. एकस्यांकस्य मूल्यम् ।=) आणकषट्कम्।

सम्पादकः—
कविशिरोमणि
भट्टश्रीमथुरानाथशास्त्री
सहसम्पादक —
देवर्षिकलानाथशास्त्री B. A.
जयपुरम

# भारती

प्रबन्ध-सम्पादकः—
गिरिराजशर्माशास्त्री

भानुवद् भारतीयानां भास्वद्भवनभासिनी ।
भागीरथीव भावाढ्या भारते भातु भारती ॥

वर्षः ६ | ज्येष्ठशुक्ला १, सं० २०१३ | अङ्कः ८


## ★ धनिनम्प्रति ★


[ श्री शिवशरण झा, झाँसी ]


किं जल्पसि भो, दीन-जनाना नास्ति जगति जीवितुमधिकार: ?

सुधा-धवलितोऽय प्रासाद: ।
मधु-गोष्ठ्यै तव यत्र निषाद ॥
उपपन्नो व्यवसायैर्येषाम् ।
नानुमतस्तेषामुपकार ॥१॥

किञ्चिदकृत्वा सतत शेषे ।
नित्यं नूतनता तव वेषे ॥
परिणामोऽय श्रमस्य येषाम् ।
तेषा विषये मृतो विचार. ॥२॥

सचेत:, कुरुषे बहु-खेलम् ।
कृत्वा येषा भृशमवहेलम् ॥
तेषामेवार्थिनामश्रुत्वा ।
सत्कारो द्वारादपसार: ॥३॥

तव कोषे विलसन्ति धनानि ।
कष्टैस्तेषा यान्ति दिनानि ॥
किन्तु न किञ्चिद् वितरसि तेभ्य:
क्षुधया नश्यति तत्परिवार:॥५॥

पापोपायैर्भूमि - धनानि ।
काम कृत्वा हस्तगतानि ॥
अल पीडयसि दीनानधुना
कुपित किन्ते विभव-विकार ॥५॥

वैषम्यं काष्ठामुपयातम् ।
दूरयितुं तैरधुना ध्यातम् ॥
फलत. तुन्दिल, तव तु पुरस्तात्
न स्याद् मारुतयान-विहार. ॥६

दीनानां जठरानल-ज्वाला ।
प्रकटीभूता क्षोभ-कराला ॥
शाम्येदाहुतिमादायैव ।
अधमस्या. शान्तये प्रकार: ॥७॥

सन्ति स्थातुं नैव गृहाणि ।
भोक्तुं येषां नाप्यन्नानि ॥
नैव च वस्त्राण्यपि परिधातुम् ।
कोपस्तेषा त्वयि दुर्वार. ॥८॥

# सा विद्या या सुसंस्कारक्षमा !

( ले० प्रभाकर आपटे, बी० ए० तासगाव )

अयि विमर्शशालिनः पाठकाः । स्वातन्त्र्यकाले प्रायो वर्षदशकमनुभूतमस्माभि । प्रजातन्त्रं हि तिष्ठत्यस्म-द्राज्ययन्त्रम् । सुराज्यस्य शिल्पकारा वयमेव । विकास-मूलभूता शिक्षणपद्धतिरिति मे मतिः । अस्यामध्ययन-रीत्यामधीयमानं मां बहुविधा समस्या उपस्थिताः । सारभूतो नूनमेष प्रश्नः ।

"प्रचलितविद्यावितरणपद्धत्या अधीयमानं छात्रं, स्वजीवितस्य सर्वांगीणविकासमिच्छन्त आधुनिकी शिक्षणरीतिः समाश्वासयति वा न वा ।" इति ।

प्रथममस्या. समस्याया उत्तर मनसा नासाद्यते । आसादितं चेन्न समाधानकरं भवति । न च नेति प्रत्युत्तरं स्वीकर्तुं मनः प्रवर्तते । अखिलराष्ट्रमौलिभूत-राष्ट्रपतेरारभ्य सामान्यप्राथमिकशिक्षकपर्यन्त सर्वऽप्या-मूलाग्रपरिवर्तनवादिन' दृश्यन्ते । गुरुमुखादादाग विद्या कण्ठगता कर्तव्या, उत प्रत्यक्षप्रणालेः ( d rect method ) अंगीकरण श्रेय इत्यपि विवादविषय । ऐकान्तिकमतप्रतिपादनं न खलु श्लाघ्य, द्वयोरपि गुणदोषसभवप्रसगात । अपि सनातनगुरुकुलपद्धतेः पुनरुज्जीवन सुकरम् ? सुतरां दु साध्यमिति केचन ब्रूयुः । सत्य हि प्रतीयते । तत्रापि तद्गतगुणानामाव-श्यकता नापह्नीयते ।

दीन-प्रतिक्रियाऽग्नि सर्वम् ।
भस्मीकुर्याद् वैभव-गर्वम् ॥
समीकरणमन्तरा त्वदर्थे ।
अपर कश्चिद् नास्त्युपचार ।९॥

लोभ-घटस्ते पूर्णो जातः ।
भजन काल उपेतो भ्रात !॥
त इव कष्ट सोढु सम्प्रति ।
समुद्यतस्व, चल ससारः ॥१०

शृणु, भृशमुत्तिष्ठति युग-नाद ।
देशे प्रसरतु समता-वाद ॥
दीना अपि जीवेयुर्यस्माद् ।
लघुस्तवापि भवेद् धन-भार. ॥११॥

आचार्येषु श्रद्धा, अतीतवर्तमानसारस्वतोपासके-ष्वादरः, अध्येयविषये जिज्ञासोत्कण्ठे, एतावद्भिर्भाव-वलयैर्घटित शुचिमांगल्य ज्ञानोपासनाय सहकारिभूतम् । आपातत एव प्रभवेदिदं वायुमण्डलमिति नोचित वक्तुम् । ईदृग्वायुमंडलनिर्माणाय विद्यार्थिशिक्षकपालकविद्याक्षेत्र-सूत्रधारिणां चाहंभावत्यागपूर्वकं स्वकर्तव्याधिगमन तत्पूर्त्यै सहकार्यं चापेक्षितम् ।

केचन ब्रूयुः, "अधीतस्य ध्येयं, यो ज्ञानविकासः स हि साध्यतेऽद्यतनाध्यापनप्रकारे । प्रतिविषयपारगता अध्यापकास्तत्तद्विषयज्ञान सम्यग्वितरन्ति । एको वै गुरुरखिलविषयस्य न प्रभवति । तथापि राष्ट्रस्य घटक-भावात् प्रत्येकव्यक्तिरात्मनः सर्वांगीणविकासमर्हति । व्यावहारिकदृष्ट्या तु व्यवसायप्रवेशात्प्रागेव व्यक्तित्व-घटनायावकाशो वर्तते । असौ कालः शालेयमहाविद्या-लयीयजीवनेन व्याप्तः । 'विधात्रा निर्मितस्य, न्यास इवार्पितस्य बालस्य, पूर्णव्यक्तिमत्त्वे परिवर्तनं कर्तव्यं पित्रा, मात्रा, गुरुणा च' इतीयं पूर्वा रूढिः । एतेषां

नवजाते प्रीतिः, तस्य च वर्धमाना तेषु श्रद्धा, तस्य शील कारयतः ।

अर्थशास्त्र ( Economics ) गत-श्रमविभाग-सिद्धान्तमाश्रित्य केचन प्रत्यवतिष्ठेरन् । किं तेषां मतम् ? शिक्षण-संस्कारौ व्यक्ति जीवनस्य द्वे भिन्नेऽङ्गे । तयोरुन्नतिहेतू अन्ये संस्थे । कच्चित्सुलभस्तयोर्लाभ सर्वेभ्य. ? नैव । असंस्कृतस्य हि विद्याविशारदस्य चारित्र्य किं स्पृहणीयं भवति ? न केवल तिरस्करणीय किन्तु समाजघातकमनेकदा । उदाहरणैः को लाभ. । एकं वा द्वे वोदाहर्तव्ये । अश्लाघ्यं हि तत् । तथापि गतिसामान्यप्रपञ्चाय वदामि । पद्मविभूषणसदृशपदवीभाक् कोऽपि स्थापत्यविशारद. कतिपयदिनान्ते न्यायालये द्रव्यापहारनिमित्तमभियुक्त । कस्य सूचकमिदम् ?

अपि लक्ष्यतेऽस्मिन् दृष्टान्ते सुसंस्करण प्रथमवयसि ? चारित्र्यसंवर्धनाय सुसंस्करण नितरामावश्यकम् । 'स्वभावो दुरतिक्रम' इत्यर्धसत्यमेतत् । न तेन संस्कारक्रियाया वैतथ्यमनुमीयताम् । भगवता वासुदेवेनोक्त, "जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते" । संस्कारक्षमं बालमन । आगमीनिर्वाणान्ताः षोडश-संस्कारा स्मृतिकारैर्विहिताः । सर्वेऽपि सुसंस्कारानभिलषन्ति । पितरौ निश्चयेन स्वतोकेभ्यः शीलविकासकान् संस्कारानिच्छत. । पर तौ विद्यालयानुप्रेषणादधिकं किञ्चिदपि कर्तुं न क्षमौ । अत एव गुरुष्ववेदमुत्तरदायित्वमापतति । साधूक्तं महाकविभासेन—'बालं ह्यपत्यं गुरवे प्रदातुर्नैवापराधोऽस्ति पितुर्न मातुः—' गुरवस्तु इममुत्तरदायित्वमङ्गीकर्तुं नेच्छन्ति, न शक्नुवन्ति प्रायः । कतिपये आचार्या दिष्ट्या छात्रेषु स्निग्धा, मार्गदर्शकाः सुदक्षाश्च । परमार्थेन गुरुपदं भूषयितुमपेक्षन्ते आधुनिकाचार्याः । हन्त न साधयन्ति साफल्येन सर्वे । आचार्यस्तु दर्पण इव छात्राणामग्रे अवतिष्ठते । अविशुद्धो ह्यादर्शः कीदृक् प्रतिमां प्रतिबिम्बयेत् ? किं चानुसृत्य स्वव्यक्तित्वं तैर्घटितव्यं ? यदि त एव सिनेतारिकासु-नटनटीषु स्वनिष्ठामादध्युः छात्राणामग्रेऽभिनेतृभिः सलापे, सहवासे स्वप्रीति प्रदर्शयेयु' का गतिः स्यादनुयायिनाम् ? कीदृशो भावितोऽभावितो वा संस्कार: स्वाचरणैः शिष्यगणो प्रतिफलनमासादयेत् ? ईदृशो विचारो वर्तमानाचार्याणां चेतासीषदपि स्पृशति कच्चित् ? हिंदुसंस्कृतौ 'गुरुः' ऐहिकपारमार्थिकजीवनमार्गदर्शको भवति । आग्लभाषायामपि Philosopher and guide (तत्त्वज्ञमार्गदर्शकः) इति शब्दाभ्यां गुरुभूमिकाया उचिता व्याख्या कृताऽस्ति । राष्ट्रस्यावनतिसूचको भीषणः खलु प्रश्नः सपदि निराकरणमर्हति । अन्यथा समाजविनाशाय प्रसज्येत । ये महाशया स्वकर्तव्ये दक्षास्तेऽपि सहिष्णुतया. शालीनतया वा केचिदुदासीनतया मौनं भजन्ते न प्रतीकारं कुर्वन्ति समस्यायाः ।

अन्ये तु वाचिवीरा अन्यत् ब्रुवतेऽन्यदेव कुर्वते । शिक्षणाधिकारिण प्राय. स्वासन स्थिरीकर्तुं यतन्ते । तेषां तदेव सत्यं तद्बाह्यो ऋत यत्स्वार्थमुत्पादयति । तस्माद् विचक्षणै. स्वतन्त्रप्रज्ञै., सदिच्छमानैर्मनीषिभिः समाजधुरीणैरौदासीन्य त्याज्यम् । ते हि ह्येतां दुरवस्थां परिवर्तयितु पारयिष्यन्ति । क्रियासमयः पुरोऽवस्थितः। अन्यथा तेऽपि समाजविनाशपाप भजेयुः ।

छात्राणामपि महती कर्तव्यधारा । अस्माभिरन्तर्मुखैर्भवितव्यम् । पश्यत—

प्रत्यहं प्रत्यवेक्षेत नरश्चरितमात्मनः ।
किन्नु मे पशुभिस्तुल्यं किमु सत्पुरुषैरिह ॥

# नारीणां भोजनस्थितिः

( ले० वैद्य मूलचन्द्र बहड़, लक्ष्मणगढ )

विदितमेवैतत् अभिनवविज्ञानोन्मेषविकसितधियां सुधियां तत्रभवतां भवता यद्धि पुरुषाणां वंशपरम्परा-प्रचालने स्त्रीणामेव प्राधान्यमिति। पुरुषास्तु रेतः-सेकमात्रं कृत्वा निवर्तन्ते। तदनन्तरं नवमासपर्यन्तं गर्भस्थबालकपोषणं, प्रसवानन्तर यावत्सार्धं वर्षं स्वकीयस्तन्यपानादिना प्रियशतैरपि सतत तल्लालनं पालनं च स्त्रीकर्तृक भवति। एवंस्थिते ताभ्य· साधारण भोजन विहाय, हृद्य, द्रवं मधुरप्रायं स्निग्धं दीपनीयं संस्कृत पौष्टिकं रुचिकर भोजनमत्यावश्यकं, येन ताः स्वशरीरस्य आवश्यकतापूर्तिं कुर्वाणाः स्वय प्रहृष्टाः स्वस्थाश्च भवेयुरिति।

परतु गृहेषु भवति किमिति न कोपि दृष्टिपातमपि कर्तुं अभिलषति इति महान् खेदस्यावसरः। गृहेषु कुटुम्बिनां उच्छिष्ट पर्युषित शुष्क क्लिन्नं अन्नं स्त्रीभ्योऽर्प्यते ताश्च पुन· वराक्यः सगर्भाः सव्याधयो वा बालवत्साः विवत्सा वा कीदृश्योऽपि भवेयुरिति। आढ्येष्वपि गृहेषु सहस्रशस्तावदवलोक्यते यत् तत्रत्या योषितो घृत न भु जते न च पिबन्ति पयः, कि बहुना उष्ण भोजनमपि एता न अश्नन्ति। हन्त भोः! कथंकारं तादृग्विधदशायां स्वस्थसन्ततिसभवः संभाव्येत। इदानीं यावत्य स्त्रियो दृश्यन्ते तासु प्रायेण प्रतिशतं पञ्चसप्ततौ स्तनयोः स्तन्याभावोऽवलोक्यते। गव्येन आजेन सम्प्रति प्रचलितेन वा शुष्केन विदेशीयेन पयसा बालका· पाल्यन्ते। एतदेव कारण यत् इदानींतनाः बालकाः जन्मप्रभृति एव उदरव्याधि-जुष्टा मनोबलादिभिः दूरमपसारिता ईतिक्लान्ता इव कुसुमा विकृताकृतयः दुर्निरीक्ष्याश्च प्रतिभान्ति। वर्षगणैरपि पद्भ्यां प्रचलितुं न प्रभवति चेति। इतस्तावत् स्वस्थजननीजनीना बालकानां स्वच्छ मातृ-स्तन्यं पिबतां दशमासिकानामपि दोर्भ्यां दोर्भ्यां प्रधावतां बालकेलिः द्विषामपि चेतसि बालमुकुन्दस्मृति स्फोरयति इति महदन्तरम्। औपरिकदुग्धादाः बालकास्तु पुनः स्वल्पेनैव कालेन संसृतियात्रां समापयन्तो मया बहुशो विलोकिता·। यत्राहं तेषां पितरौ पृच्छामि यत्कि भो एतस्य मातृस्तन्य तु पर्याप्तं स्रवति ? तत्र उत्तरं मिलति महोदयाः! दुग्ध क ? बालकोत्पादस्य किञ्चित् कालानन्तरमेव दुग्धं तु शुष्कतामगमत। न विद्मः कि कारणं जातमिति। एवं इदानीं अस्माक गार्हकी व्यवस्था वरीवर्ति। वस्तुतः सत्य चेदम् यावत् स्त्रीभ्यो दुग्ध स्निग्ध वा भोजनं न लप्स्यते कुतस्तावत् सन्तति-स्वास्थ्यमिति। अतएव यदि भवन्तः स्वसन्ततीनां नैरोग्यं वाञ्छति द्रष्टुं कामयन्ते च भारतस्य प्राक्तनी-

---

एकलव्यो ध्यातव्यो येनाचेतनगुरुप्रतिमया स्वमन आधायाप्रतिहता विद्या संपादिता। तस्माद् यानि यानि गुरूणां सुचरितानि तानि तान्युपास्यानि। नो इतराणि। एतावती खलु मनोधारणा दुराराध्या छात्रेभ्यः सर्वेभ्यः। यदि वयं तेषां मन· स्ववगामहे तर्हि हि कर्णविहीन-नौकेव तेषां मनोनौका दोलायमानाऽवभासेत।

सुस्पष्टा खल्वियं समस्या। सा विद्या या सुसंस्कार-क्षमा। यदा वयं तथाविधामध्यापनपद्धति भारतवर्षे मूर्तरूपां पश्येम सुवर्णदिनमेव तत् स्यात। अचिरादेव उदेतु तत्।

# भारते संस्कृतविश्वविद्यालयोऽवश्यं स्यात्

[ ले० सत्यव्रतशर्मा, कुराली (पूर्वपचनदीय) ]

[ अधुनैव कुरुक्षेत्रे संस्कृतविश्वविद्यालयस्य शिलान्यासः सम्पन्नः। लेखकस्यानुरोध.स्वयं सफलीभूत इति सप्रमोद् सूचयामः अभिनन्दामश्च भारतसर्वकारम। विश्वविद्यालयस्थापनमिद कियदावश्यकम् इति लेखकेन साधु सन्दिष्टम्।—सम्पादकः ]

संस्कृत विश्वस्य सर्वप्राचीना भाषाऽस्ति। न केवल भारतस्य, अपितु विश्वस्य भाषा एतत्त एव लब्धजीविताः सन्ति। न परमेशियाया, योरुपस्यापि पस्तोलैटिनयोः संस्कृतस्य शब्दाः बाहुल्येन लभ्यन्ते। अयमेव हेतुः यद्फगानसर्वकारेण स्वाध्ययनक्रमे संस्कृताय दत्तमनिवार्य पदम्। भारतस्य तु समस्तानां भाषाणां प्रसविनी संस्कृतभाषैवेति जानन्त्येव सम्यग्भाषावैज्ञानिकाः। यदि नेह संस्कृताय तत्स्थानं दित्सितमस्माक नेतृभिः, तथापि भाविन्या राष्ट्रभाषाया हिन्द्याः साहित्यशब्दकोषादिप्रवर्धनार्थमस्ति संस्कृतस्य तद्विदुषां च परमावश्यकता।

संस्कृतभाषाऽर्थधर्मराजसमाजेषु समस्तासु कलासु च प्रचुर साहित्य बिभर्ति। अस्या भाषाया वेदा विश्वस्य सर्वप्राचीना ग्रन्था मन्यन्ते। उपनिषद्वेदान्तप्रतिपादितमाध्यात्मिक ज्ञानं विश्वे सर्वोत्तम वर्तते। वेदार्थप्रतिपादक कर्ममीमांसाशास्त्रमतिगहनं सुन्दरं च। वराहभास्कराद्युपज्ञाते ज्योति शास्त्रे आकाशीयखेटानां विस्तृतमध्ययनमस्ति। केचिद्विषयाः सन्तोऽपि वर्तमानकालानुपयोगिनो गहनतां याथार्थ्यं च बिभ्रति। तेषां सर्वथा लोपोऽश्रेयस्कर खेदकरश्च। न सत्यपि संस्कृतस्य राष्ट्रभाषात्वे संस्कृतविश्वविद्यालये प्राचीनं विज्ञान लब्धसंरक्षण न विलोपमेष्यति। समयानुपयोगिनोऽपि कस्यचिदसांप्रदायिकस्य व्यापकदृष्टि ख्यापयतो निर्दोषस्य विज्ञानस्याभावो न श्रेयस्कर।

संस्कृते तत्साहित्यमस्ति यत्समग्रविश्वं सत्यमानवतायाः पाठमध्यापयितु पारयते। येन च सीमिततां संकीर्णतां वा समाप्य शान्तिः स्थापयितुं शक्यते। संस्कृतस्य साम्यवादः सर्वोत्कृष्टो यथार्थश्च साम्यवादः। विश्वस्मै सत्यमानवताया उपदेश प्रदाय ऐक्यसूत्रप्रोतकृज्ज्ञानं संस्कृतदर्शने भृतमस्ति। संस्कृतसाहित्यतः सत्यविश्वनागरिकताया व्यावहारिकताया वा ज्ञानमवाप्यते। गान्धि-टाल्स्टायादयो विश्वनागरिकाः समाजसुधारकाश्च संस्कृतदर्शनतथ्यानुसरणेनैव सजाताः। विश्वशान्तिसंदेशप्रदायकैर्विश्वधर्मोपदेशकैर्दर्शनैः संयुता संस्कृतभाषाऽसाम्प्रदायिकी विश्वोपयोगिनी सामयिकी चाप्यस्ति। नापि दीयेत राजनीतावस्यै किंचित् पदम्। केवल भारतीयदर्शनानामुच्चज्ञानावाप्तये स्यात् संस्कृतसाहित्यस्य विकासः, अन्ताराष्ट्रियाश्च भारतीयदर्शनानामुच्चज्ञान लब्ध्वा सत्यमानवतां विश्वमुपदिशेयुः, एतदर्थं न्यूनान्न्यून संस्कृतजन्मभुवि भारते संस्कृतविश्वविद्यालयोऽवश्यमेव स्यात्। भारतस्य केन्द्रीयशिक्षाविभागेन कुरुक्षेत्रे संस्कृतविश्वविद्यालयस्थापनयोजना यथावदुन्नेया। अयं भारतस्य विश्वस्य च कृते परमोपयोगि वस्तु।

---

मवस्थां तर्हि शिक्ष्यन्तां पाल्यन्तां च स्त्रियः येन ताः स्वरक्षां कुर्वन्त्यः सन्ततिचर्यामभिकामयेयु अनुभवेयुश्चायुर्वेदस्यास्य परमादरणीयतामिति शम्।

# नियतिपौरुषयोः को बलवत्तरः

[ ले० प्रह्लादचन्द्र शास्त्री, प्रभाकरः, बाँगड़ कालेज, डीडवाना (राज०) ]

[ नियतियांति कस्यचिदपि पुरुषस्यातिरिक्त धनमपहर्तुं पथि च प्रतिमुखमागच्छत् पौरुषं मिलति तत्रैव भवति परस्परमालापः ]

नियतिः—रे पौरुष, अपि कुशलं भवतः ? कुत्र प्रयासि ? किं विधातुं ते वाञ्छा ? आधुनिके समये कीदृशास्ते प्रभावः ?

पौरुषम्—अयि ! भवत्या दर्शनेन सर्वं शुभम्, किन्तु न ज्ञायते त्वया मद्गौरवं, तत्र मदीयः को दोषः । प्रभावतो भास्करस्य सन्निधौ यदि न पश्यत्युलूकः किं तत्र सूर्यस्य दूषणम् ?

नियतिः—महाभाग, वार्ता तु शिष्टतया विधातव्या, एतावान् गर्वः कथं, किन्न जानासि मत्स्वरूपम् ? मयि विरुद्धायां विख्यातसुरपादपादपि न प्राप्नुवन्ति जना मनोवाञ्छितम्, नाधिगच्छन्ति किमपि वस्तुजातं महताध्यवसायेनापि, न वाऽऽरूढा भवन्ति गौरवास्पदे । तथाहि-"कल्पवृक्षोऽप्यभव्यानां प्रायो याति पलाशताम् ।"

पौ०—श्रुतं सोल्लासं त्वदाकत्थनम्, कथय, कथय, अन्यदपि कथय ।

नि०—किं श्रोष्यसि ? अधिगतशास्त्रार्था वागीश्वरा अपि विद्वांसो दरिद्रतया जीवनं यापयन्ति ! किं त्वं नावलोकयसि ? यत् पशुसङ्घातो मानवश्रेण्यामानयन्तः समस्तजनतां, प्रजनयन्तश्च भावनाभिर्जनसेवकान् महापुरुषान् राष्ट्रनिर्मातारोऽध्यापका बहुसमयपर्यन्तं कार्यं कृत्वापि जीवननिर्वाहयोग्यामपि वृत्तिं न लभन्ते. किं तत् ? मद्धेतुनैवैतत् ।

पौ० नायं तव प्रभावः । अयं तु भारतीयार्थव्यवस्थाया दोषस्तेन कारणेन बहूनामार कर्पट्टिकाकवलस्याप्यभावः, देहावयवानाच्छादयितुं वस्त्राण्यपि न, वासयोग्यावासानां तु का वार्ता ? अपरत्राभ्रस्पर्शिन्योऽट्टालिका निर्मक्षिका आवृतकपाटाः सन्ति, कतिपुचिद् भवनेष्वेकद्वित्रा जना निवसन्ति हसन्ति च मानवतां देवदुर्लभं वैभवं प्राप्य ।

नि०—नात्र मत्प्रतीतिः । अखिलमिदं मत्प्रसादेनैव । यद्येवं तर्हि जरामरणभयरहिता यशःशरीराः कलाविदः कवयो मत्स्तुतिं केन हेतुना विदध्नीरन् "भाग्यं फलति सर्वत्र न च विद्या न पौरुषम्" तथा च मत्प्रभावेण सुधाकरं सुधाकरं ग्रसति राहुर्विश्वस्मिन्नालोकविधायिनमर्यमाणमपि; आधिव्याधियुतपरिवर्तनशीलससारे जन्मधारिणां तु का कथा ?

पौ०—सत्यमुक्तं भवता, एतत्सर्वं तेषां साध्वसाधुकृतकर्मभिर्भवति न हि दैवपर्यायवाच्यकर्मणा । आधुनिका नेतारो राजकीयोच्चाधिकारिणश्च बहुमुख्ययोजनाभिर्भाखरानागलादिबन्धान् विधाय तैश्च सिञ्चनविद्युदुत्पादनेन धरित्रीं सुजलां सुफलां शस्यश्यामलां विधातुमुद्यताः । अधिगते साफल्ये नदीमातृकतां च गते राष्ट्रे तव (दैवस्य) सत्ताया लेशमात्रमपि न भविष्यति, सर्वत्र मदीयगुणानेव गास्यन्ति सर्वे ।

नि०—भवतु, परं किं विस्मृतं त्वया ? "दैवायत्तं फलं पुंसामि"ति, जना उद्योगेन बहुविधान् कार्यकलापान् कर्तुं क्षमास्तत्र फलप्रदानं तु ममाधीनमेव । यदि ममेच्छा स्यात्तदा तु धनधान्यपूर्णा पृथिवी भवेदन्यथा

# स्वातन्त्र्यवीराः सावरकरमहोदयाः

( श्री काशिनाथ त्र्यम्बक शिम्प , बम्बई )

अस्माकं भारतराष्ट्रे भारतमातरम् उद्धर्तुं नैके प्रयतमाना महान्तः विभूतय बभूवु । भारतराष्ट्रस्य स्वातन्त्र्यस्थण्डिलाय स्वस्य च आप्तस्वकीयानां च जीवितसमिधः समर्प्य तत् क्रतुकुण्डं प्रज्वालयितुं यदि केन महत् कार्यं कृतं स्यात् तर्हि तत् केवलं स्वातन्त्र्यवीरसावरकरमहोदयै एव। स्वातन्त्र्यदेवीकण्ठस्थम् आत्मन जीवितपुष्पाणां निर्माल्य यदि केन कृतं तर्हि तत् सावरकरमहोदयैः एव ।

ते ईदृश्याम् एव अवस्थायां प्रकट भूताः यदा केवलं 'वन्दे मातरम्' इति उच्चारणम् अपि महापराधः तत्कालीनराजपुरुषाणां मतेन आसीत् । तेषां समकालिन तीव्रमतवादिनः सौम्यमतवादिन च नेतारः यथाशक्ति स्वातन्त्र्ययज्ञम् इन्धितुं प्रायतन्त । किन्तु क्रान्ते स्फुलिङ्गान विना भारतीयानां सुप्तमनांसि न च प्रज्वलन्ति भवितारः इति समीक्ष्य सावरकरमहोदयाः स्वक्रान्तिकारकसङ्घटनया परदास्यशृङ्खलां दूरीकर्तुं प्रयत्नान प्रारभन्त । प्रारम्भे 'मित्रमेला'सङ्घटनाया लघुस्वरूपेण निर्मिता प्रयत्ना 'अभिनवभारत'-नाम्न्यां विश्वव्यापिन्यां सङ्घटनायां रूपान्तरं भेजिरे । तेषु प्रयत्नेषु मदनलालधिङ्ग्रा भगतसिंहादीनां सावरकरानुगानां प्राणाना हवींषि पतितानि ।

तेजसा बिभ्यती नृशंससत्ता प्रकुप्य तान् सावरकरमहोदयान् बन्दीकृतवती। श्रीशिवरायाणा शिष्यत्वं प्रतिपादयन्तः ते तां मदान्धां सत्तां वञ्चयित्वा जलयानात् विश्वाख्यातम् उड्डयनं कृतवन्तः । परं दुर्दैववशात् ते गृहीताः । अनन्तरं मृत्योः अपि भीषणः पञ्चाशतः वर्षाणां कृष्णजलदण्डः तै प्राप्त. । किन्तु यथा अचल मेरुः प्रभञ्जनेन अपि स्वस्थानात् विचलितः न

---

कालकवलत्वमिता स्यु. प्राणिनः । मदीयेङ्गितेनैव वैज्ञानिकानि यन्त्राणि निरर्थकानि सार्थकानि च भवन्ति। कथितमपि "करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति ।" अतो यावद् भूस्तावद् ममास्तित्त्वं स्थास्यति भूतले ।

पौ०—भो । यातः समय , समयेन सह परिवर्त्तते सर्वम् । "धनिकान् प्रति दरिद्राणा हृदयेषु कोप्यसन्तोषो न भवे"दित्याशक्य तेषामभिकर्तृ भि(एजेन्ट)-रियं विचारधारा प्रवाहितासीज्जनसमुदायेषु यत् दैवाधीना एव जनस्य सर्वावस्था भवति किन्त्विदानीं सर्वे जनाः स्वकीयाः समस्या अध्येतु समर्थाः कार्याकार्यविचारणे च क्षमाः। अतस्तैः सुविचारितमद्य यत् दैवस्य क्वापि सत्ता न, सर्वं खल्विद कपटजालमेव ।

नि०—वर भद्र ! कस्त्वया सह वाक्कलह करोतु ?

पौ—बाढम् , आधार विना तर्कस्य न महत्त्वम् । एतत् सत्य यत् सर्वो जन उद्योग कृत्वा लक्ष्मीमुपैति सुखी समृद्धिशाली च भवितु शक्नोति। सर्वकारेणापि समाजवादरीत्या, ईदृश एव प्रयासः क्रियते यदखिललोकोऽन्नवस्त्रावासयोग्यस्थानादिक प्राप्नुयात् । तथाहि—सत्यमुक्त केनापि नीतिकारेण '—

' नास्त्युद्यमसमो बन्धुः यं कृत्वा नावसीदति"

साधयामो वयमधुना । त्वयापि स्वकीय पन्था अन्वेष्टव्यः ।

---

व्येन सह सेवकानामस्माकं सुमहान्त. प्रयत्ना समपेक्ष्यन्ते सुरसरस्वतीसमुद्धाराय

अद्य संस्कृतशिक्षार्थिनां द्वौ भेदौ। एकस्मिन् भागे ते संस्कृतविद्वांसश्छात्राश्च समागच्छन्ति ये पुरातनपरिपाट्या संस्कृतविद्यालयेषु व्याकरणदर्शनसाहित्यादिविषयान् यथावत्पठन्ति। अपरः प्रकारस्तेषां ये आङ्गलमहाविद्यालयेषु सहायकभाषारूपेण परस्तात् (एम ए आदिश्रेणिषु) मुख्यभाषारूपेण वा संस्कृतमधीयते। संस्कृतभाषाया स्वतन्त्रभारतेऽस्मिन् या स्थितिः अधुना वर्त्तते, याश्च परिस्थितयो भविष्यति काले सम्भविष्यन्ति तासां स्थितीनां निर्माणे सुधारणे च सर्वेषामपि संस्कृतविदुषां विद्यार्थिनां च तत्साहाय्यमपेक्ष्यते येन भाषाया अस्या सुनिर्धारितं महत्त्वपूर्णं च स्थानं भाविशिक्षापरिपाट्यां नियमितं भवेत्। संस्कृतमहाविद्यालयेषु पठतां छात्राणां द्राधिष्टं कर्त्तव्यजातमस्ति संस्कृतभाषाया. संवर्द्धने, तेषां च सेवाया मया परस्ताद् बहु निवेदनीयं, किन्तु आङ्गलमहाविद्यालयेषु संस्कृत पठतां छात्राणा कृतेऽप्यद्य तावान् कर्त्तव्यभारः समापतितो यस्य निर्वाहः सुतरामपेक्षित इति किंचिदस्ति मे वक्तव्य तेषा कृते।

आङ्गलमहाविद्यालयेषु पठतां विद्यार्थिनां समीपे संस्कृतभाषायाः सहैव हिन्दीभाषाया आङ्गलभाषायाश्च सहायकं ज्ञान भवति. येन ते स्वकीयविचाराणां प्रकाशनाय अनेकेषां माध्यमानां सहायतां ग्रहीतुं शक्नुवन्ति। अद्य तेषामेव स्कन्धयोरयं भारो यत्संस्कृतभाषायाः समृद्धसाहित्यस्य महत्त्वोद्घोषणमन्यभाषामाध्यमेन सुदूरदेशेषु क्रियेत।

सर्वतः प्रथमं तेषामग्रे निवेदनीयमेतदेव, यत्ते केवलं परीक्षोत्तरणाय, बहुलाङ्कलाभलोभस्य च दृष्टया संस्कृतं न पठेयु। प्रायः आङ्गलविद्यालयेषु पठतां छात्राणामियमेव पद्धतिर्दृष्टा यद् बहुलाङ्कलाभद्वारा उच्चश्रेणि (डिवीजन) निर्माणाय संस्कृतविषयं गृहीत्वा परीक्षामुत्तरन्ति येन ते संस्कृतस्य गभीरं ज्ञानमासादयितु न प्रयतन्ते, अतएव अव्युत्पन्ना भवन्ती"ति प्राचीनसंस्कृतविदुषां प्रायोवादः। एतत्कृते न केवल छात्रैरेव, अपितु अध्यापकैरप्युच्चैश्चापि बहु अवधातव्यं यत्संस्कृते एम. ए परीक्षोत्तीर्णाः केवल पाठ्यक्रमनियमितग्रन्थान् अधीत्यैव प्रमाणपत्र न गृह्णीयुरपितु साहित्यस्य किंचिद् गहनमध्ययनमपि कुर्युः। यस्य साहित्यस्य विस्तार एव तस्य महत्त्वस्य भूयःस्वंशेषु प्रमाणभूतः तस्य विस्तृतस्य साहित्यस्य यत्किञ्चित् अध्ययनमपि यदि नास्माभिः कृत तर्हि किं कृतम्? कालिदासो न केवलं भारतस्यैव, अपितु विश्वस्य सर्वमूर्धन्यो महाकविर्नाटककारश्चेति भूयानद्य समुद्घोषः। सत्यमेवेदम्। कुमारसभवस्य, रघुवशस्य, मेघदूतस्य, चामरः प्रणेता, शाकुन्तलस्य विश्वमूर्धन्यः स्रष्टा कालिदासः संस्कृतभाषायाः सर्वप्रथम गर्वभाजनम्। किन्तु तस्यैव सर्वेषां ग्रन्थानामध्ययनं नाद्याऽस्माभिः क्रियते इति सलज्जं निवेदनीयमेव भवति। रघुवंशस्य त्रयोदशं सर्गम् कुमारसंभवस्य पंचम, मेघदूतस्य पूर्वमेघं च पठित्वा वयं परीक्षामुत्तरामः, काव्यानामेषां का विशेषता इतरसर्गेष्विति कदापि द्रष्टुमस्माकमिच्छैव न भवति। विक्रमोर्वशीयऋतुसंहारादीनां तु कथैव का? अस्याः प्रणाल्याः परिहारोऽस्माकं सर्वप्रथमं कर्त्तव्यम्।

प्रसङ्गागतमिदमपि निवेदनीयं यदाश्चर्यस्य विषयस्त्वयं यद् भारतात्कालिदासस्य प्रामाणिकी ग्रन्थावलिर्नाद्यापि प्रकाशिता। आङ्गलनाटककारस्य शेक्सपीयरस्य विषये यदा परःसहस्रं ग्रन्था लभ्यन्ते, तस्य व्याकरणं,

तस्य शब्दसूची इत्यादि बहु साहित्यं तस्योपरि निर्मितं, तद्वा महाकवेर्नाटककारस्य च कालिदासस्य ग्रन्थावलिरेव नोपलभ्यते, शब्दसूच्याः अथवा व्याकरणस्य तु कथैव का ?

हर्षस्य विषयो यत् संयुक्तराष्ट्रसंघस्य शिक्षाविज्ञान-संस्कृतिसंस्थाया (UNESCO) भारतीयशाखा भारते, संस्थाया अस्या अधिवेशनोपलक्ष्ये प्रामाणिकीमेकां कालिदासग्रन्थवलि प्रकाशयितुं बद्धपरिकरा। इतो भारतीयाकाशवाणी (ऑल इण्डिया रेडियो) अपि कालिदासजयन्त्यादीनामायोजनेन विश्वकवेरस्य स्मृति चिरजागरूकां विधातुं चेष्टते। श्रूयते यदहमदाबादनिवासिना प्रो० सहगलमहाशयेन कालिदासस्य शब्दसूची अपि परिश्रमेण निर्मिता। एवंविधाः प्रयत्नाः स्वागतार्हाः।

तात्पर्यमिदमेव यदधुना संस्कृतसाहित्यस्य गहन मर्मस्पर्शि ज्ञानं, समालोचन चास्माकमावश्यकम्, सस्कृतस्य चिरविस्मृतानां भानुकवि–वेङ्कटाध्वरि–सदृशाना कवीनां पुनः प्रचारश्चापेक्षितः।

एतेन सहैव संस्कृतछात्रैर्भारतव्यापि भ्रातृत्वान्दोलनमेक प्रचारणीयं सुमहदपेक्ष्यते। अद्य संस्कृतमेकं तादृशी भाषा यस्या स्वरूपम्, उच्चारणसरणिः, व्याकरणं च विश्वस्य सर्वेषु देशेषु समानम्। काश्मीराणां संस्कृताध्यापकस्तामेव भाषां भाषते यां भाषां तिरुवङ्कुरस्य संस्कृतपण्डितो वदति। पाणिनीयव्याकरणस्य तदिदं श्रेयः। अतएव न केवलं भारतीयानामेव, अपि तु विदेशीयानामपि संस्कृतज्ञानामेकसूत्रतायाः स्थापनाय सेयं भाषा शृङ्खलाभूता। सर्वेऽपि वयं सस्कृतज्ञाः, एकभाषाज्ञत्वाद् भ्रातरः। सस्कृतभाषाऽस्माकं जननी। यत्र कुत्रापि वय गच्छामस्तत्र यः कश्चनाऽपि सस्कृतज्ञः, सोऽस्माकं सहोदरः। इदं तु निश्चित यदस्मिन् कालेऽपि सस्कृतस्य तावान् विश्वजनीनः प्रचार यत्प्रत्येके प्रान्ते, प्रत्येके देशे, प्रत्येके नगरे च संस्कृतज्ञा अवश्यमेव लभ्येरन्, कामं भवेयुस्तेऽल्पसंख्यका. सोऽय सुरगिरो विश्वजनीनस्य समादरस्य संकेतः। ततश्चास्माक सस्कृतज्ञानां सुसंघटनाय, विश्वव्यापिने प्रचाराय चास्माभिः प्रत्येकेन सस्कृतज्ञेन सह सख्यं स्थापनीय स्यात्। इदमस्माकं विश्वजनीनं भ्रातृत्वं यदाङ्गलदेशे, जर्मन्यां, रशाया, अमरीकायां, फ्रांसस्पेनादिषु सर्वेष्वेव देशेषु अस्माकं परिचिता भ्रातरश्च सन्ति। सस्कृतभाषाया ज्ञान महतो गौरवस्य परिणति। य एवेमा भाषां वेद, स विश्वस्मिन् सर्वमूर्धन्यां भाषां जानाति, सर्वमूर्धन्यस्य साहित्यस्य परिचित इत्येव गौरवबुद्धिः सस्कृतज्ञेषु च स्थापनीया स्यात्।

यदि वयं भारतस्य विभिन्नप्रान्तेषु गच्छेम, तत्र विश्वविद्यालये सस्कृतविद्यार्थिभिः सह निश्चितमेव सगच्छेमहि, संस्कृताध्यापकान् पश्येम इत्यावश्यकम्। इतश्च यः कोऽपि परप्रान्तीयः संस्कृतविद्वान् छात्रो वा समागच्छेत् तेन वयं कुटुम्बिवत् व्यवहरेम इत्यप्यावश्यकत्वेनाऽऽपतितम्। हर्षेण सूचयितव्यं भवति यद्विश्वसंस्कृतपरिषदा भारतस्य सर्वेषु प्रान्तेषु प्रत्येकं शिक्षासस्थानां, विद्यालयानां [कालेजानां] च समीपे विशेषपरिपत्रकाणि प्रेषितानि येषु सस्कृतोन्नत्यै सस्कृते वाद विवादप्रतियोगिताना, निबन्धप्रतियोगितानाम्, अतिरिक्तव्याख्यानानां (Extension Lectures), सस्कृतच्छात्रवृत्तीनां, संस्कृतनाटकाभिनयानां च समायोजनानि कृत्वा भारतीयाया मूलभाषाया अस्याः प्रोत्साहन ते कुर्युरिति सानुरोध समन्त्रितम्। आङ्गलविद्यालयस्य विद्यार्थिभिः प्रत्येकविद्यालये सस्कृतसेवापरिपदा-

दीनां संस्थापनेन तद्द्वारा तादृशानामायोजनानां कृते सर्वकारीय साहाय्यमपि लब्धुं सुशकम्। अद्य सर्वकारस्य कोऽपि अधिकारी संस्कृतच्छात्रान् तेषां प्रार्थनाश्चोपेक्षितुं न कदापि शक्नोति। तथा सति न केवलं स संस्कृतिद्वेषीति निन्दनीय एवाऽपितु देशस्य विरोधीति दण्ड्योऽपि। भारतस्य राष्ट्रपतेः, उपराष्ट्रपते. प्रतिरक्षामन्त्रिण. काटजो', वित्तमन्त्रिण. श्रीदेशमुखस्य, उत्तरदेशराज्यपालस्य कन्हैयाललमुंशिनः, राजगोपालाचार्यस्य, अन्येषां च देशनेतॄणां संस्कृतगिरो मुक्तकण्ठं प्रशंसनेन यदि अन्यत् किञ्चिन्न साधितं तर्हि तदिदं तु निश्चितमेवोपकृतं यद्देशस्य प्रत्येकजनः संस्कृतभाषां, तज्ज्ञांश्च समादरदृष्ट्या पश्यति। गतकतिपयवर्षपूर्वं ये संस्कृतज्ञाः पण्डिताश्चोपहासपात्राण्यभूवन्, तेऽद्य समाजे प्रतिष्ठादृष्ट्या व्यवह्रियन्ते। संस्कृत-विदुषामियं प्रतिष्ठा चिरन्तनी सम्पद्येतेत्येतदर्थं प्रयतनीयमस्माभिः।

सर्वतोऽधिकं महत्त्वपूर्णं तदिदमस्माकं कर्त्तव्यं यत्संस्कृतभाषायां नवसाहित्यसृष्टिः नवीनसाहित्यसमादरश्च प्रसारणीयः। प्राचीनानां जरतां संस्कृतपण्डितानां केवलमतीतसाहित्ये एव गौरवदृष्टिर्न समुन्नतिसूचिकेति सुस्पष्टं ब्रवीमि। समाजस्य, युगस्य च परिस्थितीनामनुकूलां साहित्यसृष्टिं या भाषा समुपेक्षते साऽचिरादेव रसातलं प्रविशतीति विश्वस्यानुभवः। प्राचीनतायाः प्रपञ्चेनैव लैटनभाषा मृताऽभूदिति विदुषामुक्तिः। संस्कृतमपि यदि पाणिनिकात्यायनशाकटायनान्नभट्टादीनां प्रमीतानां विदुषां रचनाः, माथुरीपंचलक्षणीखण्डनखण्डखाद्य-मनोरमाशब्दरत्नादीन् ग्रन्थांश्चान्तरा न किमपि नव साहित्यं प्रसारयितुमीहते तदा तस्या अनुदिनं विरलप्रचारत्वं निश्चप्रचम्। अद्य यदि संस्कृतभाषाया अन्यभाषाभिः सह, संस्कृतकवीनामन्यदेशीयकविभिः सह, संस्कृतदर्शनानामन्यदेशीयदर्शनैश्च सह तुलनात्मकं विवेचनम्; अभिनव-मानवतासिद्धान्तानां साहित्यम्; नवरुचिपरिष्कृता कविता च संस्कृतभाषायाः पत्रिकासु पृथक् प्रकाशनालयेषु च प्रकाशिता स्यात्–तदैव जनजीवनस्य निकटेन सम्पर्केण भाषायाँ अस्या अनुदिनं प्रवृद्धिः प्रसारश्च भवेत्। तदिदं कर्त्तव्यं पुरातनपरिपाटीरटनपटूनां पण्डितमन्यानां, न्यायव्याकरणादिघोषण–मनुस्मृतिमहाभारतादिपाटान् विहाय, सामयिकपरिस्थितेः, सामयिकभाषायाश्चाऽणुमात्रमपि ज्ञानमनुपार्जितवतां छात्राणां चापेक्षया नवसभ्यानां नवसमाजानुभववतां च तादृशानामेव विद्यार्थिनां कर्तव्यत्वेनाऽधिकमायाति येषां कृते तदिदं निवेदन मया प्रस्तूयते। ते नवीनसंस्कृतमासिकपत्राणां समुपादान, तेषु नवीनसंस्कृतसाहित्यसृष्टिं चाग्रेसरीभूय कर्तुमारभेरन्।

सर्वेषां च संस्कृतज्ञानामेका वाणी—"विरोधम्" ईर्ष्या, काटवम्, निन्दां, खण्डनानि, पुरातनव्यतिकरं, पाखण्डप्रपंचं च विहाय "सङ्गच्छध्वं संवदध्व सं वो मनांसि जानताम्" इति मधुमिश्रं सन्देशं श्रावयेत्; अतीते परःशतवर्षात्मके काले विरलीभूताया देववाण्या महत्त्वोद्घोषेण सह संस्कृतजगति नवीना क्रान्तिः प्रस्तूयेत। एतदर्थमस्माभिः सङ्घटित प्रयत्नो विधेयः। सर्वैरपि संस्कृतजनन्या कृते स्वार्थं परिहृत्य कायेन, मनसा, वाचा, सर्वात्मना प्रयत्येत, छात्राश्चेमं क्रान्तिध्वजं सर्वतोऽग्रे समुद्धुन्वन्तु—देववाण्या विश्वजनीनो विजयघोषो दिग्दिगन्तमुद्भिद्य गगनाङ्गणे विजृम्भताम्-भूतभावनो भगवान् साहाय्यमस्माकमाचरेदित्येव मदीयाऽऽशंसा। इदमेव मदीयमावेदनम्।

—

बालभारती—

# भाग्यं पुरुषार्थश्च

( ले० विद्याभूषणः प० गणेशरामशर्मा, साहित्यरत्नम्, झालावाड )

एकदा कस्यचित् नृपस्य सभायां भाग्यपुरुषार्थयोः विवाद. प्रचलितः तत्र एक जनः भाग्यं बहु प्राशंसत्, अन्यः पुरुषार्थं अतीव अश्लाघत। नरेशः तयोः द्वयोः विवादं श्रुत्वा न्याय कर्तुं एकं उपायं अकरोत्। सः तौ द्वौ अपि विवदमानौ पुरुषौ कारागारस्य एकस्मिन् अन्धकारमये कोष्ठे अक्षिपत्।

तत्र कारागारस्य अन्धकोष्ठे तौ द्वौ अपि विवदमानौ कंचित् काल अतिष्ठताम्। एव क्रमशः रात्रिः अभवत। तौ अचिन्तयताम्—'आवां अद्य विवाद कृत्वा अकारणमेव नृप अकोपयाव।' एवं पश्चात्ताप कुर्वाणौ तौ रात्र्या प्रथमं प्रहरं तु येनकेनप्रकारेण अत्यवाहयताम्। भाग्यवादी तु 'यद्भाव्यं तद्भविष्यति !' इति उक्त्वा तत्रैव प्रकोष्ठे भूमौ एव अस्वपत। सः निद्रासुखं अनुभवितुं आरभत।

ततः पुरुषार्थवादी अचिन्तयत्—'केवलं भाग्यस्य आश्रयात् अस्मात् अन्धकोष्ठात् कथ नाम मोक्षः मिलेत्? तत् मया पुरुषार्थं अवलम्ब्य कोऽपि उपायः कर्तव्यः। कर्मप्रधाने अस्मिन् ससारे य स्वयमेव आत्मन. उन्नतये मुक्तये वा उपायं न करोति, ईश्वरः अपि त अलस, कातर, निर्बल, अकर्मण्य च मत्वा तस्य सहायतां न करोति। तस्मात् मया अत्र कारागारेऽपि किमपि उपायान्तर अवश्यमेव कर्तव्यम्।" एव विचिन्त्य सः तत्रैव अन्धकारमये कोष्ठे स्वस्य हस्तौ प्रसार्य अन्वेषणं कर्तुं तत्परः अभवत्। एवं अन्वेषयन् सः तत्र कोष्ठस्य भित्तौ नागदन्ते (खूंटी पर) अवलम्बमानं एक तैलेन पूरितं वर्तिकया युक्त दीपपात्र तत्समीपमेव स्थितां एकां दीपशलाकानां पेटिका च अलभत। दीपशलाकां एकां प्रज्वाल्य स त दीपकं प्राज्वालयत्। दीपकस्य प्रकाशेन स यावत् पश्यति तावत् तत्र एकस्मिन् कोणे निर्मलेन सुपेयेन च जलेन भरित एकं कुम्भ तस्य उपरि स्थापित एकं जलपानाय योग्यं जलपात्रं च अपश्यत्। पुनः तत्र अन्यस्मिन् कोणे सुरक्षितया रीत्या स्थापित घृतगुडपिष्टैः मिश्रित एक महान्तं मोदकं च दृष्टवान्। अपरत्र एकस्मिन् कोणे शयनयोग्यानि आस्तरणानि वस्त्राणि च अपश्यत्। अन्यत्र कोणे च स्थापितानि सुन्दराणि सुगन्धीनि पुष्पाणि तथा ताम्बूलवीटिकाः पुस्तकानि च प्राप्नोत्।

एव सर्वाणि तानि वस्तूनि लब्ध्वा स बहु प्रसन्नः अभवत्। भाग्यैकशरण शयान निद्रावशं गतं तं स्वप्रतिवादिन तत्क्षण जागरयित्वा स अवदत्—'अहो! महिमा पुरुषार्थस्य!!' त्वं तु भाग्यवादी कमपि पुरुषोचितं उद्योग उपायं वा अकृत्वा भाग्यमेव सर्वं मत्वा प्रसुप्तः। परं तु मया अत्र पुरुषार्थं आलम्ब्य किमपि प्रयतितम्। फलतः अय दीपकः अयं जलघटः, इमानि आस्तरणानि वस्त्राणि, पुष्पाणि, ताम्बूलानि मया अत्र प्राप्तानि! तत त्व इदानीं आलस्यं प्रमादं च त्यक्त्वा उत्तिष्ठ, आवां इम मोदकं भुक्त्वा क्षुधां निवारयाव। भोजनान्तर च ताम्बूलानि चर्वयित्वा, पुष्पाणि आघ्राय, आस्तरणानि प्रसार्य, ससुख शयावहै। पुस्तकानि चापि वाचयाव। एव सुखेन रात्रिर्गमिष्यति।" इति।

एतत श्रुत्वा भाग्यबादी अकथयत्—'साधु, साधु! बहु पराक्रान्त त्वया! प्रशसनीयोऽय ते उत्साहः

आयुष्मतः ।' एवम् उक्त्वा तौ प्रसन्नेन मनसा त मोदकं अभक्षयताम्। ततः यथारुचि जलपान कृत्वा ताम्बूल-वीटिकाश्च अचवयताम्। शयनीये आस्तीर्य तौ सानन्दं स्थितौ पुष्पाणि आघ्राय यथेच्छ पुस्तकानि च पठित्वा शांतिपूर्वक अस्वपताम्।

प्रातः नृपस्य आज्ञया राजसेवकै तस्य कोष्ठस्य द्वारं उद्घाट्य तौ द्वौ अपि बहि' निष्कास्य राजसभायां नृपस्य पुरतः उपस्थापितौ। तौ दृष्ट्वा नरेशः अपृच्छत्—"किं युवयोः विवादस्य निर्णय. जातः न वा ?' इति। तत् श्रुत्वा गर्वेण पुरुषार्थवादी अवदत्—'राजन्। निर्णयः जातः। पुरुषार्थस्य एव विजय अभूत्। यतः मया तत्र कारागारस्य कोष्ठे पुरुषार्थ अवलम्ब्य प्रयत्नः कृतः। परिणामत. दीपक, मोदक, जलपात्र, आस्तरणानि, ताम्बूलानि, पुष्पाणि च प्राप्य आवां द्वौ अपि क्षुधानिवृत्तिं अकरवाव। सुखेन अस्वपाव। यदि अहं पुरुषार्थं अवलम्ब्य कमपि उद्योग न अकरिष्य तदा अय भाग्यवादीव अहमपि च आलस्यात् क्षुधातुर एव अस्वप्स्यम्।" इति।

पुरुषार्थपरस्य तानि वचनानि श्रुत्वा नृपः तं भाग्यवादिन अपृच्छत—'भोः भाग्यवादिन्। त्व किं कथयसि ?' तदा सः अभाषत—"राजन्। अहं तु मन्ये, भाग्यस्य एव विजयः अभवत्। यतः अहं तु भाग्यं एव सर्वत्र फलति इति सत्यं मन्यमानः "यद्भावि न तद्भावि भाविचेन्न तदन्यथा" इति निश्चिन्तः भूत्वा तत्र कारागारस्य अन्धकारमये कोष्ठे अशये, सुखेन निद्रायाः समाधि-सुखं च अन्वभवम्। रात्र्या प्रथमे प्रहरे व्यतीते अय पुरुषार्थवादी महाशयः मा अजागरयत्। प्रबुद्ध अहं ज्वलितस्य दीपकस्य प्रकाशे सर्वां स्थितिं स्पष्ट अबुध्यम्। पुनरय भाग्यवादिने मह्य मोदक, जल, ताम्बूल, पुष्पाणि, शय्यां च प्रददौ। अयं तु मे भाग्यस्य एव चमत्कारः यत् परिश्रमस्तु अनेन कृत. परं मया तु श्रमं विनैव सर्वं अन्नपानादि राजसिकं सुखं अनायास प्राप्तम्। अपरं पुन भोजनं कुर्वता मया मोदकमध्ये निहित एतत् दीनार (स्वर्णमुद्रा) प्राप्तम्।" एवम् उक्त्वा सः भाग्यभक्तः नृपस्य अग्रे दीनार दर्शितवान्। एतत् सर्वं दृष्ट्वा पुरुषार्थवादी चकितः विस्मितश्च अभवत्। तदा नृप अब्रवीत्—"युवां द्वौ अपि स्वविश्वासानुसार विजयिनौ स्थः। अनेन पुरुषार्थवादिना उद्योगात् सुख लब्धम्। भाग्यवादिना त्वया च भाग्यात् एव परिश्रम विनैव स्वतः एव सिद्धं सर्वं सुख प्राप्तम्। अतः अधुना अहं निर्णयामि यत् भाग्यवान भाग्येन तथा च पुरुषार्थवान पौरुषेण ससारे स्वमनोरथ साप्नोति। वस्तुतः भाग्य पुरुषार्थश्च द्वौ अपि जीवने अस्माकं आवश्यकौ भवतः। तदेव उक्तम्।

"यथा चैकेन चक्रेण न रथस्य गतिर्भवेत्।
तथा पुरुषकारेण विना भाग्यं न सिद्ध्यति ॥१॥"

# भगवतो बुद्धस्य चरित्रम्

[ शिवदत्तशर्मा चतुर्वेदः, जयपुरम् ]

साम्प्रतं वयं भारते परिव्याप्तां यां संस्कृतिमवलोकयामः नूनं तस्याः निर्माणे भगवतो बुद्धस्यास्ति महत्त्वपूर्णं स्थानम् । ईसातः शतकचतुष्टयपूर्वमयं भगवान् गौतमः उत्तरभारते नेपालप्रदेशस्याधस्तात् कपिलवस्तुनामानं जनपदं स्वकीयेन जन्मना सनाथीकृतवान् । अस्य पितुः शुद्धोदन इति नाम मातुश्च मायादेवी इति । पितुर्नासीदेतदतिरिक्ता काऽपि सन्ततिरिति स गाढेन प्रेम्णा अस्य पालनपोषणं चकार । सर्वविधसुखानां मध्ये परिवर्धितोऽप्ययं बाल्यात्प्रभृत्येव वीतरागः परदुःखकातरः एकान्तचिन्तकश्चासीत् । भविष्यवक्तृभिः प्रथममेव राजा प्रतिबोधित आसीत् यदयं बालः समस्तसंसारस्य कृते एकः अद्वितीयः वैराग्योपदेष्टा धर्मोपदेष्टा च भविष्यति । परं राज्ञः एतदभिमतं नासीत् अतः राजा शुद्धोदनः स्वसुतं नानाभोगविलासपाशेषु आबद्धुं नैकान् यत्नाननुष्ठितवान् । फलं तु विपरीतमेवाऽवलोक्यते स्म । अथावसरे प्राप्ते यशोधरानाम्न्या एकया रूपलावण्याब्धिभूतया शीलसम्पन्नया नवयुवत्या सह राजकुमारस्य पाणिग्रहणं समपद्यत । सांसारिकानां पुरुषाणां कृते स्त्रीनामा एकोऽयं संमोहकः मंत्रः, उक्तं च 'कंदर्पदर्प-दलने विरला मनुष्याः' इति । परमत्र बुद्धविषये तु कंदर्पस्याशुगोऽपि निरर्थकप्राय एवासीत् । स मनागपि नासीदासक्तः अस्मिन् विषये । तस्य वैराग्यप्रवृत्तिरनुदिवसं परिवर्धमानैवावलोक्यते स्म सर्वैः । अनन्तरं किं जातमिति जानन्त्येव सर्वे । तस्य गृहत्यागः 'महाभिनिष्क्रमण' इति नाम्ना लोके ख्यातिमाजगाम । स कस्याऽप्यनिर्वचनीयस्यान्तरस्य ज्योतिषोऽन्वेषणे बद्धपरिकर आसीत् । इममेवोपायं स्वात्मबोधाख्यं स संसारक्लेशोद्धाराय निश्चिकाय । अस्यैव चार्थे अनेकवर्षपर्यन्तं स तपस्तपन् नानाविधानि कष्टान्यङ्गीकृतवान् । एका या शरीर-पीडन-रूपा प्राचीना काचन परिपाटी आत्मोपलब्धि-साधनरूपिणी प्रचलिता आसीत् प्रथमं स तस्या एव पथिकः समजायत । अत्र तस्य चत्वारः सहचरा अप्यासन् । परन्तु अत्यन्त कष्टं सोढ्वापि यदा काऽपि फलोन्मुखता नानुभवगोचरा जाता तदा स इमं मार्गं मिथ्येति मत्वा तत्याज । अपरं मध्यममार्गं च समाश्रित्य तपस्तेपे । अन्ततः तेनैव मार्गेण स ज्ञानाधिगमे साफल्यमलभत । तेन करतलामलकवदवलोकितानि समस्तानि पूर्वजन्मानि । जन्मनः साफल्यं कुत्र प्रतिष्ठितं वर्तते इत्यपि तेन प्रत्यक्षीकृतम् ।

तेन काशीतः समारभ्य समस्तेऽपि भारते परिभ्रमणं कृतम् । तस्य जीवनं लोकमङ्गलायैवासीत् । अचिरेणैव समस्तेऽपि भारते परिव्याप्तमासीत्तस्य यशःसौरभम् ! तदानीं भारतवर्षे एकतन्त्राणि गणतन्त्राणि राज्यानि आसन् । तस्य स्वकीयस्य पितुः राज्यमपि गणतन्त्रात्मकम् एवासीत् । तेषु सर्वेष्वपि राज्येषु सत्वरमेव भगवतो बुद्धस्य प्रभावः प्राचीयत । समस्ता अपि राजानः सादरं बुद्धस्याज्ञां शिरसि धारयन्ति स्म । अनेन रूपेण शक्यतेऽनुमातुं यन्नासीत् स केवलं धर्मोपदेष्टा परं तात्कालिकायां राजनीतावपि तस्य पूर्णप्रभाव आसीत् । किमन्यत् बहवो राजानः तस्मै स्वानि राज्यानि समर्पयितुमपि समुत्सुका आसन् । परं येन

सर्वैश्वर्यपरिपूर्णं स्वकीयस्य पितुः राज्यं परित्यक्त कथ स अन्यस्मिन् राज्यबन्धने बद्धु शक्यः स्यात् ।

स्वकीयेषु उपदेशेषु स धर्मतत्त्वान्युद्घाटितवान्. समाजनिर्माणमुपादिदेश, दुःखकारणान्युपशमयितुं संदिदेश। तस्य सिद्धान्तानुसारेण अस्मिन् जगति दुःख-व्यतिरिक्तं किमपि नास्ति सर्वत्रापि दुःखमेव परिव्याप्तं दृश्यते। एतदेव तस्य "दुःखं दुःखम्" इत्यादि सूत्रेण प्रकटीभवति। तस्य सिद्धान्तेषु आध्यात्मिकतायाः प्रभावप्रचुरं परिलक्ष्यते। धर्मप्राण हि भारतमस्मदीयम्। धर्मस्तु आध्यात्मतायामेव प्रतिष्ठित। यदि आध्यात्मिकतायाः निराकरणं क्रियते कुतस्तदा धर्मस्थितिरप्यवगन्तु शक्यते। तस्मादेव महान् धर्मप्रचारको भगवान् बुद्धः सर्वतः पूर्वं आध्यात्मिकतायाः उपरि दृढां श्रद्धां बद्धुं लोकानादिदेश। तेन प्रचोदिता शिष्याः सर्वत्राऽपि देशे पर्यटनं कृत्वा तत्सिद्धान्तान' प्रचुर प्रचार कृतवन्तः। न केवलं भारते वर्षे अपितु ससारस्य इतरेषु देशेष्वपि तज्जीवनकाल एव तस्य वरदानोपमा वाणी परिव्याप्ता आसीत। अनन्तर च सम्राडशोकस्य समये तु अधिकांशे ससारे बौद्धधर्मस्य प्रभाव विजृम्भमाण आसीत्। अद्यत्वेऽपि संसारस्य बहुषु देशेषु बौद्धधर्मस्य पर्याप्त. प्रभावो वर्तते।

यद्यपि भारतीयवैदिकसिद्धान्तेन सह तस्य विरोधं आमनन्ति इतिहासविद', पर नैतत्समीचीनम्। आक्षेपवादानपाकृत्य यदि वयं भगवतो बुद्धस्य वचनान्यनुशीलयामः तर्हि सोऽय सिद्धान्तः स्फुटमवगम्यते यत् वेदेषु, आरण्यकेषु, ब्राह्मणेषु उपनिषत्सु च ये सिद्धान्ता खचिता. सन्ति त एव भगवतो बुद्धस्यापि सिद्धान्ताः सन्ति। किमपि नवीन तत्र नानुभूयते। परं यन्नूतनत्वं तत्र तत्त्विद यत् स प्रत्येकस्यापि सिद्धान्तस्य व्यावहारिकदृष्ट्या व्याख्यान कृतवन्। तस्य आचरणे यदासीत् तदेव तस्योपदेशेष्वपि दृश्यते। वैराग्यपरोपकारादीनां स केवलमुपदेशे एव प्रयोग न करोति स्म अपितु तस्य जीवनमपि एभि. सर्वै परिपूर्णं परमपवित्र चासीत्।

भगवान् बुद्ध समाजसुधारकोऽप्यासीत्। तदानींतने समाजे यास्त्रुटयस्तेनावलोकिताः स निर्भयरूपेण तासां प्रखरसमालोचनाग्नौ दाह कृतवान्। तस्मिन् समये वैदिक कर्मकाण्ड आडम्बरपूर्णं स्वरूपमलभत। यज्ञेषु पशुबलिदानस्य परिपाटी प्रवृद्धि गताऽऽसीत् पशुबलिमन्तरा यज्ञस्य साङ्गतासिद्धिरेव न जायते स्म। तामेतां दूषितां परिपाटीं मोक्षदायिकामुद्घोषयतां जनानां विचारस्य स्वकीयेन प्रखरतरेण युक्तिकौशलेन खण्डनमकरोत् भगवान् बुद्धः। तेन स्पष्टीकृत यत् एते नानानिकृष्टकर्मयुक्ता' यज्ञा कथमपि मोक्षदायका भवितुं न शक्नुवन्ति प्रत्युत एतेषामनुष्ठाने न आवागमनबन्धने भृशं निगडितो भवति मानव। एतादृशैरुपदेशैश्च जनताया' श्रद्धा विलुप्ता जाता। यज्ञेषु पशुबलेश्च उपशमः प्राजायत। तस्य ज्ञानशक्तिरत्यन्तं प्रवृद्धा आसीत्।

सिद्धीनामपि स आकर एवासीत्। ईश्वरभावः यत्र प्रादुर्भूतो भवति सिद्धयस्तु तत्र प्रणतिपुरस्सरमागच्छन्त्येव। अङ्गुलिमालनाम्नः प्रसिद्धस्य दस्योरनायासेनैव तेन पराभव कृतः। देवदत्ताख्यः तस्य प्रतिद्वन्द्वी य आसीत् तस्य क्षमाशक्त्या स्वत एव पराभवो जातः एव ये विरोधिन आसन् ते सर्वे तस्याद्भुतस्य तेजसः सम्मुखे सत्वरमेवास्त प्रयाता। तस्य केनाऽपि सह शत्रुता नासीत्। विश्वबन्धुत्वस्य पदे पदे दर्शनं जायते स्म तस्य चरित्रे। इदमेव कारणं यत्

# * सम्पादकीयम् *

## अखिलभारतीय-संस्कृतसाहित्यसम्मेलनस्य त्रयोत्रिंशाधिवेशनम्

—जूनमासस्य गत २-३-४ तारिकासु मोहमयीनगरे संस्कृतसाहित्यसम्मेलनस्य त्रयोविंशमधिवेशन सफलतया सम्पूर्त्तिमगमत। सम्मेलनेऽस्मिन् उपद्विसहस्रं प्रतिनिधियो देशस्य औदीच्य-दाक्षिणात्यभागयोः उपस्थिता आसन्। सम्मेलनस्योद्घाटन मोहमयीप्रदेशस्य राज्यपालः श्रीहरेकृष्णमेहताबमहोदयः सम्पादयामास। अधिवेशनस्याध्यक्षपद माननीयाः वयोवृद्धाः श्रीगोवर्द्धनपीठाधीश्वराः पुरीशङ्कराचार्याः श्रीभारतीकृष्णतीर्थमहाभागा अलमकुर्वन्।

२ जूनतारिकायां त्रिवादनसमये वैदिकानां मङ्गलाचरणेन सहैव सम्मेलनकार्याणां शुभारंभोऽभूत्। श्रीशङ्कराचार्याणां श्रीराज्यपालमहाभागानां च सम्मेलनमण्डपे शुभागमनेन साकमेव मोहमय्याः कलेक्टरमहाभागः श्रीनाडकर्णीमहोदयः परिचयभाषणं प्रादात्। महाशयेनानेनोक्तं यदस्माकं राज्यपालमहाभागो न केवल कतिपयविश्वविद्यालयानां भूतपूर्वो वर्त्तमानश्च कुलपतिः, अपितु संस्कृतं स्निह्यत्यपि। अद्य भूयसा काठिन्येन समायोजितस्य सम्मेलनस्य, यस्मिन् सार्द्धसहस्रजनाः प्रतिनिधित्वेन सम्मिलिताः. राज्यपालमहाभागः उद्घाटनं विदधातीति हर्षास्पदम्।

ततो मोहमयीराज्यपाल श्रीहरेकृष्णमेहताबमहाभागः स्वकीयमुद्घाटनभाषणमदात्। अनेनोक्तं यत् संस्कृतभाषा भारतीयजीवनविकासस्य कृते आवश्यकी। संस्कृते न केवलं धार्मिकम् अथवा सांस्कृतिक साहित्यं लभ्यते अपितु राजनीतिकमपि साहित्यमत्र भूयस्तरामस्ति-चाणक्यो राजनीतेरेकतमो लेखकः। पञ्चतन्त्रम्, महाभारतस्य शान्तिपर्व, मुद्राराक्षसनाटकादयश्च राजनीतिरेव तु। एतस्य पुरातनराजनीतिज्ञानस्य कृते संस्कृतभाषाया प्रसारः सर्वथाऽऽकाङ्क्षणीयः। एतस्या विश्वविद्यालयेष्वनिवार्यतायै, राष्ट्रभाषात्वाय चापि प्रयत्न आवश्यक.। किन्तु एतस्या भाषाया व्याकरण सरलीक्रियेत इत्यस्याऽवश्यकताऽस्ति। भाषेयं सभ्यसमाजेऽद्यापि पठितुं भाषितुमवबोद्धुं च शक्यते। इयं पूर्वं काश्यां चिररात्राय व्यवहारभाषाऽभूत्। इयं पण्डितैर्वृथैव कठिनीक्रियते। अद्यापि सरला संस्कृतभाषा वक्तुं बोद्धुं च पार्यते। अहं यद्यपि सस्कृत वक्तुं न शक्नोमि तथापि बोद्धुं सम्यक् शक्नोमि। नेहरूमहोदयोऽपि मुद्राराक्षसनाटकदर्शने महान् उत्सु-

---

समस्तेऽपि संसारे तद्विचाराणां सम्मानमजायत। जात्यादिभेदानामपि तद्विचारे कोऽपि संकोचः नासीत्। कोऽपि अवरजातौ समुत्पन्नः पुरुषः स्वकीयामुन्नति सम्पादयितुं न शक्नोति-इति स नानुमनुते स्म। तन्मतावलम्बिनां कृते सर्वाणि द्वाराण्युद्घाटितान्यासन्।

एव परिशीलनेन ज्ञायते यदसशयं भगवान् बुद्धः अस्माक भारतस्य महती विभूतिरासीत्। अद्यापि तस्य नाम्ना विश्वस्य सम्मुखे उन्नत भवति भारतस्य शिरः। ससारस्य इतरदेशेष्वद्यापि तन्मतावलम्बिनां संख्या गरीयसी दृश्यते। अस्माकमपि भारतीयानां स्वतन्त्राताप्राप्तेरनन्तरामिदं कर्तव्यकोटौ प्रविष्टमावश्यकं कार्यं यद् वयमीदृशीनां विभूतीनां चरित्रानुशीलनेन स्वकीय चरित्रस्य निर्माण कुर्याम। तस्मिन्नेव मार्गे पदमग्रे कुर्वन्तो वयं पुनरपि भारतं विश्वगुरुत्वस्य महनीये पदे प्रतिष्ठितं करिष्याम इति दृढो विश्वासः।

कोऽभूत् । स समयो निकटे यदा प्रत्येकं जनः संस्कृतं शिक्षितुं बाध्यो भविष्यति। अहं विश्वसिमि यत्सभ्य-समाजो भाषामिमां दैनन्दिने व्यवहारे गृहीत्वा एतस्याः प्रचारे योगदानं कर्त्ता ।

महोमयी—राज्यपालमहोदयस्य भाषणानन्तरं विन्ध्यप्रदेशस्य राज्यपालः स्वकीये भाषणे विश्वस्य प्रमुखतमाया, आध्यात्मिक्याश्चास्या भाषाया रक्षाया महतीमावश्यकतां घोषयामास। ततो गणेशशास्त्रिमहोदय सम्मेलने प्राप्तान् संदेशान् श्रावयामास ।

ततः श्रीपाददामोदरसातवलेकरमहाभागः ( स्वागताध्यक्षः ) राज्यपालमहाभागाय धन्यवादान् अदात्। महाभागेनानेन कथितं यद् द्वादशवर्षदेशीया बालका अपि व्यवहारे सस्कृतमेव वदन्ति इति बहुत्र मया दृष्टम्। अस्यामेव सभायां श्रीमाधवाचार्यस्यापि स्वागतसमितिप्रतिनिधिरूपेण भाषणमभूत्।

सातवलेकरमहोदयेन निजभाषणे सर्वेषां प्रतिनिधीनां स्वागतमाचरता प्रोक्तं यत्संस्कृतभाषा सर्वप्रान्तीयभाषासु अर्धाधिकशब्दरूपेण विद्यमाना। अर्थात् ६० प्रतिशतं शब्दाः प्रान्तीयभाषासु संस्कृतभाषाया लभ्यन्ते। इयमस्माकमद्यापि धार्मिकी भाषा। धर्मकर्माणि अनयैव भाषया भवन्ति। वस्तुत इयं भाषा न कठिना। सन्धेरल्पीयसा प्रयोगेण, समासराहित्यादिना, व्याकरणस्य दुरूहनियमशिथिलीकरणेन चेयं सरलीकर्तुं प्रसारयितुं च शक्या। विश्वभाषासु भूयांसः शब्दाः संस्कृतस्य प्राप्यन्ते।

सम्मेलनेऽस्मिन् वैदिकसाहित्यस्य गणितशास्त्रस्य चालौकिकज्ञानवन्तः श्रीभारतीकृष्णतीर्थमहाभागाः सभापत्यमलंकुर्युरिति प्रस्तावोऽपि सातवलेकरमहाशयैरुपस्तुतः। श्रीकेदारनाथसारस्वतः समर्थितवान् प्रस्तावमिमम्। सभापतिना स्वासनेऽलंकृते प्रभावतीराजे सुरुचिरगीतेन संतोषितवती सभासदः। मुंबईशिक्षाविभागेन सम्मेलनाय पञ्चशतरूप्यकदानघोषणायां कृतायां समेलनमन्त्री श्रीकेदारनाथसारस्वतो वार्षिक विवरणमश्रावयत्। द्वारकापीठेश्वरशंकराचार्याणां श्रीमदभिनवसच्चिदानन्दतीर्थानां भाषणानन्तरं पुरीपीठेश्वराः श्रीभारतीकृष्णतीर्थपादाः स्वभाषणमारभन्त। अध्यक्षीयभाषणस्यास्य कतिपये अंशाः परस्ताद्भारत्यां प्रकाशमेष्यन्ति। अध्यक्षीयभाषणे संस्कृतभाषा आंग्लभाषापेक्षया न कठिना। काबुलादिविदेशवद्भारतेऽपि संस्कृतमनिवार्यं स्यात्, सुगभीरा सेयं भाषा मननार्हा इत्यादि मार्मिकमासीदुक्तम्।

**संस्कृतप्रदर्शिन्या उद्घाटनम्**— अधिवेशनस्य प्रथम एव दिवसे "भारती" मासिकपत्रकार्यालयेन समायोजिता संस्कृतप्रदर्शिनी प्रातः श्रीपाददामोदरसातवलेकरमहोदयेनोद्घाटिता। प्रदर्शिन्यामस्यां वैदिककालादारभ्य वर्त्तमानकालपर्यन्तं संस्कृतसाहित्यस्य विकासो रङ्गचित्रैः, रेखाचित्रैः, रूपरेखाभिः, चार्टैश्च प्रदर्शितोऽभूत्। संस्कृतस्य कथासाहित्यात् काव्येभ्यश्चापि सुरम्यस्थलानि कथाश्च चित्रितान्यभूवन्। प्रदर्शिनी सेयं उपदशसहस्रजनैर्दृष्टा उपस्तुता च। प्रतिनिधिभिः "एवंविधाः प्रयत्नाः संस्कृतप्रचारायावश्यका" इति मतं प्राकाशि। द्वारकापीठस्य जगद्गुरुशंकराचार्यैः, वैद्यगजाननमहाभागैः, अन्यैश्चापि जनैः प्रदर्शिन्यै लिखिता प्रशस्तिर्दत्ता। प्रदर्शिनीयं प्रयागे कुम्भमेलावसरे, जालन्धर-जयपुर-कोटा-अलवर-इत्यादिनगरेषु संस्कृतसम्मेलनावसरेषु चाप्यायोजिताऽभवत्।

अस्मिन्नेव दिवसे सायं नाटकद्वयस्यायोजनमभूत्। नाटकद्वयमिदं "लालावैद्यो" "मालाभविष्यं" च आसीत्। नाटकद्वयेऽपि नागपुरस्य सुप्रवीणैरभिनेतृभिर्भृशं सन्तोषिता द्रष्टारः।

अपरस्मिन् दिवसे—(३।६।५६) मुख्याधिवेशने प्रस्तावाः समारब्धाः। "संस्कृतं राष्ट्रभाषा भवेद्" इति प्रस्तावमधिकृत्य भूयान् विमर्शो विवादश्चारब्धः। दक्षिणाञ्चलवासिभिः प्रतिनिधिभिः संस्कृतस्य राष्ट्रभाषात्वे महान् आग्रहः प्रदर्शितः। एतेषामाकूतमासीत् यद् हिन्दीभाषा एकस्य प्रान्तस्य मातृभाषाऽस्ति। एवंविधा भाषा न समग्रराष्ट्रस्य भाषा भवितुं योग्या। संस्कृतं हि विश्वजनीना, राष्ट्रव्यापिनी च मूलभाषा; अतः सैव राष्ट्रभाषात्वार्हा। कतिपयैरितरैः पण्डितैश्च प्रस्तावोऽयं न यथावत्समर्थितः, तन्मते हिन्दी एवाभूद् राष्ट्रभाषा, संस्कृतं तु तत्पृष्ठपोषिकैव इत्यादि।

राष्ट्रभाषात्वप्रस्तावस्य पक्षे श्रीचक्रदेवः, पं० ईश्वरचन्द्रशास्त्री, वासुदेवशास्त्री, माधवाचार्यः, माधवब्रह्मचारी, वेङ्कटेशशास्त्री पूना, वेङ्कटेशशास्त्री चिदम्बरम्, पं० नन्दकिशोरशर्मा, कुलकर्णी नागपुरम् इत्यादयो विद्वांसः अभाषन्त। सर्वेषां भावः सोऽयमेवासीद्यत् सर्वप्रान्तीयभाषाणां जननी संस्कृतं केवलमीदृशी भाषा या सर्वस्मिन्नपि भारते समानरूपेण भाषितु-




सम्मेलनस्य प्रथमदिवसे द्वारकापीठेश्वराः श्रीमदभिनवसच्चिदानन्दतीर्था भाषमाणा दृश्यन्ते चित्रस्य दक्षिणतः। तदन्तिकं सम्मेलनाध्यक्षाः श्रीभारतीतीर्थपादाः पुरीपीठेश्वराः स्थितासन्ति। श्वेतोष्णीषधराः श्रीपाददामोदरसातवलेकरमहोदया, [स्वागताध्यक्षः] अपि ध्यानमुद्रायामवलोक्यन्ते।

मवबोद्धुं च शक्या: । एतस्या: प्रचाराय इदमावश्यकं यदियं राष्ट्रभाषा घोषिता भवेत् इत्यादि । किन्तु प्रो. सुमनवारमहाशयोऽकथयत् यत्साम्प्रत सद्य एव संस्कृतं राष्ट्रभाषा न शक्यते निर्मातुम् । इय हिन्दीभाषाया मूलरूपेणैव समादराही । राष्ट्रभाषात्वाग्रहं विहाय अद्य एतस्या: पठनपाठने प्रचार्येताम् इत्येवाकांक्षितम् इत्यादि । जयपुरीयेन शिवदत्तशास्त्रिणा संस्कृतस्य राष्ट्रभाषात्वाय महतां बलिदानानां पण्डितै: परस्परं संस्कृते एव व्यवहारस्य चावश्यकता घोषिता ।जयपुर-संस्कृतकालेजाध्यक्ष: श्रीचन्द्रशेखरशास्त्री अभाषत यद् वयं राष्ट्रभाषा संस्कृत स्यादित्युद्घोषयाम' किन्तु सत्यंमनसा वक्तव्यं यत् चत्वारिंशत्कोटिषु कति अद्य सस्कृतं भाषन्ते बुध्यन्ति च—कति च पण्डिता: स्वबालान् सस्कृतं पाठयन्ति ।? अद्य ये संस्कृतभाषाद्वारा धनमुपार्ज्य स्वसुतान् आङ्गलभाषां पाठयन्ति ते गां दुग्ध्वा खरीं पोषयन्ति ।

सङ्क्षेपत: प्रश्नमिममाधारीकृत्य भूयान् विवाद: प्रासरत् । श्रीमाधवाचार्येणापि विषयेऽस्मिन बहु भाषितम् । संस्कृतभाषा यदीयन्त प्रचार लभेत यज्जनभाषा सा स्यात्तदा राष्ट्रभाषात्व तस्या उचितमित्यादि बहूनामाशयोऽभूत् अन्ते प्रश्नस्यास्य निर्णयार्थमेका उपसमितिर्निर्वाचिताऽभूत् ।

अस्मिन्नेव दिवसे सायं 'प्रस्तावाना स्वीकृति अनुवृत्तमेव प्रस्तावमाधारीकृत्य श्रीसातवलेकरमहाशयस्य म. म. श्रीगिरधरशर्मणां च भाषणे सजाते यत्र सर्वे प्रतिनिधय: संतुष्टा: जाता: । महामहोपाध्याये सांप्रतिकी राष्ट्रभाषापरिस्थितिमुपवर्ण्य हिन्दीभाषाया: सस्कृतस्य च स्थानं स्पष्टीकृतम् । रात्रौ मृच्छकटिकं नाटकं संस्कृतेऽभिनीतम् । दिनेऽस्मिन् संयुक्तमहाराष्ट्रवादिभिर्नगरे विभिन्नक्षेत्रेषु उपद्रवा आसन् कृता. । अतएव नाटके पूर्णोपस्थिति: न आसीत् तथापि द्वादशशतकल्पैर्जनै: नाटकमिदं दृष्टम् । नाटकस्यास्य प्रस्तोतु: दात्रीभाटवडेकरस्य अभूतपूर्वा सफलता सस्कृतनाट्यकलाया लोकप्रियतां पिशुनयतिस्म । पुरस्कारवितरणानन्तर कार्यक्रमोऽयं पूर्ण: ।

अन्तिमदिवसे [ ४ जून ]—प्रात:

अवशिष्टेषु प्रस्तावेषु विचार: कृत: । सम्मेलने पारितानां प्रस्तावानां विवरणं प्रामाणिकरूपेण भारत्यां प्रकाशमेष्यति । साय त्रिवादनत: सार्धहोरां यावत् परिचयसभा चलिता । अस्यां बहूनां सम्मतमानां महानुभावानां परिचय: प्राप्त: । श्रीरामचन्द्र वामन कुमारे महोदय: राजस्थानसस्कृतसमिते. परिचय कार्यरूपरेखां चाददात् ।

अध्यक्षमहोदयानां समुपस्थितौ मुख्यकार्यक्रम: प्रारब्ध: । इदानींतनी कार्यप्रणाली हृदयहारिणी गाम्भीर्यपूर्णा चाभवत् । म म श्रीगिरधरशर्मणां, श्रीसातवलेकरमहोदयानां तथा श्रीमत्या: प्रभावतीराजेमहोदयाया:, श्रीकपिलदेवमहोदयानां च हृदयानन्दप्रदानि भाषणानि जातानि । भारते संस्कृतशिक्षाप्रश्न:, विश्वविद्यालयेषु संस्कृतस्य स्थानमित्यादि विषया अभूवन् विवेचिता: ।

श्रीगिरधरशर्मणां भाषणे दार्शनिकताया:वैज्ञानिकतायाश्च पुटेन रमणीया: विचारा.प्रस्तुता: । एतदनन्तरं प्रस्तावस्वीकृतिरभूत् । 'मधुरेण समापयेदि' त्युक्तिमनुसृत्य सगीतकं वीणावादनं चाकर्ण्य कार्यकर्तृभि: सम्मेलनस्य साङ्गता घोषिता ।

# भारती

( संस्कृतस्य प्रमुखं मासिकपत्रम् )



येन प्रवाहिता लोके,
सेयं संवित्-सरस्वती ।
सर्वोपजीव्यो भगवान्,
वेदव्यासः प्रणम्यताम् ॥



वर्षम् ६ | नवमाङ्कः | मूल्यम् वार्षिकम् ३) रु० एकस्याङ्कस्य ।=)

—मद्रास-मध्यप्रदेश-सौराष्ट्र-भूपाल-उत्तरप्रदेश-बिहार-पञ्चनद-आन्ध्र-सर्वकारैः स्वीकृता —

# ❋ विषय–सूची ❋



सूचना :—सर्वे ग्राहकाः सूच्यन्ते यत् पत्रव्यवहारावसरे निजग्राहकसंख्यां स्वस्मिन् पत्रे अवश्यं दर्शयेयुः अन्यथा पत्रोत्तरे बाधा समुत्पस्यन्ते ।

## —❋ "भारती" पत्रस्य उद्देश्यानि नियमाश्च ❋—

१. संस्कृतभाषायाः प्रचारः, सरले संस्कृते सामयिकानां विचाराणाम्, उत्कृष्टाया मानसिकविचारपरिपोषिकायाः सामग्र्याश्च समर्पणम्, अस्य पत्रस्योद्देश्यानि ।

२. 'भारती' पत्रस्य वार्षिक शुल्कं ३) रूप्यकत्रयम् ।

३. मासिकत्रमिदं प्रमासं पूर्णिमासं पूर्णिमायां तिथौ प्रकाशितं स्यात् ।

४. कस्यांकस्य मूल्यम् ।≈) आणकषट्कम् ।

सम्पादकः—
कविशिरोमणि
भट्टश्रीमथुरानाथशास्त्री
सहसम्पादक —
देवर्षिकलानाथशास्त्री B. A.
जयपुरम

प्रबन्ध-सम्पादकः—
गिरिराजशर्माशास्त्री

# भारती

भानुवद् भारतीयानां भास्वद्भवनभासिनी ।
भागीरथीव भावाढ्या भारते भातु भारती ॥

वर्षः ६ | आषाढशुक्ला १, सं० २०१३ | अङ्कः ९

## वर्षाः समुपागताः !!

(घनाक्षरी)

हर्षितकृषीवलकलितभूमिकर्षा किल
कामिकुललोपितविमर्षा सुखसगता
नभसि निबद्धमेघसघर्षा. प्रबुद्धनव—
कामशरामर्षा साधु सर्वजनताऽऽनता ।
मञ्जुनाथ मानिनीसमूहमानधर्षा. कृत—
शोभाविप्रकर्षा कामतर्षाधिकमागता
वलगद्वारिवर्षा भुग्नभुवनवितर्षा कृत—
केकिकुलहर्षा सखि वर्षा समुपागता. ॥

सम्पादकः

ग्रीष्मे दिग्दिगन्ते तीव्रतपनप्रतापतप्त—
तोकतोयतटिनी-तटाकतति-तृषिता
सोष्मणा समीरणेन काममियमाकुला
विलोकिता धरित्री सत्कुलाङ्गनेव मृषिता ।
सम्प्रति कथञ्चित् पुरुहूतपुरुसत्कृपया
व्यक्तवारिदाभा वृष्टिवेलासौ विलसिता।
धावद्धूम्रधाराधरधीरध्वान्तधूम्या धूलि--
धूसरेव सेय सर्वजगती परिणता ॥

सहसम्पादकः

# ★ आभरण-तृष्णा ★

( ले० महोपाध्याय प वासुदेवशास्त्री व गेवाडीकरः साहित्याचार्य', काव्य-वेद तर्क-तीर्थम्, शोलापुर )

"भवद्गृहप्रवेशादारभ्य किं मे सुखम्। अहोरात्रं केवल श्रम एवानुभूयते। मम सख्यः सुखसागरे निमज्जन्ति। प्रतिक्षण नवनवानि चीनांशुकानि दुकूलानि च परिदधति। विविधैर्भूषणैरात्मानं भूषयन्ति। रमन्ते च भर्तृभिः सह वसन्तोदारसमये उद्यानेषु। नैकविधानि सुरभीणि कुसुमानि ऋतुकालोद्भवानि अवतंसयन्ति। अत्र तु युवतिजनप्रियाणामेतेषां प्रसाधनानां नामान्यपि न श्रूयन्ते। किमुत दर्शनानि। कण्ठे दृढां शिलां बद्ध्वा पित्रा गभीरे कूपे किं तु न क्षिप्ता। अस्माद् विवाहात् कूपप्रक्षेपणमपि वरम्।"

निखिलं दिवसं क्षेत्रकर्मभिः श्रान्तस्य क्षुत्पिपासाकुलस्य नरेन्द्रस्य गृह प्रविष्टमात्रस्य श्रुतिपथं तत्पत्न्या विलासवत्या इदं वज्रपातविषमं वचः पपात। नरेन्द्रो नन्दिग्रामनिवासिनो निर्धनस्य रवीन्द्रस्य कर्षकस्य पुत्रः। शैशव एव उपरते पितरि मात्रा स पोषितो वर्धितश्च। तस्मै समुचितामक्षरशिक्षां विधाय माता त कृषिव्यापारे न्ययुङ्क्त। ततो द्वाविंशतिवर्षदेशीयस्य तस्य विवाहो विलासिन्या सह मात्रा विहितः। तस्या पिता अकिञ्चनत्वान्महता धनवता साकं स्वकन्यायाः परि य विध तुमक्षमः। विलासिनी च सौन्दर्ये रतिमपि अतिशेते। सा तु यथार्थनाम्नी विलासिनी। बाल्यात् प्रभृति सा अलङ्कारप्रिया प्रसाधनाभिलाषिणी च। कृषिवृत्त्या जीवन् नरेन्द्रो नातिनिर्धनः समुचितैरन्नवस्त्रादिभिर्भार्यां पोषितुं क्षमोऽपि तस्याः शृङ्गाराभिलाषां सम्पादयितु सर्वथा अक्षम.। तेन हि सदैव सा गुणवत्यपि भर्तरि न सन्तुष्टा। पर्याप्तप्रसाधनाभावात् तेन समं सततं कलहायते।

नरेन्द्रस्य अधन्यतया सा तद्दिने एव तद्ग्रामवर्तिनो महाधनस्य मदनस्य मदनसरूपस्य नवपरिणीतां भूषणभूषितां वधूं ददर्श। मदनस्य पिता कस्यापि संस्थानाधिपस्य प्रधानामात्यपदं महान्त कालं समलङ्कृतवान्। तद्वशात् तस्य सन्निधौ महान् धनराशिः सस्थितः। अन्यच्च तस्य कृषिकार्यं सततं प्रवर्धते। मदनो विधिज्ञपरीक्षोत्तीर्णोऽपि बहुधनत्वाद् एकपुत्रत्वाच्च पित्रा स्वसन्निधावेव स्थापितः। स तद्वियोगशङ्कया तं दूरीकर्तुं नोत्सहते। अस्मिन् विवाहप्रसङ्गे स महतीं वरदक्षिणामलभत। मदनस्य पिता द्रव्यलोभाद् वध्वाः सौन्दर्यहीनतां नागणयत्। कुरूपां तां रत्नोद्भासितैर्भूषणैरुद्भासितावयवां स्वां तनुं च सौन्दर्यातिशायिनीमपि अलङ्कारहीनां विलोक्य सा विलासिनी नितरां सक्रुद्धा निष्ठुरवचसा पतिं भृशं निरभर्त्सयत्। एवं निर्भर्त्सितो नरेन्द्रः प्रत्यभाषत – "एतादृशमकिञ्चनं वरं नाहं वरीतुकामा" इति पूर्वमेव स्वजनकं त्वमवक्ष्यश्चेत् स ते परिणयं मदनसमेन महाधनिकेन सार्धं व्यधास्यत्। त्वं च रत्नभासुरैः सुवर्णालङ्कारैरलंकृताऽभविष्यः।"

"अपि मां निन्दसि" सा प्रत्याह।

"न हि न हि सत्यमेव ब्रवीमि। कुसुमिता अतिमुक्तलता सहकारपादपं विहाय कण्टकजालेन संगता"।

"स्वकर्मणो न जिह्रेषि। प्रत्युत भार्यामेव वागङ्कुशेन प्रहरसि"।

"न मे एवंविधं भागधेयम्। येन त्वां भूषणभूषिताङ्गीं विदधामि"।

"स्फुटं किं न अभिधत्से न त्वं मे रोचसे, न मे त्वयि प्रीतिः इति। प्रेमासक्तस्य किं वा न शक्यम्।"

"त्वं तु अलङ्कारप्रिया। तदन्यन्न ते किमपि प्रेयो जगति।"

"यथा सकला ललना अलङ्कारमभिलषन्ति।तथैवाहम्।"

"भवतु। यतिष्ये त्वां प्रसाधयितुं प्रसादयितुं च।"

(२)

कलत्रस्य निशिततरैर्बाणैर्हृदि अत्यन्तं विद्धो नरेन्द्रो दरिद्रे पत्यौ कान्तापि न स्निह्यति इत्येतद् यदुच्यते तत्सर्वथाऽवितथं मेने। दरिद्रेण नरेण न कदापि दारपरिग्रहः कर्तव्यः। अधुना क उपायः।अनुभवितव्यं मया स्वस्यैव अविचारस्य फलम्। इदानीं देशान्तरं गत्वा जीवितनिरपेक्षं श्रमं संपाद्यापि केवलं धनस्य संग्रहः कर्तव्यः। इयं जनेभ्यः स्ववदनं भूषणभूषितं कुंकुमतिलकरहितं वा दर्शयेत्।" एवमादि चिन्तयतस्तस्य निशा गता। विशुद्धया सर्वाधिकया प्रीत्या विलासिनीं संतोषयितुं स बहु प्रायतत। परमद्य तेनानुभूतं यद् नारीहृदयबन्धने काञ्चनजालमेव सुदृढम्। न तु प्रेमजालम्। "कान्ता वरयते रूपम्" इति यदुक्तं केनचित् कविना तत्तु सुतरामसत्यम्। 'कान्ता वरयते द्रव्यम्।"

एवं चिन्तयित्वा स जराजीर्णदेहां जननीं बालं च स्वानुजं सपदि परित्यज्य तस्मिन्नेव प्रत्यूषे प्रियादपि स्वगेहान्निर्गतः। स प्रथमं मद्रासनगरं प्रविष्टः। तत्र कञ्चित् कालं कस्यचिद् धनिकस्य मन्दिरे द्वाररक्षकत्वेन नियुक्त आसीत्। तत्रस्थो मलयद्वीपे श्रमजीविनां जीविका बहुलाभप्रदा सुस्था चेति कुतोऽपि श्रुत्वा स तत्र प्रयातः। यतो न तस्य काचिद् विद्या नापि कला यया बहुधनोपार्जना क्रियेत। अतो धनेप्सुना तेन केवलेन कर्मकरेण भाव्यम्। तत्र द्वीपे क्षेत्रेषु बहवो भृतिभुजः श्रमं कृत्वा महतीं भूतिं संपादयन्त आसन्। नरेन्द्रोऽपि तेषु प्रविष्टः। तत्रत्या भृतकाः प्रायेण मिष्टान्नभक्षणे केचिद् मदिरापाने केऽपि अपेयपाने अभक्ष्यभक्षणे च बहुधनं व्ययीकुर्वाणा आसन्। नरेन्द्रस्तु न मिष्टान्नं भक्षति नापि च पानं कुरुते। अविरतश्रमेण सोऽनुदिनं दुर्बलो जायते स्म। स कमपि पत्रं न लिखति स्म न च कोऽपि तं प्रति।

एवमविश्रान्तं श्रान्त्वा प्रत्यहं तस्मिन् धनं संचिन्वाने एकस्मिन्नहनि कश्चित्कर्मकरस्तमुवाच–'नरेन्द्र, नन्दिग्रामनिवासी मदनो नाम कश्चिद् युवा धनिकः त्वां सविशेषं पृच्छति स्म। त्वद्गतां वार्तां ब्रुवाणाय शतं रूपकान् पारितोषिकत्वेन च दातुं प्रवृत्तः। तथा प्रवर्तमानं तं विज्ञाय जातशङ्का वयं "नात्रभवता पृच्छ्यमानो निर्दिष्टगुणविशिष्टो नन्दिग्रामनिवासी युवा वर्ततेऽत्र न चास्माभिर्दृष्टपूर्वस्तादृशः कश्चन।" इत्यलीकमब्रूम। ततः खिन्नमानसः स निवृत्तः।" इमं वृत्तान्तं निशम्य नरेन्द्रश्चिन्ताक्रान्तो जातः। स मनस्यकरोत् "मदनो मां किमर्थं मार्गयते। किं सत्यमेव स मां कस्मिन्नप्यपाये पातयितुमिच्छति। कथं तस्यैषा कुमतिर्जाता। तस्मादत्र मे चिरनिवासो

नोचितः। शीघ्रमेव मया गृहं प्रति निवर्तितव्यम्। यदि समधिकान् संवत्सरानत्रैव स्थास्यामि तत इतोऽप्यधिकं द्रव्य सचेष्यामि। तेन पर्याप्तानि भूषणानि विलासिन्याः कृते संपत्स्यन्ते। भवतु। अलमेतावता। अनेनैव धनेन यावन्ति भूषणानि लप्स्ये तान्यैव सम्पाद्य तस्यै समर्पयिष्यामि।" इति विचार्य अल्पैरेवाहोभिः स स्वगृहं परावृत्तः।

( ३ )

"गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः।" इत्यत्र सर्वेषां विदुषामैकमत्यम्। परं व्यवहारे विपरीतं प्रतीतं भवति। मदनस्य पत्नी पतिभक्तिपरायणा सुशीला गुणवती सती न भर्तुर्बहुमता। यथा यथा सा पति संतोषयितुं प्रायतत तथा तथा स समधिकमेवासतुष्टोऽभवत्। तस्मात् सा परमोद्विग्ना सकलकार्यनिरपेक्षा बभूव। सोऽपि तस्याः समुचितानपि व्यापारान् अयथार्थानेवामन्यत। तत्रापि गण्डस्योपरि पिटिका संवृत्ता। तस्या अधन्यतया स विलासिन्या दयते स्म। ईदृशी त्रैलोक्यसुन्दरी क्लिश्यमानां विलोक्य स तन्मूलं नरेन्द्रं सदैव निन्दति। तद्विषयिणी प्रथम दया ततः शनैः शनैः प्रीतिस्तद्धृदय प्रविवेश। पुत्रवियोगजेन दुःखेनाकुलां नरेन्द्रम तर सान्त्वयितु पूर्वं क्वचित् क्वचित् समागच्छन् मदनो विलासिन्या दुरवस्थयाऽनुकम्पितः प्रायः प्रतिदिनं नरेन्द्रगेहं समायाति। एव विवर्धमानस्नेहः स सततं तामेव चिन्तयति। तस्य चित्त प्रविष्टा विलासिनीमूर्तिः सुमङ्गलायै प्रवेशमेव न ददाति। कृतप्रयत्नापि दुर्बलाशा सा पश्चात् प्रतिभाषमाणा अधिकतरमेव अप्रियाऽभवत्।

अथैकदा सा समानवयोभिः सखीभिः साकमन्तःपुरे सङ्गीतालापैरात्मान विनोदयन्ती आसीत्। तदसहमानस्तत्पतिरकस्माद् अभ्यन्तर प्रविश्य सकोपं प्राह—"कोऽय कलकलः। किमयं सङ्गीतसमयः? किमेतत् सङ्गीतकम् उत काककार्कश्यम्। गृहेऽवस्थानमपि दुःखतरं सजातम्। किंचित् स्वास्थ्यमपि न लभे। भवनमिद कान्तारादप्यतिरिच्यते।" एव सहसा युवतिजनमेलापकं प्रविश्य परुषतर तस्मिन् भाषमाणे सकलोऽपि सखीगणो झटित्यन्तरागारं प्रविष्टः। एतेन तस्य वर्तनेन सहचरीसमक्ष तर्जिता सा सुमङ्गला व्यालीव सक्रुद्धा निःश्वसन्ती त प्रतिबभाषे- "किमिदं मूढत्वम् अथवा दुर्विनीतत्वम्। किं न्वयं शिष्टजनानुगतः पन्थाः? ग्राम्यः पुरुष इव सहसा अवरोधगृहं प्रविश्य विश्रब्धालापमग्ने परस्त्रीसमूहे यदेव शब्दायते भवान्। सभ्यस्य नागरिकस्य भवनमिदमिति कृत्वा समायाता अत्रैताः विश्रब्धाः। एववर्तिनाऽस्य गृहस्य स्वामिना सम्यक् प्रदर्शिता सुजनता।" इति ब्रुवाणां तामाक्षिप्य प्रभूतकोपाविष्टो मदनः प्रत्युवाच—"अहमस्य मन्दिरस्य स्वामी। यथाकाममत्र वर्तिष्ये। का त्वं मामेवं ब्रुवती।" सा प्रत्युवाच-"अहमप्येतस्य मन्दिरस्य स्वामिनी। सखीसमेताऽऽत्मानं रमयितुमपि किं नास्ति मे विभवोऽत्र।" एवंवादिनीं तां स भूयो निजगाद-"अलं बहुना प्रजल्पितेन। मम मन्युनोद्दीपितेन कस्ते लाभः।" इत्युक्त्वा निर्गच्छन्त तं साऽवादीत्। "भवतु। अतः परमस्मिन् गेहे मम निवसन न समुचितम्। अद्य यावन्मे भ्रम आसीद् यन्ममेदं गृहमिति। पर सोऽद्य व्यपगतः। सुष्ठु, त्वयाऽहमिदानी स्वच्छन्दचारिणी कृता। या नारी पत्युर्हृदयस्य न प्रभवति सा न कदापि

तस्य विभवादिकस्य।" एवं भाषमाणा सा तत्क्षणं स्वाङ्गाद् भूषणान्यवतार्य केवलेनैकवाससा पत्युर्भवनात् प्रस्थिता।

स्वमन्दिरात् तथा निर्यान्तीं तां विलोक्य मदनो मनस्यकरोत्—"एषा मामनापृच्छय निर्गच्छन्ती मामवमन्यते। किमिति मयाऽपि सा निवारणीया! यातु कामम्। किं तया मे या मां न गणयति।" इति विचार्य स स्वागारे निश्चलोतिष्ठत्।

( ४ )

स्वभवनं परित्यज्य यातस्य नरेन्द्रस्य त्रीणि वर्षाणि व्यतीतानि। निरीक्षकाभावात् प्रतिवर्षं कृपिव्यापारोऽतिनिष्फलो जायते। सञ्चितमपि सकलं शनैः शनैर्विलयं गतम्। नरेन्द्रस्य जननी कनीयान् भ्राता च क्षुत्क्षामकण्ठौ भिक्षार्थं परिभ्रमतः। एतदसहमानो मदनः किञ्चित् साहाय्य विदधाति। सुमङ्गलाया गृहत्यागानन्तरं संभ्रान्तः स क्षणं चिन्तयामास—"नरेन्द्रस्य निर्वसतो बहूनि दिनान्यतीतानि। विचीयमानस्यापि तस्य न कापि वार्ता समुपलभ्यते। विलासिनी वराकी दुःखमनुभवति। उभावप्यावां व्यसनसब्रह्मचारिणौ। अपि नाम वामः सकामो भवेत्।" एवं विचिन्तयमानः स भूयो भूयो विलासिनीसमाकृष्टमनास्तत्परामर्शार्थं तद्गेहं समायाति। पर विवेकस्त विनिपाताद् रक्षति।

अथैकस्मिन्नहनि विलासिनी सायं प्राङ्गणे तमेव विचिन्तयन्त्युपविष्टाऽऽसीत्। मदनोऽप्यकस्मात् तत्र समायातः। तं सा प्रपच्छ। "कुतः समागतो भवानिदानीम्।" स वदति—"नरेन्द्रस्य वार्तां प्रष्टुं नगररक्षाकार्यालयं प्रति गतोऽहम्। परं न किञ्चिदपि विदितं भवति। अन्दमानद्वीपे स वर्तते इति प्रथमं श्रुतम्। पर प्रत्यक्षतया अवलोकने कृते सोऽपर व पुरुषो ज्ञातः। का गतिः। किं करोमि। किं तु पारितोषिकस्य मूल्यं समधिकं वर्धयानि।" साऽभणत्—"व्ययीक्रियताम्। भवत्सकाशे हि प्रभूतं धनं विद्यते।"

"मैवम्। त्वां दुःखिता द्रष्टुं न पारयामि खलु। आस्तां तावदेतत् सर्वम्। अत्र किञ्चित् प्रष्टुकामोऽस्मि। त्व प्रतिवक्तुमर्हसि। युवयोः कलहस्य तादृशस्य किं वा कारणम्" एव तेन पृष्टा सा प्रत्यभाषत—"एकदा मया सहजं भर्ता भणितः। नास्ति मेऽलङ्कारः। मम सहचर्यो भूषणैर्भूषिता सुख विहरन्ति। अलङ्कारविहीनं स्वं जीवितमहमधन्यं मन्ये। लज्जे च स्त्रीसमाजे व्यवहर्तुम्।" एतन्मे वचनं निशम्य मे पतिः प्राह—"अकिञ्चनोऽहम्। कुतोऽलङ्कारा निर्धनेन मया प्राप्तव्या।" ततोऽहं न्यगदम्—"यद्येवं किमर्थं विवाहो विहितः।" एतेन मे वचसा संक्रुद्धः स सर्वानस्मान् संत्यज्य केनाप्यलक्षितो देशान्तरं गतः।" अत्रान्तरेऽभ्यन्तरान्नरेन्द्रमाता समागत्य सकोपमाह—"वत्स, किं ब्रवीमि। न त्व परः। सोऽस्यां नितान्तं स्निह्यति। इयं प्राणेभ्योऽपि प्रिया तस्य। परमनया कुलटया न कदापि मधुरया गिरा स तोषितः। प्रीत्या नामतोऽपि नेयं परिचिता। यदा स भवनान्निर्वासितस्तदैवैषा प्रीता।" श्वश्र्वा इदं वचः श्रुत्वा साऽभाषत—"धनोपार्जनार्थं पुरुषेण देशाटनं कर्तव्यमेव। अत्र को वा विशेषः। ममैवेदं दुर्भगत्वं यदलङ्कारविहीनत्वम्।" इत्युक्त्वा रोदितुमारभत। ततस्तस्यां वृद्धायां निर्गतायां मदनस्तां सान्त्वयामास—"तुभ्यमहमलङ्कारान् दास्यामि।" अनेन प्रहृष्टान्तरात्मा सा केवलं स्निग्धं त चिरं वीक्षितवती।

# श्रीचिदम्बरकवये श्रद्धाञ्जलिः

( ले० "वाचस्पतिः", पि० सीतारामशास्त्री तेनालि, गुण्टूरुमण्डलम्, आन्ध्रराष्ट्रम् । )

चिदम्बरपितृव्याय, मान्याय च महात्मनाम् ।
कवितांम्बुधिचन्द्राय, करवाणि नमश्शतम् ॥१॥

सरला कविताऽस्य राजते,
मधुरा भावगभीरिमान्विता ।
विशदा बुधराजसत्कृता,
हिमवच्छैलपतज्झरीसमा ॥२॥

शतावधानी कविचन्द्रवन्दितः,
रसानुसन्धायिकवित्वशोभितः ।
कलानिधिः काकवितण्डभण्डकः,
सदस्सु पञ्चास्यसमो रराज वै ॥३॥

गीर्वाणान्ध्रकवित्वनिर्मितिपटुर्मेधाविनामग्रणीः,
सालङ्काररसौचितीगुणगणैस्साहित्यसन्धायकैः ।
ग्रन्थान्सज्जनतोषणाय बहुलं चक्रे यशस्थापकान्
तादृक्च पिशुपाटिवंशतिलकं सेवे कवित्वार्थदम् ॥४॥

आशुधाराप्रवाहेण, कविनागर्वदर्पितान् ।
भङ्क्त्वा मुहुर्विवादेषु, प्रागाद् ब्रह्म सुदुर्लभम् ।

---

( ५ )

मदनेन प्रेषितानि भूषणानि परिधाय प्रमुदिता विलासिनी मुकुरे दिनस्य बहुकृत्वःस्वप्रतिबिम्बं विलोकितवती । हर्षातिरेकवशाद् उद्भ्रान्तचित्तेव सततमितस्ततो गृहे परिभ्रमन्त्यतिष्ठत् । भूषणभूषिताङ्गी सा नारीजनस्य प्रशंसया न तथा संतोषमलभत यथा मदनस्य । तद्दिने चिरं मदनायत्तचित्ता मदनं प्रतीक्षमाणा सती हतमनोरथा जाता । इत्थं निशायाः प्रथमः प्रहरस्तयाऽतिवाहितः । उद्यानात् समाहृतानां जातिकुसुमानां मालां ग्रथितुमारभत । एतस्मिन्नेव समये धूलिधूसरो लम्बकूर्चः हस्तेनैकेन महतीं मञ्जूषाम् अन्येन च शय्योपकरणं वहन् दीर्घाध्वश्रमखिन्नः कश्चित्पान्थो भवन प्रविष्टः सहसा तस्याः शयनागारं प्राप्तः । अकस्मात् पुरतः उपस्थितं तं पुरुषं वीक्ष्य विलज्जिता सा चिरेण पतिः इति व्यजानात् । सपदि वाससा हस्तगतानि जातिकुसुमानि प्रच्छादितान्यपि परिमलैः सर्वतो विसर्पद्भिः स्वं भाव संसूचयन्ति । आभरणैर्जटितां स्वभार्यां शयनागारे निषण्णां पुष्पस्रजं ग्रन्थन्तीं विलोक्य स नरेन्द्रः अशनिपातहतः पादप इव तत्क्षणं तूष्णीमापन्नः ।

अत्रान्तरे तत्र समागता तस्य माता क्षीणदेहं निश्चेष्टमिव भूमौ पतितं प्रवासात् प्रतिनिवृत्तं स्वसुतं विलोक्य कण्ठे कृत्वा प्रारोदीत् । यस्याः कृते परदेशे येनाविरतं श्रान्त्वा अर्थोपार्जना कृता तस्या एव प्रोषितभर्तृकाया एवंविधां शृङ्गारचेष्टां प्रेक्ष्य प्रवासादुपावृत्तस्य पत्युर्हृदयं कथं विदीर्णं स्यात् । अयि भोः पाठकाः क्षणं विचिन्त्यताम् । अनेन रणरणकेन विनष्टां चेतनां न स कथमपि प्रत्यपद्यत ।

\+ \+ \+

अनेन प्रसङ्गेन प्रकृतिमापन्नो मदनो व्यचिन्तयत्–"नार्याः शीलं नूनं रूपादतिरिच्यते ।" ततः स सुमङ्गलाया मातुर्गृहं गत्वा क्षमां याचित्वा तां स्वगृहमानीतवान् ।

बालभारती—

# हास्यपरवशो राजकुमारः

( ले० बालहितैषी )

कस्यचित् नृपस्य एक. राजकुमार· आसीत् । सर्वै. गुणैः युक्तः अपि सः सदैव हास्यप्रियोऽभवत् । सः सदा सर्वदा हसन् एव तिष्ठति स्म । यदा सः हास्ययुक्तो भवति स्म तदा सः किमपि अन्यत कार्यं यथार्थतः सम्पादयितुं न प्रबभूव ।

सयोगात् एकस्मिन दिने तस्य भूपस्य राजभवने धनं चोरयितुं चौराः प्रविष्टाः । स्वस्य कक्षे प्रविष्टं एकं चौरं सः राजकुमारः बलात भुजपाशे बध्वा "चौरः ! चौरः !!" इति उच्चै आक्रोशत् । राजकुमारस्य त आक्रोशं श्रुत्वा स राजा तत्र आगच्छत् । राजकुमारेण धृतं चौर दूरतः दृष्ट्वा राजा युवराज अवोचत्—"भोः ! भोः !! राजकुमार !!! तव सहायतां कर्तुं चौर च दण्डयितुं अहं अधुनैव आगच्छामि तावत् त्व चौर धृत्वा तिष्ठ । यदि चौरः त्वां हासयितुं अपि चेष्टेत तथापि त्व तं मा मुञ्च !" इति । राजकुमार. स्वजनकस्य तस्य नृपस्य तद् वचन श्रुत्वा स्वहास्यस्य स्मृति लब्ध्वा स्वभाववशात् हसितु प्रारभत ।

अथ चौरः राजकुमारस्य हास्यदुर्बलतां ज्ञात्वा स्वयमेव तं कुमार बहु हास्य जनयित्वा हासयामास । हास्यमग्न· कुमारः यावत् हास्यपरो भूत्वा 'हीहीही !' इति हसति तावत् चौरः तस्य भुजपाशस्य बन्धनं शिथिल कृत्वा स्वात्मानं मोचयित्वा तत्क्षणं शीघ्रं पलायितः ।

अतः वयमपि वृथा हास्यपरवशतां स्वभावे स्थिरीकृत्य राजकुमार इव न कदापि स्वकार्यं विनाशयेम । महता कारणेन विना हास्य नाम धीरतां, वीरतां, शौर्यं पाण्डित्यं अन्यान् च सर्वान् पुरुषोचितान् गुणान नाशयति । वृथाहास्यं अनर्थकर इति ज्ञातव्यम् ।

---

विनोदः—

# वाक्कीलस्य वाक्कीलनम्

श्रीबुद्धिपिटकशर्मणा वह्निप्रसादवर्मणे रूप्यकद्विशती ऋणरूपेण प्रदत्ताऽभूत् । वह्निवर्मणा प्रतिश्रुतमासीत् यत् स एकेन वर्षेण रूप्यकाणि प्रतिदास्यति । बुद्धिपिटको वह्निवर्मणः सकाशं गतः किन्तु वह्निवर्मणा पणसदृशमुत्तरं दत्तम् । अन्ततो बुद्धिपिटको वाक्कीलस्य (Lawyer) सकाशं गत. । कथितमनेन यद् वह्निवर्मा ऋणं न परिशोधयति । वाक्कीलेन पृष्टम्—"अपि भवान् तत्सविधे द्रव्यं याचितुं गतः ?" "गतोऽभूयम्"—बुद्धिपिटकोऽवोचत् । "ततस्तेन किं कथितम् ?" पुनः पृष्टवान् वाक्कीलः । "तेन सक्रोधं भर्त्सितोऽहम्—न दास्यामि, नरके गच्छ । इति"

"ततः किं भवता कृतम् ?" पुनः पृष्टं वाक्कीलेन ।

"अहं तथैव भवत्कार्यालये आगतः "

बुद्धिपिटकस्योत्तरमिद श्रुत्वा वाक्कीलस्यापि वाककीलिताऽभूत् ।

—सह सम्पादकः

# ** भारते भिक्षुकसमस्या **

विद्याभूषणः श्रीगणेशरामशर्मा, राजेन्द्र-इन्टर-कॉलिज, झालावाड (राजस्थानम्)

[हिन्द्या. 'सरिता'पत्रिकायां श्रीरामगोपालमहाशयेन लिखितस्य लेखस्यानुवादरूपो निबन्धोऽयं लेखक-संपादकयोः कृतज्ञताभारमङ्गीकुर्वता लेखकेन प्रेषितस्तदनुरोधेन प्रकाश्यते पाठकानां प्रमोदाय सम्पादक ]

अस्माक देशेऽस्मिन् भारतवर्षेऽनुमानात्प्रायो विंशतिलक्षसंख्याका भिक्षुका वर्तन्ते। तत्र पुनर्विभिन्नसम्प्रदायान्तर्गतानां साधूनां सन्यासिनां च गणना पृथक् विद्यते। नात्र लेखे तादृशानां वर्गविशेषाश्रितानां भिक्षुकानां चर्चा क्रियते। परमेतज्ज्ञातव्य भवति यद्धि साधुसंन्यासिनामिव भिक्षुकाना मपि च कोऽपि संसार एवान्यादृशो भवति। एतेषां विभिन्नां वर्गाः श्रेण्यः कोट्यः स्तरा वा वर्तन्ते भिक्षायाचनस्यामीषां विधय, प्रकाराः, पद्धतयः, शैल्यः, प्रणाल्यश्च विभिन्नाः सन्ति। एतेषु भिक्षुवर्गेषु केचित्तु मनोविज्ञानाध्ययनेऽतीव मनोरञ्जका विषया जायन्ते। केचन याचकवर्गास्तु सुविशालनगरनिवासिनां, तत्तत्स्थानान्यधिवसतां सामाजिकानाम् तथा प्रान्तीयसर्वकाराणां कृते समस्यारूपा विद्यन्ते। तेषां सङ्कटनानि, भिक्षायाचनस्य वैज्ञानिका प्रकाराश्चातीव जटिला दुःखनिदानभूताश्च वर्तन्ते !!!

इदानीं मोहमयीप्रान्त एव लक्षाधिका भिक्षवः समुपलभ्यन्ते। मोहमय्यां नगर्यामेव प्रायस्त्रयोविंशतिसहस्रसंख्याकास्त एते भिक्षुकाः सन्ति। सेयं मोहमयी नगरी विदेशेभ्यो भारतमागच्छतां भारताद् बहिर्निर्गच्छतां चैकं मुख्य प्रवेशनिर्गमनयोर्द्वारमास्ते। तत्र धनवैभवसम्पद्भिराजते। तत्र जनसाधारणस्य सविधे तन्मानं धनमप्यस्ति यद्भिक्षुकानां भिक्षापात्रे किञ्चिदुत्स्रष्टु पार्येत अयमेव हि हेतुर्यदिमे भिक्षुका भारतदेशस्यास्यान्यप्रान्तापेक्षया मोहमयीमेव भिक्षावृत्तेरनुत्तमं केन्द्रमाकलयन्ति। मोहमयीराज्ये निवसत्सु भिक्षुकेष्वर्द्ध प्राया अन्यप्रान्तीया भवन्ति।

स्वराज्यप्राप्ते कतिचनवर्षेभ्यः पूर्वं मोहमय्यां भिक्षावृत्तेर्निरोधाय काश्चिन्न्यायनियमधारा निरधार्यन्त। अथैकदा तन्नगरनिवासिन इतस्ततो मार्गेषु भ्राम्यन्तः सर्वेऽपि भिक्षवो निगृह्याधिकारिभिः कारागारमभ्यरोध्यन्त। अनेन तत्र पथि यातायातं कुर्वाणानां नागरिकानां भद्रजनानां तथाविधेभ्यो याचकेभ्यः काचिन्निर्वृतिरन्वभूयत ये काकिणीद्वयीं याचमानाः सुदूरं यावत्तान्निर्निरुद्धमनुसरन्ति स्म। परन्तु भिक्षुकानां सर्वेषां सौभाग्यात्तदानीं राजनीति-गतान्दोलनकारिणामभियुक्तानां कृते कारागाराणि सर्वाणि रिक्तानि समपेक्ष्यन्त सर्वकारेण ततस्ते सर्वे बन्धनान्मोचिताः। परन्त्वस्मिन् प्रयोगे किलाधिकारिणो जनाः कंश्चन महतो महर्घाननुभवान् प्रापुः। तथा हि यदि सर्वेऽपि भिक्षवो बलाद् बन्दीकृत्य पुनरपि कारागारेषु निरुध्येरंस्तदा सर्वकारेण तत्परिपोषणाय प्रतिवर्षं भूरिद्रव्यराशिर्व्ययितव्यो भवेत्। अपरं च यदि सर्वाण्यपि कारागाराणि भिक्षुसंकुलानि सन्तिष्ठेरंस्तर्हि क्व नु खल्वन्येऽपराधिनः स्थाप्येरन्? समुपस्थिते हीत्थं विकल्पे भिक्षुसदनान्युद्घाटयितुमेका योजना प्रावर्तत। फलतोऽधुना मोहमय्यामष्टादश-

भिक्षुसदनानि वर्तन्ते पर नैभिर्भिक्षुसमस्या समाधातुं पार्यते प्रत्युत सा यथापूर्वं मुखं व्यादाय तिष्ठति। सदनेष्वेषु प्रायो द्विसहस्रसंख्यकानां भिक्षूणां समावेशयोग्यानि पृथक् पृथक् निवासस्थानानि सन्ति पुनर्भिक्षुसख्या तु महती हि विद्यते। अतोऽवरोधावशिष्टा भूयांसो याचकास्त्वधुनापि मोहमय्या सर्वेष्वपि च मार्गेषु रथ्यासु चत्वरेषु च यत्र तत्र सर्वत्रागतिकाः कान्दिशीका निलक्ष्य भ्राम्यन्तः स्वाविष्कृतैस्तैस्तैः प्रकारैरुपायान्तरैश्च लोकान् भिक्षां याचमाना दरीदृश्यन्ते। कतिचित्सु स्थानविशेषेष्वेते सर्वकारकृता भिक्षानिषेधनियमा विधिविहिता वर्तन्ते न तु सर्वत्र, यतः खल्वापत्तिरियं स्थान एवापतति यद् भिक्षानिरोधनियमविधे रचनायाः पूर्वमेवैभ्यो वर्तमानेभ्यो भिक्षुभ्यो निर्वाहयोग्यजीविकावृत्तिदानाय सर्वकारः किमपि पारिश्रमिक लाभोचित कार्यं प्रयच्छेदथवामीषां भिक्षुकानां नियन्त्रणक्षमानि भिक्षुसदनान्युद्घाटयेन्नाम नूनम्। नोचेत्प्रचलितानेन वर्तमानेन प्रकारेण मोहमय्यामिव सर्वत्रैवात्र देशे भिक्षुकेभ्यः प्रजानां परित्राणं चिराय दुष्करं भवति।

एतदप्यनुमान्ति केचित् यद्धि मोहमय्यामनुवर्षं षट्त्रिंशल्लक्षरूप्यकमूल्या भिक्षा भिक्षवो लभन्ते। केचिज्जनाः सहानुभूतिपरवशाः केचन धर्मधियाऽन्ये च 'श्रिया देयं, भिया देयं, संविदा देयम्' इति वा पर्यन्ते कथमप्यात्मानं भिक्षुकत्रासाद्रक्षितुमेव हि तेभ्यो भिक्षां प्रयच्छन्ति। कियद्भ्यो वर्षेभ्यः प्राक् मोहमय्यां कश्चिद्विधानसभासदस्यो महाशय स्वकीयेनैकेन विधेयकेन प्रस्तावमेकमत्र विषये समुपास्थापयत्। तत्र तेनैतत्समर्थितं यद्धि भिक्षुकविरुद्धं भिक्षावरोधाय च काचिद्वैधानिकी प्रक्रिया क्रियेत तदा किमपि शोभनं फल स्यात्। परमेषप्रस्तावोऽव्यावहारिकोऽप्रियश्चामन्यत। ततो नासौ स्वीकृतिमाससाद। सहानुभूतिस्तावन्मानवस्वभावस्य सहजातो गुणः। नेमं कोऽपि विधिनियमो निरोद्धुं प्रभवति नाम नूनम्।

कालिकातायां भिक्षुककृता काचिदन्यैवापत्तिरास्ते। तत्रापि भिक्षावरोधनियमो वर्तते भिक्षुगृहाण्यपि च विद्यन्ते। विगते कस्मिंश्चिद्वर्षे भिक्षुसदनस्थितानां भिक्षूणां गणनां कृत्वा तत्त्वतो ज्ञानमेतद्यत्सदनेष्वेषु न केवल वङ्गीया एव भिक्षवो विद्यन्ते परं चान्यप्रान्तीया अपि च वर्तन्ते। भिक्षुसदनाधिकारिणस्तत्तत्प्रान्तसर्वकारेभ्योऽमीषां हस्तान्तरण प्रास्तुवन्। ५०१ शरणार्थिभ्योऽतिरिक्ताः ३१५ बिहारप्रान्तीयाः, ८४ उत्तरप्रदेशीयाः, ६६ मद्राशीयाः, ३८ मध्यप्रदेशीयाः, ३६ उत्कलप्रान्तीयाः, १६ मोहमयीवास्तव्याः, १७ पञ्चाम्बुवासिनः, ८ देहलीप्रान्तस्थाश्चासन्। अतो भिन्ना १७ नयपालाश्रयिणः, ४ वर्मावलम्बिनश्चासन्। विषयेऽत्र प्रान्ताधिकरणैः सह पत्रव्यवहारोऽपि प्रारभ्यत, पर सः निष्फलो निष्पन्नः। मोहमयीं विहाय नान्यत्र कस्मिन्नपि प्रान्ते देशस्य भिक्षानिवारणाय कोऽपि प्रतिबन्धो वा व्यापको विधानजुष्टो नियमो वा वर्तते। अतएवैतेषां प्रान्तानाम् शासकास्तमिमं प्रस्तावमत्यद्भुत विचित्रमव्यावहारिक चामन्यन्त। ततस्ते सर्वेऽस्यां दिशि कामपि प्रगति कर्तुं नोदसहन्त।

कालिकातायामपि च भिक्षुनिरोधव्यवस्था शोभना नास्ते। तत्र केचन न्यायालया निर्लक्ष्यं बभ्रम्यमाणानाम् केषांचिद्याचकानामभियोगाञ्छृण्वन्ति। यद्यपि निर्हेतुकं पर्यटत्सु परिव्राजकेष्वमीषु सन्त्येवानेकविधाः परमेतेषु प्रायो याचका एवान्तर्गृहीता भवन्ति। इमे च न्यायालयाः प्रतिसप्ताहं दिनत्रयमेवात्र सम्बन्धिनि

कार्ये लक्ष्यमवदधति। कोटपालिनी (Police) दिवसेष्वेषु त्रिषु प्रात. षड्वादनादारभ्य सार्द्धदशपर्यन्तं भिक्षुकान्निगृह्यैकादशवादनसमये न्यायालयमुपस्थापयन्ति। याचकाश्चापि तमिमं राज्यकृतं नियमक्रम सम्यग्जानन्ति, विषयेऽत्र सतर्का. सावधाना जागरूकाश्च तिष्ठन्ति। सप्ताहे दिनत्रय प्रतिदिन चैकादशवादनानन्तरमवशिष्टे समये ते निर्भय स्वच्छन्द स्वतन्त्र च यथेच्छ विचरन्तो यत्र तत्र सर्वत्र निर्बाध भिक्षां याचन्ते!

उत्तरप्रदेशे तु भिक्षुसमस्या ततोऽपि विषमा महती महीयसी वर्वर्ति। राज्याधिकारिणश्च तामेतां स्थिति तत्त्वतः परिचिन्वन्ति। तत्र प्रदेशेऽनेकानि विख्यातानि सुमहान्ति तीर्थस्थानानि वर्तन्ते। तीर्थेष्वेषु प्रत्येक भिक्षुसङ्घाः समुपलभ्यन्ते। एषु क्वचित् क्वचित् संन्यासिनां तादृक् सम्मिश्रणं जात विद्यते यत्र सुपष्ट विभाजनं तेषामतीव दुष्करं भवति। कतिपये नवीनाः किन्तु प्रवीणा भिक्षवः परिव्राजां केषुचिद्वर्गेषु कञ्चित् कालं सहवास विधाय संन्यासिसम्प्रदायानाम् नामानि नियमांश्च परिचीय सुविधानुरोधादात्मानं वर्गविशेषस्यानुयायिनं प्रख्यापयन्ति वाचार्यविशेषस्यान्तेवासिनमुद्घोष्य भिक्षावर्जने दत्तचित्ताः सन्तो लोकान् भिक्षां याचन्ते। एवं ते सामान्यभिक्षुकापेक्षया किचिदुच्चस्तरीयां पदवीं प्राप्य सार्वकारविहितेभ्यो भिक्षुनिरोधनियमेभ्यः कथमपि सुरक्षितास्तिष्ठन्ति।

वाराणसेया भिक्षुकास्तु भिक्षावृत्ति वैज्ञानिकीं समघटयन्, तत्र भिक्षूनामनेके सङ्घाः सुसङ्घटिता निवसन्ति। ते प्रायोऽल्पवयस्कान् बालानपवाह्य तान् भिक्षायाचनकलां सटीकं सोपपत्तिक निपुणं च शिक्षयन्ति। सङ्घानेतान् प्रविष्टेषु बालेषु प्रायस्त एव भवन्ति यान प्रौढा भिक्षवस्तान् प्रलोभ्य प्रतार्यापवाह्य च तत्रानयन्ति। इत्थभूताः किशोरा भिक्षवो निर्धनकुटुम्बानां सततयो भवन्ति। सघेषु सम्मिलितास्ते स्वाश्रमेषु निवसन्तो यथारुचि स्वाद्वातृप्ति च भोजनं भुञ्जन्ति तेषां कृते सैषा भोजनोपलब्धिरेव हि पर्याप्तं प्रलोभन निष्पद्यते। तानेतान् भिक्षाश्रमकुलपतयश्चाचार्याः सगीत-कीर्तन-स्तुति-स्तोत्रपाठादिक शिक्षयित्वा भिक्षाकर्मकौशलं व्युत्पाद्य विपणिषु भिक्षाया नाय प्रहिण्वन्ति। न त एते केवल भिक्षामेव या न्ते प्रत्युत सति सम्भवे यथावसरं स्वक्षमतानुरूप चौर्यकर्मापि च साधयन्ति यत्ते स्वाश्रमेषु गुरुभ्योऽधीता भवन्ति। भिक्षाशिक्षापद्धतौ केचिदुपदेशाश्चैतेषां कृते निम्नाङ्किता दृश्यन्ताम्—

"उच्चैरध्ययनं पुरातनकथा स्त्रीभिः सहालापनं,
तासामर्भकलालनं पतिनुतिस्तत्पाकमिथ्यास्तुतिः।
आदेशश्च करावलम्बनविधिः पाण्डित्यलेखः क्रिया,
होरा गारुडमन्त्रतन्त्रविधयो भिक्षोर्गुणा द्वादश॥१॥"

एतादृशास्त इमे भिक्षूणामाश्रमास्तज्जीविकावृत्तिमूलाधारा इव जायन्ते। आश्रमकुलपतयस्तु तत्र स्थिताः स्वाश्रमव्यवस्थामेव विदधति। बालभिक्षवस्तथा निम्नवर्गीया वयस्का प्रौढा वा सर्वं दिनं घोरं परिश्रम्य याचितं धन संगृह्य समानीय च सर्वं कुलाचार्यचरणयोः समर्पयन्ति। आश्रमाश्चैते परस्परं सुसङ्घटिताः सुसम्बद्धाश्च भवन्ति। सङ्घटनेनानेनाश्रमसञ्चालकाः स्वाधीनान् भिक्षून् संयम्य नियन्त्रयन्ति। कियतः कालाद्रक्षाविभागः सर्वकारस्य विषयेऽत्र सावधानमन्वेषणपरः सूक्ष्मं दृष्टिपातं कुर्वाणश्चास्ते, परन्त्वेतानि भिक्षुसंघटनानि नाद्यावधि सम्यक् नियन्त्रितान्यभू-

# संस्कृतभाषायाः प्रचार आवश्यकः

( २३ तमे अधिवेशने स्वागताध्यक्षस्य पं. श्री. दा. सातवलेकरस्य अभिभाषणाद् उद्धृता अंशाः )

## संस्कृतभाषा जीवति

केचन वदन्ति "संस्कृतभाषा मृतेति"। मृताया अस्या भाषायाः प्रचारार्थम् एवंविधानां सम्मेलनानां उद्यमः किमर्थं कार्य" इति तेषां मतम्। असमञ्जसमेतत् कथनम्। संस्कृत भाषायां साप्ताहिका न, पाक्षिकाणि, मासिकानि च पत्राणि इदानी भारते देशे प्रकाश्यन्ते। तानि च ग्राहकैः पठ्यन्ते। किमेतत् अस्याः संस्कृतभाषाया जीवनस्य चिह्नं नास्ति ? कस्यां मृतायां भाषायां एवंविधानि पत्राणि प्रकाश्यन्ते ?

इदानीं प्रांतीयभाषा अनेकाः भारतस्य प्रा तेषु प्रचलिताः सन्ति। ताभिरेव प्रान्तीयव्यवहारो भवति तत्रत्यानां सर्वेषा-जनानाम्। प्रांतान्तरीय-व्यवहारार्थं

वन् परिणामतस्तानीमानि स्वच्छन्दमकुतोभय यथापूर्व वर्तमानानि दुश्चेष्टन्ते !

एतत् प्रतीयते यदिमे नन्वाश्रमाधीशा भिक्षुसङ्घटनस्य स्वशिष्यशिक्षणस्य च पद्धतिमिमां कदाचिदनाथालयेभ्यः क्रमशोऽशिक्षन्त। विशेषत उत्तरप्रदेशे तदिवान्यान्यप्रान्तेष्वपि च कतिपये स्वार्थान्धा जनाः कांश्चिदनाथान् किशोरान् धनोपार्जनस्य साधनत्वेनाकल्पयन्। अनाथसंरक्षणच्छलादेतैरनाथालयानुद्घाट्य शुल्कद्रव्यमेकत्रीक्रियते। पुनर्बालकानिमान् गानं वाद्यं भगवत्कीर्तनं संगीतकलां वाक्चातुर्यं वाध्याप्य तेभ्यो मासिकवेतनं गृह्यते भिक्षायाचनं वा तैः कार्यते। उत्तरप्रदेशस्य सर्वकारः संस्थानामेतादृशीनां नियन्त्रणाय प्रबन्ध कुर्वाणो वर्तते।

अथ केचित्पुनरनाथालयसंचालकेभ्योऽप्यतितराम् निकृष्टाः स्वार्थान्धा विद्यन्ते ये स्वमनःकल्पितायाः कस्याश्चित् संस्थायाः अभिधानघोषणेन भिक्षामुपार्जयन्ति। इत्थंविधा भिक्षवः प्रायो रेलगन्त्रीषु, मेलकेषु तथान्यत्र स्थानेषु यत्र चावसरानुरूप जनसमूहं समवयन्ति-तत्र नरनारीणां करुणां सहानुभूति समवेदनां च प्रणोद्य पर्याप्त धन सचिन्वति। मोहमय्यामेवंविधाः सर्वेऽपि भिक्षुकश्रेण्यामेव परगणिताः सन्ति परन्तु शेषेषु सर्वेष्वपि च प्रदेशेष्वेते निर्बाध स्वकार्यं साधयन्तो विराजन्ते।

कतिपये राजनीतिनेतारश्चाप्यार्थिकीनां सामाजिकीनां वा संस्थानां स्वयं नियुक्ताः सञ्चालका अपि मौनमुद्रया भिक्षावृत्तिसमुपार्जने दत्तचित्ता दृश्यन्ते। सार्वजनीनसकटकाले तथाविधानां भिक्षोपलब्धिरनायासं महतीं सफलतामावहति। अस्माकमत्र देशे यदा क्वचिदतिवृष्टिरनावृष्टिर्जलसम्प्लवो भूकम्पो वान्या वा काचिदीतिर्भीतिश्च भवति विपत्तिर्वा जनेष्वागतति तदैते तत्साहाय्यसंस्थाः समुद्घाट्य भिक्षां याचितुमारभन्ते। एतेषु कतिचिदवसरवादिनो जनाः केचिद्विख्यातनामानं नेतार स्वस्य कल्पितसंस्थाया अध्यक्षमुद्घोषयन्ति। अध्यक्षत्वेन परिकल्पितोऽसौ नेता तदा पश्चात्परितप्यते यदा तथ्यमेतदपथ्य जानीते यत्तस्य नाम्नः प्रसिद्धे दुरुपयोगो जातोऽस्ति।

क्रमशः

आंग्लराज्येन आंग्लभाषा प्रचारिता। सा आंग्लभाषा सार्धशतकवर्षपर्यन्तं अत्रत्ये राष्ट्रिये व्यवहारे सम्प्रयुक्तापि प्रतिशतकं पचभिर्भारतीयैः न ज्ञायते। अतः सा राष्ट्रभाषास्थानं प्राप्तुं असमर्था इति सिद्धमेव। आंग्लभाषाया आगमनात्पूर्वं संस्कृतभाषैव भारतराष्ट्रस्य राष्ट्रभाषा आसीदिति सिद्ध भवति ताम्रपट्टेषु प्रयुज्यमानां तां संस्कृतभाषां दृष्ट्वा। आंग्लागमनात्पूर्व अखिलस्य भारतस्य भाषा संस्कृतैवासीत्। आंग्लभाषाया. प्रवेशो भारते नाभविष्यत् तर्हि संस्कृतैव राष्ट्रभाषाऽभविष्यत् भारतस्य, सैव इदानींपर्यन्तं तथैव राष्ट्रभाषारूपेण समचलिष्यत् सर्वस्मिन् भारतदेशे ।

## संस्कृतभाषायां संस्काराः

सर्वेषां भारतीयानां हिंदूनां विवाहादिसंस्काराः संस्कृतभाषायामेव भवन्ति। सर्वाः पूजाविधयः उपासनाप्रकाराश्च संस्कृतभाषयैव क्रियन्ते। सर्वं आध्यात्मिक धार्मिक च कर्म हिंदूनां गृहेषु संस्कृतभाषयैव भवति। अतः धार्मिकानुष्ठानेषु हिंदूनां गृहे गृहे संस्कृतभाषैव प्रचलितास्तीति न कोऽपि तां प्रतिषेद्धुं समर्थ.।

इदानी संस्कृतभाषैव बोधभाषा अस्ति। अस्मिन् विषये केऽपि सदेह करिष्यन्ति। अतस्तेषां सज्ञानाय किमप्यत्र मया अवश्यं कथनीयम्।

यास्तु प्रान्तीया भाषाः सन्ति, तासु सर्वासु भाषासु प्रतिशतकं ६० वा ७० संस्कृतभाषायाः शब्दाः प्रयुज्यमाना दृश्यन्ते। वङ्गभाषायां तु इतोऽप्यधिकाः संस्कृतभाषायाः शब्दाः प्रयुज्यन्ते। मोहम्मदीया वङ्गीया अपि संस्कृतान् शब्दान् प्रयुञ्जन्ति। एवं सर्वासु प्रांतीयभाषासु प्रतिशतकं षष्टिपर्यन्तं संस्कृतपदानां उपयोगो भवति। द्राविडभाषासु अपि बहवः संस्कृतशब्दाः प्रयुज्यमाना दृश्यन्ते। अतः एवं वक्तुं शक्यते यत् प्रांतभाषाः प्रायः संस्कृतमय्य. सन्ति। संस्कृताः संस्कृतोद्भवाः शब्दाः तासु प्रतिशतक सप्ततिपर्यन्त प्रयुज्यमाना दृश्यन्ते। दृष्ट्वा एतत्सर्वं को नाम ब्रवीतुं शक्नोति यद् भारते संस्कृता भाषा मृतेति ?

संस्कृतभाषा सर्वासां प्रांतीयभाषाणां जननी भवतु, ज्येष्ठा भगिनी भवतु, पोषमित्री वा तासां सर्वासां भाषाणां भवतु, अथवा जीवयित्री सजीवयित्री वा भवतु। सर्वासां प्रांतभाषाणां परिपोषणं कर्तुं समर्था एषा संस्कृता भाषा वर्तते, इत्यत्र न कोऽपि सन्देहः।

यदि कस्यामेव प्रान्तभाषायां नवीनानि सज्ञापदानि निर्मातव्यानि भवेयु , तर्हि तानि संस्कृतपदान्येव निर्माय तत्र प्रयोक्तव्यानि । न अन्यमार्गेण नवीनामां संज्ञानां प्रवेशः कास्वपि प्रान्तीयभाषासु भवितुं शक्यः।

द्राविडभाषाणां आर्यभाषाभिः सह सघर्षो भवतीति कैश्चिदुच्यते. यदि सघर्ष एष सुदूरीकर्तव्यः तर्हि तद्दूरीकरण संस्कृतभाषाप्रचारेणैव भवितुं शक्यम्। द्राविडेषु प्रांतेष्वपि संस्कृतभाषायाः समानो वर्तते। नहि नहि। इदानी द्राविडेष्वेव प्रांतेषु संस्कृतभाषायाः प्रचारः सुमहान् वर्तते। उत्तरीयेषु प्रान्तेषु तथा न दृश्यते यथा दाक्षिणात्येषु प्रान्तेषु संस्कृतभाषा प्रचारो दृश्यते। अतः सिध्यति यत् प्रान्तीयसंघर्षस्य अपनयनं यदि केन भवितुं शक्यं तर्हि संस्कृतभाषायाः प्रचारेणैव भवितुं शक्यं नान्यथेति ज्ञातव्यम्।

## संस्कृतभाषा न कठिना

सस्कृतभाषा कठिनास्तीति असत्यः प्रवादो वर्तते अस्मिन् समये। प्रत्यक्षया रीत्या विचारे कृते सस्कृत-भाषा सुबोधतरा वर्तते। संस्कृनभाषापेक्षया सर्वाः प्रान्तीयभाषा. कठिनतराः सन्ति। दृश्यतां हिन्दी-संस्कृतयो· तुलना, या इदानी अत्रास्माभि· क्रियते—

तस्य पुत्रः याति = उसका पुत्र जाता है।

तस्य स्त्री याति = इसकी स्त्री जाती है।

तस्य मित्र याति = उसका मित्र जाना है।

अत्र सस्कृत-भाषायां पुल्लिग स्त्रीलिग-नपुंसक-लिगेषु 'तस्य' तथा 'याति' इति रूपेषु लिगभेदेन रूपभेदो न जायते, परन्तु हिन्दीभाषायां 'उसका' 'उसकी' तथा 'जाना' 'जाती' इति रूपभेदो जायते। मराठीभाषायां तु नपुंसकलिगेऽपि रूपान्तर अन्यदेव भवति। लिगभेदे सत्यपि क्रियारूपभेदो सस्कृते न भवति। प्रातीयभाषासु लिगभेदे सति सर्वनामरूपेषु च क्रियापदरूपेषु च रूपभेदो भवति इत्येतेन सस्कृतभाषायाः सुबोधत्वं, प्रान्तभाषाणां कठिनतरत्वं स्पष्ट भवति।

एवं सरलतराऽपि सस्कृभाषा कठिनतरा अस्तीति अनुभूयते इदानीतनैर्जनैरित्यपि सत्यमेव वर्तते, अस्य कारण महापण्डितानां पांडित्यं वर्तते। ये पण्डिता मध्यकाले अस्मिन् देशे जाताः, तै संस्कृत-भाषायां कठिनतमा. रचनाः कृताः। सा तेषां भाषा जनभाषा नासीत्, परं सा आसीत् साहित्यिकी पण्डितभाषा।

अस्माभिः या सस्कृतभाषा प्रचारयितव्या सा सस्कृतसाहित्यिकी भाषा ( पण्डितानां भाषा ) न भवितुं शक्या, सा तु जनभाषा एव भवितु शक्या। इति सर्वै अत्र सम्मिलितैः विद्वद्भिः ज्ञातव्यम्। तथा सर्वैः भवद्भि एतदर्थमेव यावान् प्रयत्नः कर्तुं शक्यः, तावान् प्रयत्नः कर्तव्यः। जनभाषारूपिणी या सस्कृत-भाषा सा एव प्रान्तीयभाषाणां साहाय्यकारिणी पोष-यित्र च भाषाभवितुमर्हति। या महापण्डितनां साहि-त्यिकी पण्डितभाषा अस्ति सा तु अल्पै एव पण्डितै-र्ज्ञातु शक्या। अत. सा कदाचिदपि जनभाषापदवी आरोढु नैव योग्या भविष्यति इति सर्वैः मनसि अव-धार्यम्। अनेनैव मार्गेण संस्कृतभाषायाः प्रचारः कर्तव्यः।

## भारतस्य बोधभाषा

यदा सस्कृतभाषा जनभाषा भविष्यति तदैव सा भारतराष्ट्रस्य अखिलस्य बोधभाषापि भविष्यति। इत्यत्र नास्ति सन्देहः। यावत्कालपर्यन्त एषा भारतस्य बोधभाषा न सजाता, तावत्कालपर्यन्त अस्माभिः संस्कृतभाषाया प्रचारार्थं प्रयत्नो विधेयः।

## संस्कृतभाषायां सन्धिकरणं विवक्षां अपेक्षते

संस्कृतभाषायां सन्धयो भवन्ति। परं सधयो जर्मनभाषायां रशियनभाषायामपि भवन्ति। परं संस्कृतभाषायां सन्धिकरण वाक्ये वक्तुरिच्छां अपे-क्षते। सन्धिविषये एष सार्वत्रिको नियमो वर्तते—

संहितैकपदे नित्या, नित्या धातूपसर्गयोः।
नित्या समासे, वाक्ये तु सा विवक्षामपेक्षते॥

वाक्ये सधिकरण वक्तुरिच्छां अपेक्षते। वक्तुः यादृशी इच्छा भवति तादृशी संहिता वाक्ये भवति।

अतएव संस्कृतभाषायां सन्धिभयं नास्ति। यत्र वक्तुः इच्छा भवेत्तत्र संधिः कर्तव्यः, वक्तुरिच्छा न

# श्रीकृष्णद्वैपायनः

[ नारायणशास्त्री काङ्करः ]

( म० म० प० श्रीगिरिधरशर्मचतुर्वेदानां व्यासविषयकनिबन्धस्याधारेण )

नमस्तस्मै भगवते व्यासायामिततेजसे ।
पपुर्ज्ञानमयं सौम्या यन्मुखाम्बुरुहासवम् ॥

अहो ! परमात्मा कीदृशः कृपालुः ? वयं तं विस्मरामः । किन्तु स स्वप्ने अपि अस्मान् न विस्मरति । स्वयं निरपेक्षः सन् अपि सदैव अस्माकं ध्यानं रक्षति। कलियुगे जनाः स्वल्पसत्वाः स्वल्पायुषः स्वल्पबुद्धयः च उत्पत्स्यन्ते । सम्पूर्णवेदानां ग्रहण-धारणयोः तेषां शक्तिः न स्थास्यति । वैदिकैः अनुष्ठानयज्ञादिभिः आत्मोद्धारः अपि तेषां कृते कठिनो भविष्यति । इदं विचार्य सर्वभूतहिते रतः रमारमणः द्वापरस्य अन्ते अवततार । महर्षि-कृष्णद्वैपायनस्य रूपे भगवतः अयम् अवतारः कलियुगिजनेभ्यः शास्त्रीयज्ञानं सुलभं कर्तुम् आसीत् ।

अस्य पिता महर्षिवसिष्ठस्य पौत्रः श्रीपाराशरमुनिः, माता च उपरिचरवसोः पुत्री सत्यवती बभूव । अयं द्वीपे जन्म जग्राह । अतः अस्य नाम द्वैपायनः । शरीरस्य वर्णः श्यामः । अस्मात् एष कृष्ण-द्वैपायनः । वेदान् व्यासयत् इति वेदव्यासः । एवं त्रिधा प्रसिध्यति । अयं स्वतः जन्मसिद्धः ज्ञानि-वर्यः । तथापि मर्यादारक्षणाय श्री'जातूकर्ण्य'स्य शिष्यतां स्वीचकार । कतिपयपुराणेषु वंशब्राह्मणे च एवं मिलति । अस्य मुख्य आश्रमः कुरुक्षेत्रे सरस्वतीतीरे आसीत् । तत्त्वविदः वदन्ति । अतएव महाभारते वर्णितं व्यासस्य हस्तिनापुरे युद्धस्थले च वारं वारम् आवागमनं सङ्गच्छते । अन्यथा दूरत्वात् इदं कथं सम्भाव्येत ?

मन्त्र-ब्राह्मणयोः सग्रहात्मकः वेदः पूर्वम् एक एव आसीत् । एते मन्त्राः समये समये विभिन्नऋषिभिः समाधौ साक्षात् कृताः आसन् । इमे यज्ञे उच्चार्यन्ते। यज्ञविधिप्रदर्शकाः मन्त्राः ब्राह्मणाः भवन्ति । किन्तु एतेषाम् उच्चारणम् आवश्यकं न, ज्ञानमात्रं पर्याप्तम् । यज्ञे सपत्नीकयजमानातिरिक्तम् अध्वर्युः, होता, उद्गाता, ब्रह्मा च इति चत्वारः ऋत्विजः भवन्ति । भगवान् श्रीद्वैपायनः एषां सुविधायै तदुपयोगिमन्त्रान् पृथक् पृथक् वर्गीकृत्य वेदं चतुर्धा विभाजयामास । इमे वेद-विभागाः संहितानाम्ना अपि प्रसिद्धाः सन्ति । एकैकसंहितायां कृतपरिश्रमः विद्वान् अनायासेन तद्विषये पारङ्गतः सञ्जायते । सर्वेषां कृते सम्पूर्णवेदस्य आवश्यकता न । यतः तेषां पृथक् संहिताः । केवलं ब्रह्मणः चतुर्वेदिता आवश्यकी । तत्र हेतुः, स हि इतरत्रयाणां निरीक्षकः । एवं विभागद्वारा भगवान् व्यासः ऋत्विग्भ्यः महतीं सुविधां सम्पादयामास ।

---

भवेत् तत्र सन्धिः न कर्तव्यः । एवं अत्रापि संस्कृतभाषायाः सारल्यमेव वर्तते ।

एवं रीत्या विचारे कृते, स्पष्टमेतत् प्रतीयते, यत् संस्कृता भाषा नैव कठिना, नापि अध्येतुम् अशक्या । आङ्गलभाषायां प्रावीण्यं प्राप्तुं विंशतिवर्षाणां कालोऽपि न्यून एव भवति, परन्तु संस्कृतभाषायां प्रावीण्यं त्रिष्वपि वर्षेषु प्राप्तुं शक्यम् । अत एव संस्कृतभाषायाः प्रचारोऽस्माभिः कार्यः ।

——

अस्य व्यासस्य चतुर्णां वेदानां प्रचाराय चत्वारः एव शिष्याः अभवन्। ऋग्वेदस्य शिष्यः पैल, यजुर्वेदस्य शिष्यः वैशम्पायनः, सामवेदस्य जैमिनिः अथर्ववेदस्य च सुमन्तुः शिष्यः आसीत्। वैशम्पायनस्य शिष्यः याज्ञवल्क्य अभवत्। अनयोः केनचन कारणेन विवादः संवृत्त। येन याज्ञवल्क्य गुरुगृहीतविद्यायाः वमनं कृत्वा सूर्योपासनया नूतन यजुर्वेद प्राप्तवान्। अयं शुक्लयजुर्वेदनाम्ना प्रसिद्धः। प्राचीन. तु कृष्णयजुर्वेदनाम्ना इति। एन तैत्तिरीयनाम्ना अपि व्यवहरन्ति जनाः। उभयोः वेदयोः मन्त्रसाम्ये सति अपि बहुत्र पाठभेद. दृश्यते। एतदतिरिक्त कृष्णे यजुर्वेदे मन्त्र-ब्राह्मणयोः मिश्रण किन्तु शुक्ले न। शुक्लः उत्तरभारते अधिक प्रचलति।

वेदानाम् अनधिकारि-स्त्री-शूद्रादीनाम् उद्धारकामनया तेषां धर्मज्ञानलाभाय भगवता वेदव्यासेन महाभारतं विरचितम्। ऐतिहासिकपद्धत्या लिखितस्य अस्य विद्यासागर-महाभारतग्रन्थस्य विदेशीया विद्वांस. अपि मुक्तकण्ठं प्रशसां कुर्वन्ति। संसारस्य यावान् इतिहासः अत्र मिलति, न तावान् अन्यत्र। संसारस्य ज्ञानं भगवतः व्यासस्य ज्ञानेन एव प्रकाशितम्। सर्वं किञ्चित् तस्य भुक्तोज्झितम् अस्ति। भगवता स्वय साभिमानम् अत्र एव ग्रन्थे प्रतिज्ञातम्। "यदिहास्ति तदन्यत्र, यन्नेहास्ति न तत् क्वचित्।" कि बहुना?

भगवतः व्यासस्य अवतारः तु जनकल्याणाय आसीत्। अनादिपुराणविद्याया. सम्बन्धे समये समये सम्भूताः ऋषि-मुनीनाम् अवतार-देवतानां च पारस्परिकाः संवादाः प्रवचनानि च एकत्र एव सगृहीतानि आसन्। सुविधादृष्ट्या १८ स्थानेषु इमां सामग्र विभक्तवान्। एतावत् एव न। सरलातिसरलभाषाया रोचक-रूपक कथादिद्वारा ताम् अलंकृत्य जनसाधारणोपयोगिनीं चकार। एषु सर्वेषु पुराणेषु ससारस्य सर्व विज्ञानं सुरक्षित वर्तते।

वेदान्तसूत्राणां रचयिता, पातञ्जलयोगसूत्राणां च भाष्यकर्त्ता अयम् एव व्यासदेवः। अर्वे अपि आस्तिक-सम्प्रदायाः एतेषाम् एव आधारे स्थिता.। उपनिषदां ज्ञानाय तु एतानि कुञ्जिकायन्ते।

व्याससदृशः महापुरुषः संसारे अद्यावधि न अवतीर्णः। अय ज्ञानस्य असीम. अनन्त. समुद्रः। भक्तेः परमपूज्यः आचार्य च अस्ति। विद्वत्तायां कवितायां. च अयम् एव पराकाष्ठा। संसारस्य सव दृश्य-श्रव्य-ज्ञेय पदार्था अत्र एव समाविशन्। व्यासः व्यास एव।

अय हि आधिकारिकः पुरुषः। यावद् अधिकारपूर्त्ति. न भवति तावत् अस्य स्थितिः सुनिश्चिता। अस्य हि अधिकारक्षेत्रं विस्तृतम्। वर्त्तमानवैवस्वतमन्वन्तरस्य पश्चात् आगामिनि सावर्णि-मन्वन्तरे सप्तर्षिमध्ये अपि तस्य एकं स्थानं सुरक्षितं भविष्यति। अतः अय चिरजीवी कथ्यते। अस्य उपदेशैः अस्य सुतः श्रीशुकदेवः मुक्तिम् अलभत। किन्तु स्वयम् अधिकारारूढत्वात् अधुना अपि मुक्तः नैव। धन्यतमा परोपकारिता भगवतः।

आगम्यताम्। अद्य तस्य भगवतः जन्मदिनम्। सर्वे अपि सम्भूय सद्-भाव-भक्ति-पुष्पैः भगवन्तं सद्गुरुं समर्चयामः। तदीयं संस्कृत-संस्कृति-सन्देशं गृहे गृहे प्रचार्य ईर्ष्या-मोहाऽभिमानैः शत्रुभिः आक्रान्त संसारं संरक्षामः च।

★★

## संपादकीयम्—

**विशालेऽस्मिन् भारते विभिन्नताया मध्येऽपि एकताया मूलं संस्कृतभाषायां निरूढम्**—राष्ट्रपति-डा राजेन्द्रप्रसादमहाभागो दक्षिणप्रान्तीयहैदराबादनगरे 'वेदान्तवर्द्धिनीसंस्कृतविद्यालयभवनस्य' शिलान्यास जुलाईमासस्य तृतीयतारिकायाम् करोदिति संवादपत्र-पाठकैर्विदितमेव ? तस्मिन् समारोहे राष्ट्रपतिमहाभागस्य यद् भाषणमभूत्तस्मिन् संस्कृतभाषाया महत्त्वस्य विषये यत्किल महाभागेनाऽनेन प्रोक्तं तद्धि संस्कृतानुरागिभिः संस्कृतविरोधकैश्चापि, सुतरां मननीयम् राष्ट्रपतिना प्रोक्तं यत्–"सर्वस्य ज्ञानस्य लाभः, जीवमात्र प्रति नैसर्गिक. प्रेमभावः, परमपितुः परमात्मनः अस्तित्वं प्रति दृढता आस्था च, सर्वतः पूर्वमस्यां संस्कृतभाषायामेव अवर्ण्यन्त। संस्कृताध्ययनस्य देशे उपेक्षण नूनम् सांस्कृतिकविकासस्य, चिरंतनविज्ञानस्यापि सर्वथातिरस्करण नाम। संस्कृताऽध्ययनस्य देशेऽस्मिन् सर्वतः प्रचार समर्थयमानेन राष्ट्रपतिना साधित यत्—त्रिसहस्रवर्षाणां सुदीर्घे व्यवधानकालेऽपि संस्कृताध्ययनस्य महत्त्व न कथ चिदपि तिरोहितं, न्यूनीभूतं वा। संस्कृतभाषायास्तत्साहित्यस्य च महत्त्व प्रारम्भतोऽद्याऽवधि न केनापि प्रकारेण क्षीणम्।

यदि वयमात्मान यथार्थरूपेण बोद्धु चेदभिलपामस्तर्हि संस्कृतभाषैव तत्सोहाय्य कर्तु शक्ता। संस्कृताध्ययनस्य अनुपमेयः समयोऽस्माक हस्ते, सम्प्रति समागतः। वर्तमानेऽस्मिन् वैज्ञानिकविकासयुगेऽपि संस्कृताध्ययन व्यावहारिकदृष्ट्या, उपयोगदृष्ट्या च सुतरामावश्यकम् विशालस्याऽस्य देशस्य परितो विभिन्नतायामपि एकताया मूल संस्कृतभाषामेव निहितम् विभिन्नभाषामये, नानाविधभिन्नभिन्नरीति-संस्कारमयेऽपि भारते संस्कृतेमूलस्रोतः संस्कृते एव स्पष्ट प्रतिबिम्बित वर्तते।

सेय संस्कृतभाषा आर्यभाषाणां जननी। दक्षिणाञ्चलस्य सर्वा अपि भाषा अनया प्रभाविताः सन्ति। तमिल-तेलगू-मलयालम-कन्नड-भाषासु संस्कृतग्रन्थानां प्रभाव. सुस्पष्ट प्रतीयते। उत्तर-दक्षिणभारतयोः मौलिक्या एकताया रहस्य संस्कृते निहितम्।" इत पूर्व हैदराबादस्य मुख्यमन्त्रिणा श्री बी० रामकृष्णरावेण स्वीये संक्षिप्तभाषणे ससमादर प्रोक्तं 'यत् हैदराबादे छात्राश्छात्राश्च संस्कृतविद्यालयेषु प्रवेश परमोत्कण्ठया वाञ्छन्ति।' शिक्षाविभागीयाः कर्णधारा विमृशन्तु संस्कृतभाषाया भारतवर्षेण साकमविच्छिन्न सबन्धम्।

**लन्दननगरे भारतप्रधानमन्त्रिणो भूयान् संमानः**—जुलाईमासस्य सेय तृतीया तारिका भारतप्रधानमन्त्रिणः श्रीनेहरूमहोदयस्य समानार्थमपि सर्वदा सस्मरणीया भवेत्। एतस्मिन् दिवसे श्रीनेहरूमहोदयो लन्दननगरे 'फ्रीडम आफ् दि सिटी आफ लन्दन" पदव्या समभूष्यत। उपाधिप्रदानसमये श्रीचेम्बरलेनमहाभागेन प्रोक्त यत्—"श्रीनेहरूमहोदयः पूर्व-पश्चिमप्रान्तानां मिथ सयोजिका एका 'कटिका' (कडी)स्ति। महाभागेऽस्मिन् अपारा नैतिकी शक्तिरनुभूता। तेनैतदपि प्रोक्त यत् महोदयस्यास्यैव नेतृत्वे भारतस्य संविधानं निर्मितमभूत्। अतएव नवीनस्य भारतस्य निर्माता सोयमेव परिगण्यते। एष हि साम्प्रत निजदेशवासिनामाचार-व्यवहाराणां सर्वोन्नतकरणाय प्रयतते।"

एतदुत्तरे नेहरूमहोदयेन प्रत्युक्तम्—'योऽय समानो मम सम्प्रति संप्रदर्शितः स हि ब्रिटेनभार-

तयोः सुखदसंबन्धस्य सुतरां परिचायकः। भारत-ब्रिटेनयोः सबन्धः ३५० वर्षपुरातनः। तस्य सबन्धस्य सोयं नवीनः प्रक्रमः। नेहरूमहाभागेन प्रोक्तं यद् भारत सम्प्रति राजनैतिक्यामार्थिक्यां च समुन्नतौ सलग्नम्। संभवतो भारतमिदं संसारस्य सर्वतो महत् प्रजातन्त्रम्। अस्माभिरार्थिकविकासस्य कृते सुबहु समाचरित, किन्तु साम्प्रतमपि भूयस्तरा कर्तव्यमवशिष्टम्।"

नेहरूमहोदयस्य समारोहेऽस्मिन् समागमनमपि समानसूचकमासीत्। स हि उन्मुक्ते अश्वयाने स्थित्वा सभामण्डपे समायासीत्, येन हि उभयपार्श्वयोः स्थिताया जनताया अभिवादनं स हि सादरमग्रहीत्। तस्मिन् समये मार्गेऽस्मिन् लोकानां यातायातं सर्वथा निरुद्धमक्रियत। अस्तु, भारतमन्त्रिणः समर्हणीयमिमं संमान मन्ये सर्वेपि राजनैतिकाः सर्वथा समभिनन्देयुः।

**मेधाया अद्भुतः परिचयः**—भारतीया आर्याः 'प्रतिभा'शक्तेरद्भुत चमत्कारं समग्रस्याऽपि भूमण्डलस्य सविधे चिरकालाद् दृत्तवन्तः, यस्याः प्रभावेण वेदोपनिषत्स्मृतिदर्शनादयो ग्रन्था वर्तमानकालिकान् वैज्ञानिकानपि विस्माययन्ति। महाकविकालिदासादीनां काव्यानि विज्ञानचमत्कृतेऽपि युगे सभ्यताऽभिमानिनः सप्तसमुद्रपारगामिनो वैदेशिकानपि चित्रयन्ति। किन्तु मेधायाः (धारणाशक्तेः) अपूर्वं चमत्कार सम्प्रति सम्प्रधारयन्तु ते महाभागाः ये विशालकायाना वेदादिसहितानां चिरकालात् कण्ठस्थीकरणेनैव सत्तां न कथञ्चिद् विश्वसन्ति। एतस्याः शक्तेर्मूर्तिमत्प्रमाणमस्ति प्रज्ञाचक्षुः श्रीधनराजमिश्रः। एतस्य महोदयस्य वेदोपनिषदादयोऽनेके ग्रथाः कण्ठस्था. सन्ति। एष महाभाग संप्रति 'कृशाश्व चन्द्रोदय' नामक खगोलसम्बन्धिनं ग्रन्थं लेखयति, यस्य परिमाणमस्ति १६००० षोडशसहस्रश्लोकात्मकम्। अस्मिन् कृशाश्वचन्द्रोदये एकविंशतिनक्षत्र-मण्डलानां तेषां सौरपरिवाराणाम्, ग्रहोपग्रहाणां च वर्णनं त्वस्त्येव। किन्तु ग्रन्थेऽस्मिन्, विभिन्न-नक्षत्र पर्यन्तं यानि यानानि पुरा गन्तुमशक्नुवन्, तेषामपि विवरणं दृत्तमस्ति। न किल, एतावदेव, अपि तु महदाश्चर्यमस्ति यत् तेषां यानानां निर्माणप्रक्रियाऽपि ग्रन्थेऽस्मिन् वर्णिताऽस्ति।

धनराजमिश्रमहोदयः साम्प्रतं वयसा द्व्यशीतिवर्षात्मकः (८२ वर्ष)। महाभागोयं ५ वर्षात्मको बालक एव शीतलाप्रकोपे निजं नेत्रज्योतिः सर्वथा हारयामास। किन्तु सेयमन्धता तस्य हृदयाऽऽलोक त्तिरोद्धुं नाऽशक्नोत्। अपि तु नेत्रयोर्ज्योतिः सर्वभावेन हृदयमनुप्रविष्टमिव। अतएव सोयं महाभाग. काश्यां विद्याध्ययनं प्रारभत। काश्याः कतिपये प्रसिद्धपण्डितास्तदेतस्य विलक्षणां प्रतिभां परीक्ष्य निजं शिष्यमिममकल्पयन्। सेयं वर्तमानाया एकोनविंशशताब्द्याः संकथा। अस्यां हि महाभागोऽयं काश्याम्, सौराष्ट्रे, दक्षिणाञ्चले च. बहूनां प्रख्यातपडितानां सविधे सस्कृतवाङ्मयस्य शिक्षामगृह्णात्। वेद-वेदाङ्गेषु च पाण्डित्यमयमवापत्। वेदोपनिषद्दर्शनादयोऽनेके ग्रन्थास्तस्य कण्ठस्थाः सन्ति। ये अलभ्या ग्रथा साम्प्रतं नोपलभ्यन्ते, ते ग्रंथा अनेन मुखतः सद्योऽद्य आमूलचूडं लेखिता.। एतत्कार्यस्य प्रशंसामनेके पाश्चात्त्यपण्डिता अपि कुर्वन्ति।

एतस्य मूर्तिधारिणश्चमत्कारस्य सर्वत. पूर्वमनुसधानम् उत्तरप्रदेशीयसर्वकारस्य विधिविभागीयः एकः उच्चाधिकारी श्रीगोपालचन्द्रसिनहामहोदय अकरोत् यो हि दैवयोगादेव एतस्य परिचय प्राप्नोत्। सिन्हामहोदयस्य प्रेरणया राज्यतन्त्रं महाभागमिम लखनऊनगरमनयत्। अत्र हि डा॰ श्रीसम्पूर्णानन्द-महाभागस्याग्रहेण धनराजमिश्रमहोदयो विभिन्न-विभिन्नग्रन्थान् साम्प्रत लिपिबद्धान् कारयति। वर्तमान-काले कुशाश्वचन्द्रोदयः सोय लिपिबद्ध. कार्यते। एतद-नन्तरम् 'धनुष्प्रदीप्तम्' नामकं ग्रंथं लेखयिष्यति, योपि १२८०० द्वादशसहस्रश्लोकात्मकः। श्रूयते-ग्रन्थेऽस्मिन् धनुष्, बाण, मुशुण्डी, शतघ्नी, भिन्दिपाल, प ट्टश, प्रभृतीना निर्माणस्य प्रकारा वर्णिता. सन्ति। ग्रथेऽस्मिन विभिन्नप्रकाराणां मोहनास्त्राणामपि निर्माण-विधिः प्रत्तोऽस्ति।

एतदतिरिक्तम्, 'धनुष्चद्रोदय' नामकः षष्टिसहस्र-श्लोकात्मकः अन्योऽपि ग्रंथस्तस्य कण्ठस्थोऽस्ति, यस्मिन् परमाणुप्रकारः शक्तिनिर्माणम्, ब्रह्मास्त्र-रुद्रास्त्रादीनां निर्माणविधिः, एतेषां प्रयोगविधिः, वर्णितोऽस्ति। अत्र हि पाश-प्रयोगः, पाश-निर्मोचनम् शास्त्रास्त्राणां स्तम्भनविधिः, अग्निवर्षणम्, जल-वर्षणम्, इत्यादयः समरप्रकारा अपि साकल्येन वर्णिताः सन्ति। इयं सर्वाऽपि वार्ता नवयुगजातानां जनानां कृते अश्रद्धेया, केवलं कपोलकल्पनेव प्रतीयेत। किन्तु संभवोऽस्ति यत् स्वल्प एव काले सेयं वार्ता जनानां विश्वसनीया भवेत्। यतोहि धनराजमिश्रमहोदयः साम्प्रतं जनतायाः संमुखे वर्तमानोऽस्ति, योहि प्रत्यक्षमिमान् ग्रन्थान् लिपिबद्धान् कारयन्नस्ति। अवश्यमिमे पूर्वसूचिता ग्रन्था अलभ्या. सन्ति, किन्तु हर्षस्य, विषयोऽयं यदिमे ग्रंथा धनराजमिश्रमहाभागस्य जिह्वायां नृत्यन्ति, यान् अय स्वल्प एव काले क्रम-क्रमशः पत्रनिरूढान् कारयेत्। येन आर्याणां बहुसमृद्धे पदार्थविज्ञाने लोकानां विश्वास कथमपि स्थिरीभवेत्।

---

## संस्कृतसमाचाराः

'संस्कृतवाग्विवर्धिनी'परिषदो मन्त्री सूचयति अगस्तमासस्यान्तिमसप्ताहे भाविनि वार्षिकोत्सवे अभिनयात्मकप्रहसनलेखस्य 'प्रतियोगिता' स्थिरी-कृता। अस्यां प्रथम-द्वितीययोर्लेखकयोः कृते क्रमशः स्वर्ण-रजतपदके नियमिते। प्रहसन रङ्गमञ्चेभिनेय पृष्ठचतुष्टय (फुलस्केप) तो न विस्तृत भवेत्। अवसरेऽस्मिन् कविसम्मेलनमपि भवेत् यत्र-'धन्याः सुखं शेरते' 'परित्यजन्ति' इति समस्याद्वयस्याऽपि पूर्तिः श्राव्येत।

प्रहसनस्य प्रतिद्वय, पूर्तयश्च निम्नसकेते २८.८.५६ पर्यन्त प्रेषणीयाः—

**मंत्री 'संस्कृतवाग्विवर्धिनी' परिषद्**
सुमेरकर्णमार्गः, रामगञ्ज.
जयपुरम् (राजस्थानम्)



मोहमयीसंमेलनदृश्यम्—संमेलनस्य प्रथमदिवसे वामतो वेत्रासनेषु द्वारिकापीठस्थाः शंकराचार्याः, पुरीशंकराचार्याः संमेलनाध्यक्षाः, मोहमयीराज्यपालाः श्रीहरेकृष्ण मेहताब महोदयाः, श्रीनिर्मलादेवी, मोहमयीकलेक्टर, श्रीनाडकर्णीमहोदयाः भाषमाणाः, पृष्ठतः स्थिताः सोपनेत्राः श्रीचक्रदेवमहाभागाश्च दृश्यन्ते ।

# भारती

( संस्कृतस्य प्रमुखं मासिकपत्रम् )





स्वराज्य-स्थापना-वीरः
सन्महाराष्ट्र-केसरी ।
लोकमान्येषु तिलक-
स्तिलकोऽयं प्रणम्यताम् ॥



वर्षम् ६ } दशमोऽङ्कः { मूल्यम्
वार्षिकम् ३) रु०
एकस्याः [illegible] =)

सम्पादकः—
कविशिरोमणि
भट्टश्रीमथुरानाथशास्त्री
सहसम्पादक.—
देवर्षिकलानाथशास्त्री बी. ए.
जयपुरम्

# भारती

प्रबन्ध-सम्पादकः—
गिरिराजशर्माशास्त्री

भानुवद् भारतीयानां भास्वद्भवनभासिनी ।
भागीरथीव भावाढ्या भारते भातु भारती ॥

वर्षः ६ | श्रावणशुक्ला १, सं० २०१३ | अङ्कः १०

## वर्षासु विन्ध्यशोभा

अन्योन्यकटकलग्नैः सर्वत्र दिशामुखेषु विसरद्भिः ।
छल्लीमिव बत मुञ्चति विन्ध्यो मेघैर्विघटमानैः ॥ १ ॥
परिपश्यन्ति पुलिन्दाः पर्वतशिखरस्थिता धनुःसक्ताः ।
हस्तिकुलैरिव विन्ध्यं विपूर्यमाणं नवाम्भोदैः ॥ २ ॥
वनदवमसीमलिनितो राजति विन्ध्यो घनैर्धवलैः ।
मधुमथनः क्षीरोदधिमथनोद्धतदुग्धसिक्त इव ॥ ३ ॥
अङ्गानि नवतृणांकुररोमाञ्चविमण्डितानि संवहते ।
प्रावृड्लक्ष्म्याः पीवरपयोधरप्रेरितो विन्ध्यः ॥ ४ ॥—सम्पादक

---

सव्वत्थ दिसामुहपसारिएहिँ अण्णोण्णकडअलग्गेहिं ।
छल्लिं व्व मुअइ विञ्झो मेहेहिँ विसंघडन्तेहिं ॥ १ ॥
आलोअन्ति पुलिन्दा पव्वअसिहरट्ठिआ धणुणिसण्णा ।
हत्थिउलेहिँ व विञ्झं पूरिज्जन्तं णवब्भेहिं ॥ २ ॥
वणदवमसिमइलङ्गो रेहइ विञ्झो घणेहिँ धवलेहिं ।
खीरोअमन्थणुच्छलिअदुद्धसित्तो व्व महुमहणो ॥ ३ ॥
उव्वहइ णवतणंकुररोमञ्चपसाहिआइँ अङ्गाइं ।
पाउसलच्छीअ पओहरेहिँ परिपेल्लिओ विञ्झो ॥ ४ ॥ गाथासप्तशती

# सत्यायाः शान्तेः सत्य उपायः

( ले० श्रीहरगोविन्द पाराशरः, व्याकरणशास्त्री, काव्यतीर्थम्, साहित्यरत्नम् )

न खलु कश्चिज्जगत्येवम्भूतः जीवः यो न वाञ्छति स्वजीवने शान्तिम्। प्रत्येकजीवस्य विशेषतया मानवस्य लक्ष्यमिदमक्षयसुखप्राप्तिः। सः सुखस्य शान्तेश्च प्राप्त्यर्थं दैहिक-दैविक-भौतिकतापानां निराकरणाय सन्ततं यतते। स्वकर्तव्यैः मानवः भौतिकसुखमवाप्यैव विरमति। सः भौतिकीं शान्तिमेव स्वजीवनस्य लक्ष्यं निश्चित्य तां लब्ध्वा च स्वजीवनस्य कृतकृत्यतां स्वीकरोति। किन्त्वियन्न सत्या शान्तिः, यतः सः भौतिकपदार्थानां नाशे, दूरे सञ्जाते वा दुःखमनुभवति, अन्तकाले च वासनामपरित्यज्य तां वारम्वारं स्मृत्वा पुनः जननमरणादिरूपामशान्तिं प्राप्नोति।

तर्हि का वास्तविकी शान्तिः ? इत्येवं पृष्टे उच्यते? अस्माकं महर्षिभिः शास्त्रकारैश्चेदं कथ्यते—सत्या शान्तिस्तु सैव यस्यां मानवः न किञ्चिदपि वाञ्छति। लोभमोहादिकं परित्यज्य शोकन्न करोति 'मत्वा धीरो न शोचति" इति श्रुतेः। अन्यच्च सैव सत्या शान्तिः यया-उदासीनः शान्तः स्वात्मनि तुष्टः मानवः मुक्तिं लब्ध्वा जगति नावर्तते भूयोभूयः "न स पुनरावर्तते" इति श्रुतेः।

अत्रेदं विचार्यम्—यदि उपर्युक्तस्वरूपैव सत्या शान्तिः तर्हि तस्याः प्राप्तिनिमित्तः कः सत्य उपायः ? यदि भौतिकसुखोपकरणैरियं प्राप्तव्येति ब्रूयात्तदेदमद्वैतवादिभिरुच्यते यद्भौतिकाः ऐहिकाः सर्वे पदार्था एव क्षणिकाः नाशशीलाः। नश्वरैरुपकरणैः न प्राप्तुं शक्या शाश्वती शान्तिः। उक्तञ्च "नास्त्यकृतः कृतेन" अकृतः-मोक्षः (सत्या शान्तिः) कृतेन-कर्मणा भौतिकोपकरणसमूहेन न प्राप्तुं शक्य इति भावः। अतएवेदं वक्तुं शक्यते यन्न प्राप्तव्या वास्तविकी शान्तिः भौतिकोपकरणैः ऐहिकसुखसाधनैः। अत आध्यात्मिकैः प्रयत्नैरेव लब्धुं शक्यास्माभिः सत्या शान्तिः।

ब्रह्मवादिभिः कतिपयशास्त्रकारैश्च सत्यायाः शान्तेः सत्य उपायः "आत्मज्ञानम्" इति रूपेण प्रदर्शितः। आत्मज्ञानं भवसम्भवं खेदं परिहरतीति सर्वैरेव मन्यते। अस्माकं भारतीयेषु मोक्षप्रतिपादकेषु वेदब्राह्मणोपनिषद् ग्रन्थेषु आचार्यैः "आत्मज्ञानस्य" श्रवणमनननिदिध्यासनरूपः, यमनियम-आसन प्राणायाम प्रत्याहारधारणाध्यानसमाधिरूपः पन्था उपदिष्टः। सत्यः समीचीनश्च सः। तथाप्यस्य मार्गस्य सम्बन्धे कठोपनिषदि प्रोक्तम् "क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति" तुलसीकृतरामायणे चोक्तम्—"ज्ञान पन्थ कृपान की धारा। परत खगेश होइ नहिं बारा।" इत्यादिभिः प्रमाणैर्ज्ञायते यदयं ज्ञानमार्गः न सर्वसुलभः सत्याया शान्तेरुपाय इति। अत एव कैश्चिद् श्रीशङ्कराचार्यसदृशैः ब्रह्मवादिभिः शास्त्रकृद्भिश्च आत्मज्ञानरूपः भगवत्प्राप्तिरूपो वा सत्यायाःशान्तेः सत्य उपायः "भगवद्भक्ति"रिति प्रोक्तः। वस्तुतस्तु कलौ युगे सर्वजनसुलभः शान्तिरुपायोऽयमेव "कलौ तद्धरिकीर्तनात्" इति श्रीमद्भागवते। अतएव समासेनायमुपायः निर्दिश्यते—

सत्यायाः शान्तेः प्राप्त्यर्थं भगवच्चरणारविन्दे साकारे रूपे सेवकसेव्यभावेन स्वचित्तवृत्तिर्नियोज्या।

# भारते भिक्षुकसमस्या

( पूर्वानुवृत्तम् )

( पं० श्रीगणेशरामशर्मा श्रीराजेन्द्र इन्टर कालेज, झालावाड )

कानिचिद्वर्षाणि व्यतीयुर्यदात्र देशे विभाजनदुष्प्रसङ्गान्मोहम्मदीयाः प्रजाः किंचिद्भयग्रस्ता इवासन्। तदा केचिज्जना ये तत्सम्प्रदायान्तर्गता एवासन्, स्ववर्गसङ्घटनायोत्तरप्रदेशस्यानेकेषु स्थानेषु मोहम्मदीयेभ्यो बह्वीं भिक्षाम् गृहीत्वात्मसाचक्रुः। इयं नु बत चर्चा कल्पितसंस्थानां विद्यते परं वास्तविकीनां कासांचिद्राजनीतिगतसंस्थानामपि कतिपये सदस्या भिक्षोपार्जनस्य प्रकारेणानेन प्रचुरं धनं याचित्वा स्वार्थे प्रायुञ्जत। अत्रानेके दृष्टान्ताः प्रमाणानि च ख्यातिं प्राप्ताभ्यः संस्थाभ्यः सुलभास्सन्ति। भिक्षुनियन्त्रणविधाननियमाः केचिद्भविष्यति निर्मीयेरंस्तर्हि तेष्वेवंविधाभ्यो व्यक्तिभ्यः समाजरक्षात्मकश्चोपबन्धः परमावश्यकः।

---

सांसारिकविषयेषु विरक्तभावः समीचीनः, किन्तु ज्ञानवद्वैराग्यस्य नात्र दृढबन्धः। भगवद्भक्तौ जगतः परित्यागस्य नाप्यावश्यकता। परञ्चात्र वैशिष्ट्यं यद् भगवतः कथाश्रवणे कीर्तने सत्सङ्गादौ मनसः नियुक्तत्वात्स्वाभाविकरूपेणैव तस्मिन् जगत्प्रति वैराग्यभाव उदेति। भक्तः जगतः प्रत्येकवस्तुषु स्वस्वामिन ईश्वरस्यैव रूपमवलोकयति, अतः तस्य मनसि सदैव शान्तिः निवसति। तस्य मनः स्वयमेवात्मनिग्रहे वसति, भगवति अनन्यवृत्तित्वात्। अस्मादेव गीताप्रवचने आधुनिकमहर्षिणा बिनोवाभावेन स्पष्टमुल्लिखितम्। 'दुर्निग्रहं मनः निग्रहं न स्वीकरोति, चाञ्चल्यञ्च परित्यजति, तदेव मनः जगति मङ्गलमयेश्वरभावरूपिण्या दृष्ट्या आत्मवश्यं निश्चलञ्च भवति।" मनोनिग्रहत्वाच्छान्तिः स्वात्मनि भवतीति सर्वैरेव दार्शनिकैः स्वीक्रियते। शान्तसंयतचित्तेन भगवद्भक्तः संसारे प्रत्येकरूपेण स्वाराध्यमेव पूजयति। भक्तः यत्करोति तस्मिन् कर्मण्येव स्वप्रभुं पश्यति, सर्वानात्मवदेवाचरति, तद्रूपेणैव सर्वान् जानाति। एवं सः सर्वत्र ईश्वरं पश्यन् एकत्वमेव पश्यति, श्रुतिरपि दृढयति—

यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥

एकत्वभावे सञ्जाते आत्मा ईश्वरो वा स्वस्वरूपप्रकटनेन आत्मविदं भक्तं वा स्वरूपां सत्यां शान्तिं प्रयच्छति "शश्वच्छान्तिं निगच्छति" इति स्मृतेः।

अतः निष्कर्षे इदं वक्तुं पार्यते यत्सत्या शान्तिः आध्यात्मिकी, स्ववेद्या स्वलयरूपैव। तस्याः प्राप्तेरुपायः भगवति स्वेष्टे, अनन्यमनसा तस्मिन् स्वत्त्वविलयरूपानन्या भक्तिः। एवमनुचरिते मानवः सत्यां शान्तिं सारल्येन प्राप्नोति प्राप्स्यतीति निश्चप्रचम्। अतएव गीतायां श्रीभगवता कृष्णेनोपदिष्टम्—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः॥

गीता ९।३४

---

कियद्भ्यो वर्षेभ्यः केचन नवीना भिक्षवो दृग्गोचरा भवन्ति। इमे खल्वाङ्ग्लभाषां धाराप्रवाहं भाषमाणा आंग्लवेषविन्यासाश्च भवन्ति। इत्थंविधेष्वमीषु प्रायो ईशुधर्मप्रचारका वा सामुद्रिकशास्त्रोक्तहस्तरेखाविज्ञानवेत्तारो दाक्षिणात्याश्चोपलभ्यन्ते। एते प्रातरेवागत्य स्पष्टतरांग्लभाषया मधुरं वार्तालापं नागरिकैः सहारभन्ते। ततः किंचित्परिचये संजाते कामपि सहायतां द्रव्यरूपां याचन्ते। यतस्ते बौद्धिकविकासक्रमदृष्ट्यान्यापेक्षयोच्चस्तरीयाः प्रसिद्ध्यन्ति। ततस्ते भिक्षामप्येकमुद्रात्मिकां वार्द्धमुद्रां वा कामयन्ते। विद्वदाभासा इमे तथाविधं भैक्ष्यं चापि सुखं लभन्ते।

अपरे पुनः केचन तादृशोऽपि भिक्षुका भवन्ति ये विनैव परिचयं विनैव प्राथमिकं कमपि वार्तालापं मिलनसमकालमेवेत्थं वक्तुमारभन्तेः—"श्रीमन्! भवत्सकाशे चत्वारः पणा यदि स्युस्तदा ते दीयन्तां मे!! दिनद्वयं व्यतीयाय परं नाहमिदानीं यावत् कुतोऽपि किमपि भोजनमलभे!!!" सम्भवति, सत्यमेवेदृशेषु केचित् क्षुत्क्षामकण्ठा भवेयुर्जना भारतेऽत्र देशे नः, यत्र जीविकावृत्तेरभावाच्छिक्षिता अपि लोकाः क्वचिन्निर्वाहयोग्यां वृत्तिं यथायोग्यां नो लभन्ते, परन्तु प्रकारेणानेन बहवो दाम्भिका भिक्षां याचमाना दृरीदृश्यन्ते। कतिपये चैतादृशा अपि लभ्यन्ते भिक्षवो ये दिने क्वचिन्नियमितां जीविकामुपार्जयन्ति पुनः प्रातः सायं च पुष्कलां भिक्षां याचित्वा स्वस्यापेक्षातो न्यूनमायं विधिनानेन सम्पूर्य सुखं जीवन्ति।

देवपूजामिषाद्यजमानवृत्तिच्छलान्मन्त्रतन्त्रौषधिसाधनापकौशलाद्ग्रहगोचरफलादेशव्याजाद्वा केचन भिक्षावृत्तिं समाचरन्तो विद्यन्तेऽत्र देशेऽस्माकं भारतवर्षे। इमे नित्यमेवान्नमुष्टिं याचितुं प्रातर्गृहस्थानां वसतिषु—'हरे राम! हरे कृष्ण!! वासुदेव!!! श्रीकृष्ण!!! राधेश्याम!!! जय शिव शङ्कर!!!' इत्यादीनि मंगलनामानि भिक्षाया मूलमन्त्रानिव प्रोच्चैःस्वरमुच्चारयन्तो गृहाद्गृहं बंभ्रम्यमाणा भिक्षार्थं पर्यटन्ति। ईदृशाः केचित् स्वबालान् पत्नीं कन्यकाश्च वस्त्रविशेषैः सज्जीकृत्य नगररथ्यासु भिक्षार्थं प्रहिण्वन्ति। स्वयमपि च स्वाकारं प्रच्छाद्य भैक्ष्यं चरन्ति। यद्यपीमेऽन्तःसम्पन्ना भवन्ति परन्त्वमीषां दीनहीनवेशभूषां कातरमार्तस्वरं भगवन्नामग्रहणादिकं दृष्ट्वा श्रुत्वा चास्तिका लोकाः किलैतेभ्यो भिक्षान्नं वस्त्राणि धनं च प्रयच्छन्ति। याचितं भिक्षान्नवस्त्रादिकं विक्रीयैते सुवर्णं संचिन्वते।

केचन शरणार्थिनोऽपि च भिक्षावर्जनस्य कमपि नव्यमेवाभ्युपायमाविष्कृत्य प्राचालयन्। एवंविधानां केषांचित् बालकाः कुमार्यश्च देहलीप्रभृतिनगराणां वसतिषु मार्गे व्रजतो जनानवरुध्य भिक्षां याचन्ते। काश्चिद्योषितोऽपि च पथि गच्छतां जनानां वस्त्राञ्चलं विमुच्य दूरमपव्रजन्ति। एतादृशानां कन्यकाश्च गीतं वाद्यं नृत्यं वा शिक्षिता भवन्ति। कलालापकुशलास्ता एता भिक्षां धार्मिकीं वृत्तिमिव समर्थयन्ते। अपरं च गृहस्थभिक्षुकेषु केचित्तादृशा अपि सन्ति येऽस्माकं सहानुभूतिं जागरयितुं सफला निष्पद्यन्ते। एकदा लक्ष्मणपुरे (लखनऊ) अमीनाबादपार्कनाम्नि स्थाने धौतधवलवस्त्राच्छादितः कश्चिद्वृद्धो मां प्रत्युपागच्छत्। तं दृष्ट्वाहं तत्रास्थायापृच्छम्:—'अपि भवान् मया सह सम्भाषितुमिच्छति?' स उवाच—'आम्, श्रीमन्! भवत्सविधे केचित्पणास्तु न स्युः? अहमवोचम्—'महाशय! सन्त्यवश्यं मम समीपे कतिचन पणाः। किमर्थं भवानेवं पृच्छति? वदतु किं प्रयोजनं भवतो मया??" सोऽब्रवीत्—'अहं

काञ्चित् पणान् कामये भवत्तः ।" ममौत्सुक्यं किंचिद् वर्धत । तत्राहमपृच्छम्—'कोयं प्रसङ्गोऽत्र भवतां मत्तो भिक्षायाचनस्य का वाचाति-महती नन्वावश्यकता ?' सोऽवादीत्—'अहमस्मि सार्वकारभृत्यो गृहीतविश्रामवृत्तिः । चत्वारिंशद्रूप्यकाणि प्रतिमासं लभे । मम चैकः पुत्रोऽभूत्सोऽपि सर्वकारसेवासु नियुक्तो बभूव । तन्मरणाद्वयं तदेकाश्रयाः सर्वे कुटुम्बिन इदानीमगतिकाः स्म संजाताः । एभिश्चत्वारिंशद्रूप्यकैः परिवारद्वयस्य पालने नाहं प्रभवामि । अतएव हि लोकलज्जामपहायानुदिनं सायं दयालुभ्यः सज्जनेभ्यो भिक्षां याचे । कदाचिदनया भिक्षयैव कथमपि निर्वाहोऽस्माकं सम्भवेदितिभैक्ष्यं चरामि । मम च नेत्रज्योतिरधुना मन्दीभूता क्रियाशक्तिश्च मेऽपक्षीयमाणास्ति ।" एवं विधानां सेयं स्थितिः सत्या वानृता वा भवेत् । परंयच्चित्रं सोऽवर्णयत्तदत्रास्माकं देशेऽतीव स्वाभाविकं सम्भवति । भिक्षाहेतुषु निर्धनपरिवाराणां निर्धनात्येकः ।

बहुषु निर्धनपरिवारेषु वृद्धाः स्त्रियो भिक्षां याचित्वा तेषां परिमितमल्पमायं वर्द्धयित्वा काठिन्यात् स्वकुटुम्बपरिपालनं कुर्वते । यदि कदाचित्ताः कारणविशेषाद्यावदपेक्षितां भिक्षां न लभन्ते रिक्तहस्ता वा गृहान् प्रतिनिवर्तन्ते तदा तत्परिवारसदस्यैरन्येद्युः समधिकं धनमर्जयितुं सावधानाः क्रियन्ते, दुर्भाग्यादप्राप्ते तावति धने ता एताः कटूक्तिभिः संतक्ष्यन्ते, यतस्तासाम् वृद्धानां भिक्षार्जितेन द्रव्येणैव हि तेषां कुटुम्बिनां सर्वेषां जीविकानिर्वाहो जायते ।

काश्चन युवतयोऽप्यथ भिक्षायाचनाय नियुज्यन्ते लोकैरथवा स्वयमेवैतास्ता भैक्ष्यं चरन्ति । एवंविधाः काश्चिद्युवतयः श्रीमतां गृहद्वारं निस्संङ्कोचं प्रविश्य भवदध्ययनकक्षे समीपमागत्य स्वकरुणकथालिखितं कर्गलमेकं भवतां हस्ते समवालम्बयन्ति । तत्र कर्गले तासां संकटगाथाः प्रभावोत्पादकैः शब्दैर्वाक्यैश्च सत्या वानृता वा कल्पनाप्रसूता वा वर्णितातिष्ठन्ति । ताः प्रायः स्वात्मानं दुष्कालपीडितं चोरापहृतधनं लुण्टाकलुण्ठितं च घोषयन्ति । साश्रुनयनास्ता एता भवतां मनसि करुणामुत्पाद्य विलापकलापान् गद्गदकण्ठमालप्य सहानुभूतिं समवेदनां चाविर्भावयन्ति । परिणामतो धनं प्राप्तुं सफला भवन्ति स्वचेष्टाभिः ।

भारतसदृशे निर्धने देशे धनोपार्जनोपयुक्तं कार्यजातमत्यल्पं जनसंख्याति महती बोभूयमाना वर्तते; तस्मात्केषांचिज्जनानां कृते भिक्षायाचनमनिवार्यमिवापतति । मनोविज्ञानवेत्तारो वदन्ति यन्मनुष्योऽत्यन्तं क्षुत्क्षामकण्ठः स्वोदरज्वालामतिदारुणां ज्वलन्तीमुपशमयितुं किमप्युपायान्तरं नावलम्बते तदासावपराधानपि कर्तुमुद्युङ्क्ते विवशतया भावशतशङ्कातङ्काकुलः । एवं सति निर्धना दीनदीनाः साधनसम्पद्विहीनाः किंपचा अकिंचना जनाः कथं न भिक्षावृत्तिसदृशमनायाससुलभं साधनं स्वभावतो नाङ्गीकुर्युः ? हिन्दूनां तीर्थस्थानेषु तु भिक्षुकानामानन्दस्य परा कोटीवावलोक्यते । भारतीया महिलास्त्वतीव करुणाहृदयाः शीलसौजन्यस्वभावा आस्तिक्यभावापन्ना दानधर्मादिकमतितरामुत्साहात्समाचरन्ति । दानपुण्ययोरस्याः सहजाताया धर्मवृत्तेर्भिक्षवोऽतीवानुचितं दुरुपयोगं कृत्वा भिक्षालाभं लभन्ते । एकस्मिन् महति मेलके मया तथ्यमेतत् प्रत्यक्षमेवान्वभूयत यद्धि केचन निपुणा भिक्षुका लोकानां धर्मप्रवृत्तेस्तन्मनोदौर्बल्यस्य वा तेषामुच्चमानवतायाश्च दुरुपयोगं कर्तुं नानाप्रकारान् विधीनुपायान् साधनानि च कृत्रिमानि बताविर्भावयन्ति । न जाने कथमेते भिक्षाचार्याश्चातुर्य्यान्नीरोगेष्वपि स्वदेहाङ्गप्रत्यङ्गेषु व्रणविस्फो-

टकुष्ठादीन् कृतकोपायैः समुत्पादयन्ति कथं वा नानारोगान् प्रदर्शयन्ति लोकेभ्यः ! तेषां कृत्रिमव्रणार्तिं रोगपीडावेदनां चान्तर्मनसि विभाव्य सरलाः कारुणिकाः सहृदया जना एभ्यो धनं वितरन्ति सहानुभूतिं समवेदनां च प्रदर्शयन्ति ।

केचित् पुनर्भिक्षुका गोमुखा व्याघ्रा इवातिप्रचण्डा उद्दण्डा भयङ्कराश्च सिद्ध्यन्ति । तेषां बाह्यस्वरूपं भिक्षूनामिवावश्यं दृश्यते परमन्तस्तु ते प्रगल्भा अपराधिनो भवन्ति । एवंविधा भिक्षवो दिनेषु गृहाद्गृहं प्रतिपर्यटन्ति तद्गृहद्रव्याणि सुसूक्ष्मं निपुणं च निरीक्ष्य तत्सङ्केतं साधयन्ति रात्रौ च तत्सर्वं चोरयन्ति । वस्तुतो दरिद्राणां बुभुक्षितानां स्वोदरदरीपूरणायागत्या स्वीकृतभिक्षावृत्तीनां प्रजावलुण्टाकानां कृत्रिमाणां चामीषामन्तरं बोद्धुमति कठिनं जायते, परं राज्याधिकारिभिर्गृहीतेष्वेतेषु पर्यन्ते याथार्थ्याद्रहस्योद्घाटनं भवति । उत्तरप्रदेशस्य कतिपयेषु नगरेषु भिक्षुसमस्यासमाधानाय कश्चित्प्रयत्नो विधीयमानोऽस्ति । लक्ष्मणपुरे नगरपालिका किंचिद्भिक्षुसदनमेकमुद्घाटयत् परन्त्वयमुपायोऽतीव सामान्योऽपेक्षातो न्यूनफलदोऽजायत । तत्र सदने केवलं पञ्चाशच्छष्टिपरिमितानामेव भिक्षूणां कृते निवासस्य प्रबन्धोऽस्ति । कतिचिद्वर्षेभ्यः प्राक् किलैकस्मिन्दिने यदा कोटपालविभागस्य साहाय्येन नगरस्य सर्वेऽपि भिक्षवो निगृह्य भिक्षुसदनेषु निर्निरुद्धास्तदैकं मनोरञ्जकं दृश्यमदृश्यत । केचिद्भिक्षुकास्तु तत्र शांतमनसोऽवालोक्यन्त । कदाचित्ते मार्गान्मार्गं रथ्याया रथ्यान्तरं चत्वराच्चत्वरं गृहाद्गृहं प्रति सदासर्वदा सर्वतोदिग्भूयोभूयो भ्रमणानन्तरं भिक्षाप्राप्तिसमपेक्षयात्र सदन एकत्रैव भैक्ष्यं सुलभं भविष्यति वात्र कार्यं च यदि कर्तव्यं स्यात्तदा का हानिरिति चिन्तमाना जोषमतिष्ठन् । परमन्येषां बहूनां भिक्षूणां कृते तत्सदनं कारागारादप्यधिकं दुःखप्रदं प्रतीयते स्म । भिक्षुवर्गेषु तेषु केचिदहिफेनभक्षणव्यसनिनः केचन वीटिकाधूम्रपानरसिका अन्ये भृङ्गारससेविनो नस्यग्रहीतारश्चासन् । तत्र सदने मादकद्रव्याभावे त एते महान्तं क्लेशमन्वभूवन् ! अपरे केचित् स्वस्य दैनिकमुपार्जितं भिक्षाद्रव्यं क्वचित् जीर्णशीर्णभग्नावशेषेषु न्यदधत ततस्ते तन्निहितद्रव्यस्य कृते चिन्तातुरा अभूवन् । अन्ये केचन मनसीत्थं चिन्तमना आसन् यदि मे भिक्षुसदनाधिकारिणस्तांस्तत्र निरुध्य द्वित्रिरुप्यकपरिमाणात्तदायाद्ग्रस्यन्ति । ते किलाधिकारिणः स्वमुक्तये मुहुर्मुहुः प्रार्थयन्त । केचनान्ये भिक्षुकास्ताम्बूलचर्वणं विनातीव क्लेशमन्वभूवन् तथापरे सुरापास्तत्र वारुणीं विना जगन्मिथ्याकलयन् । पर्यन्ते तत्र भिक्षुसदने स्थानाभावात्कतिचन तत्कालमेव सद्योमुक्तिं लेभिरे, येऽद्यावधि स्वच्छन्दं प्रजानां धनापहारं शोषणं च कुर्वाणाः स्युः ।

समाजस्य विभिन्नगुणकर्मस्वभावा व्यक्तय इव भिक्षुवर्गेष्वपि च केचन सरलाः कतिपये कुटिलास्तीक्ष्णबुद्धयोऽपरे मृदुला ऋजवः कटुभाषिणो नीतिपथप्रवीणा वा भवन्ति भिक्षुकाः । ये चातीवकूटाभिसन्धिप्रतिभावन्तो लुब्धा भूरिलाभलवलिप्सवस्ते प्रचुरं धनमुपार्जयन्ति । पुनर्ये सरलमतयस्ते महता काठिन्येनोदरभरणक्षमामेवाल्पीयसीं भिक्षां कथमप्याप्तुं प्रभवन्ति । अत्र द्वितीयवर्गस्थेषु सरलप्रकृतिकेषु भिक्षुकेषु केचन ते भूमिहीना ग्रामीणा कर्षकाः श्रमजीविनोऽपि परिगण्यन्ते ये स्वयमुद्योगिन उपार्जनक्षमाः सन्तोऽपि च स्वक्षमतानुरूपं कार्यमलभमानाः स्वक्षेत्रात् स्थानात्स्थानान्तरं जीविकावृत्तिमन्वेष्टुं यतस्ततो भ्राम्यन्ति । तत्रापि च स्वानुकूलं व्यवसायमुद्योगयोग्यं कर्मक्षेत्रं साधनानि सुविधां

# लोकमान्य तिलकस्य पवित्रस्मृतिः

( श्रीगजाननशास्त्री मुसलगावकरः, एम० ए०, मीमांसाचार्यः, सा० रत्नम् )

गीतारहस्यं विरचय्य लोकान् प्रवर्तयन् कर्मणि लोकमान्यः।
श्रीबालगङ्गाधर आविरासीद् देशस्य भाले तिलकस्वरूपः॥

अस्मिन् वि वैरिञ्चे प्रपञ्चे त एव मान्या भवन्ति यैः स्वार्थत्यागोऽकारि, येषाञ्च चरितं सुचरितं, वर्तने सारल्यं वैदुष्यं, व्यवहारविज्ञत्वं, परोपकारित्वमौदार्यञ्चेति गुणा विलसन्ति। ये स्वयमायासं सोढ्वापि परहिताय सर्वत्र सर्वदा प्रयतन्ते, ये च समाजहितं राष्ट्रहितं च कुर्वन्ति तेषामेव जन्म सुजन्म। येषां समुद्भवेन देशः समाजो जातिः कुलञ्चापूर्यमाणपक्षे सुधांशुरिव वर्धते तादृशानां महानुभावानां सत्पुरुषाणां जयन्त्याद्युत्सवाः कर्तव्या इति शास्त्राभ्यनुज्ञा। सच सम्मानः पूज्यव्यक्तेः पूजकानां सर्वथा हिताय जायते, येन यस्य गुणानुकरणं तरुणानांकृतेऽभ्युदयाय भवतीति निश्चित्य समाजे प्रथेयं प्रचलिता।

तादृशो महानुभावोऽद्यतनोत्सवस्याधिष्ठातृदेवतेव दिग्दिगन्तविश्रुतकीर्तिः सकललोकपरिचितोऽयं लोकमान्यः। दिवङ्गतमपि तं साम्प्रतमपि सकला अपि लोका महतादरेण परमेण प्रेम्णा अमितया श्रद्धया च स्मरन्ति। अद्य भारतं स्वतन्त्रं वीक्षितुं यद्यपि स पाञ्च-

---

चालभमानास्त एते विवशतया भिक्षां याचितुमारभन्ते। अस्माकं देशे भिक्षूणां संघेषु तथाविधानामप्येका महती संख्या विद्यमानास्ते ये स्वयमन्तरात्मना सर्वथानिच्छन्तोऽपि दारिद्र्यदोषेण बाध्यमानाः स्वयोग्यकर्मलाभाभावे गतिहीनाः सन्तो भिक्षावृत्तिमाश्रयन्ते।

अस्माकं स्वतन्त्रे भारतराष्ट्रे प्रजातन्त्रशासनपद्धतिसंविधानस्य मूलभूतन्यायनियमतत्त्वेष्वेतदपि चान्तर्भूतमिहास्ते यद्धि कार्यसक्षमान् सर्वानपि मनुजान् तदुद्योगयोग्येषु कार्यकलापेषु नियुज्य तेभ्यो जीविकावृत्तिं सर्वकारतन्त्रं दद्यादिति राजधर्मो निरूपितो घोषितश्च। इत्थंविधानां न्यायतत्त्वानां पूर्णतया परिपालनं यद्यपि नानिवार्यं सम्भवेत्कदाचित्परं सर्वकारमन्त्रिमण्डलं भिक्षुभ्यः किमपि कार्यं दत्त्वा जीविकावृत्तिं च निर्वाहयोग्यां दातुं तत्सम्बधिनो नीतिनियमान् क्रियात्मना सफलयितुं सततं चेष्टेतेति न्याय्यो वाञ्छनीयो राजधर्मः। भिक्षावृत्तिनिरोधाय देशव्यापिनां विधाननियमानामतिमहती परमावश्यकता तु विद्यत एव परन्तु यावत्कार्याभावाद् कर्मण्यतां व्रजद्भ्यो जनेभ्यः कार्यप्रदानस्य साधीयसी व्यवस्था न जायेत तावत् भिक्षावृत्तिनिरोधोऽसम्भवप्रायः। येषु राज्येषु सन्त्यप्येवंविधा नियमास्तेषां सम्यग्व्यवहाराराहित्यादधिकारिणामुपेक्षया वा नापेक्षितां सफलतामंशतोऽप्यलभन्तेति जटिलेयं समस्या!

भौतिकेन कायेन नास्मासु विराजते तथापि यशःशरीरेण सर्वकालं भारते राजते ।

भारतीयानाम्प्रत्येकं हृदयस्थलीषु देशस्य स्वातन्त्र्यभावनाया बीजं लोकमान्येनैवोप्तमासीत् । यद् बीजमद्य सफलवृक्षरूपेण परिणतमस्ति । यत्फलमवाप्याबालवृद्धाः सर्वे भारतीयाः प्रमुदितहृदया निजहर्षं प्रदर्शयन्ति ।



लोकमान्यस्य जन्म षट्पञ्चाशदधिकाष्टादशमिते (१८५६) ईशवीये वर्षे जुलाईमासस्य त्रयोविंशतितमे दिनांके मोहमयी (मुम्बई) प्रदेशे रत्नागिरिभागे विमले ब्राह्मणकुले समभवत् ।

लोकमान्यस्य जननी पार्वती जनको गङ्गाधररावश्चास्ताम् ।

अस्य महापुरुषस्य प्रारम्भिकमध्ययनं गृहे एव स्वपितुः-समीपे सम्पन्नम् । बाल्यकालादेवास्य विलक्षणां कुशाग्रधिषणां वीक्ष्य एकषष्ट्युत्तराष्टादशमिते (१८६१) ईशवीये विजयादशम्याममुं पाठशालायां जनकः प्रावेशयत् । द्वासप्तत्यधिकाष्टादशमिते (१८७२ ईशवीये इण्ट्रेन्स परीक्षामुत्तीर्णवान् । १८७६ ईशवीये बी ए. परीक्षायां प्रतिष्ठया साफल्यमवाप्तवान् । १८७९ ईशवीये एल एल. बी परीक्षामुत्तीर्णवान् । सर्वेष्वपि विषयेषु लोकमान्यस्याप्रतिहतां प्रतिभां, विलक्षणां वाग्मितां चावलोक्य सर्वेऽपि देशीया विदेशीया लोकाः सर्वत्र परमया श्रद्धया एनममन्यन्त, अतएव स 'लोकमान्य' इति नाम्ना सर्वैः सम्बोध्यते ।

१८२९ ईशवीये कांग्रेससमितेरधिवेशने 'स्वराज्यसम्पादनेऽस्माकमधिकारो जन्मसिद्धः' इति दुन्दुभिनादं प्रथमतोऽयमेवाकरोत् । तन्नादं श्रुत्वैव १९०६ ईशवीये श्रीदादाभाई नौरोजी महोदयोऽपि 'अस्माभिः स्वराज्यमपेक्ष्यते' इति सुधीरं समुद्घोषयत् ।

लोकमान्योऽनेकानि पत्राणि 'केसरी' 'मराठा' आदीनि समपादयत् । प्रजापक्षसमर्थकान् लेखान् अलिखत् । तस्य हृदये स्वदेशभक्तिः पूर्णतया वास्तव्यमकरोत् । तस्याद्भुतपाण्डित्यसाक्षिणस्तद् विरचिता ग्रन्थाः 'आर्कटिक होम ऑफ दी वेदाज्' 'गीतारहस्यम्' 'ओरायन 'वेदाङ्गज्यौतिषादिविषयकाः प्रसिद्धाः सन्त्येव । अस्य ग्रन्थानवलोक्य गुणग्रहयालवो विदेशीया विद्वांसोऽपि हृदयेन मुक्तकण्ठं भूरि भूरि प्रशशंसुरेनम् । एकदा लोकमान्य आजन्मकारावासशिक्षां प्राप्तवान् । गच्छता कालेन विदेशे केनापि विदेशीयेन विदुषा, लोकमान्येन लिखितं 'ओरायन' पुस्तकमवालोकि । यथा यथा स तत्पु-

स्तकं पठितुम्प्रवृत्तस्तथातथा स बाह्यजगद् विस्मरन् पृष्ठमनुपृष्ठं सम्पूर्णं पुस्तकं वाचयामास। अनन्तरं स चकितचेता भूत्वा लोकमान्यस्य दर्शनाय समुत्सुकः समभवत्। परं लोकमान्यायाजन्मकारावासदण्डो ब्रिटिशेन समादिष्ट इति यदा स ज्ञातवाँस्तदा वहवो विदेशीया ऐव लोकमान्यं कारागृहान्मोचयितुमान्दोलन चक्रुः। तेन तं कारागृहान्मोक्तुं ब्रिटिशसर्वकारं वाध्यं समभवत्, मुक्तवाँश्च कारागृहाल्लोकमान्यम्।

लोकमान्यस्यानितरसाधारणां गुणावलिं विलोक्य राजनीतिः स्वयमेवास्य वशतां स्वीकरोतिस्म। राजनीतिक्षेत्रेऽनितरसाधारणप्रखरप्रतिभां परिचाययतोऽस्यैव हस्ते भारतस्य राजनीतिसूत्रमासीत्। अस्य नेतृत्वकाले हिन्दुयवनयोः कलहस्तु दूरे एव, प्रत्युतोभावपि वर्गौ परमेण प्रेम्णा स्वस्वकार्याण्यन्वतिष्ठताम्। यवननेतृत्वेनेदानीं प्रथिता जिन्नाप्रभृतयो लोकमान्यस्यादेशं शिरसा वहन्तः कांग्रेससंस्थायां कार्यमकुर्वन्। लोकमान्यस्य नेतृत्वकाले मुस्लिमलीगादिदलीयसंस्थानां समुत्पादनकल्पनापि कस्यचन मतौ न स्थानमलभत। अत्र कारणमिदमेव यत्-लोकमान्येन सुचारुतया संचालिताया राजनीतेरयम्प्रभावः।

यस्य महाराष्ट्रराजस्य छत्रपतेः श्रीशिवाजिराजस्य जयन्त्युत्सवं, तस्य प्रशस्यकार्यस्य प्रशंसामपि कर्तुं कश्चन स्वतंत्रो नासीत् प्रत्युत श्वेतपादानां ब्रिटिशानां क्रोधभाजनमेव भूत्वा यः कोऽपि दण्डितः समभवद्यदा, किञ्च यस्य वीरशिरोमणेः शिवाजिराजस्य कृते 'पर्वतीयमूषकेति' नाम इतिहासपुस्तकेषु बलादङ्कयित्वा भारतीयविद्यालयेषु पठन-पाठनक्रमे ब्रिटिशसर्वकारेण निवेदितमासीत्। तस्यैव महाराष्ट्रराजस्य वीरशिरोमणेश्छत्रपतेः श्रीशिवाजीराजस्य जयन्त्युत्सवं १८९५ ईशवीये ब्रिटिशशासनकाले प्रथमत एव लोकमान्यो महता समारोहेण भारतेऽन्वतिष्ठत्।

१९०५ ईशवीये काशीकांग्रेससमितेरधिवेशने स्वदेशीयान्दोलनेन सह विदेशीयवस्तुबहिष्कारस्य प्रस्तावोऽस्यैव प्रेरणया स्वीकृतिं गतः।

दास्यश्रृङ्खलया निगडितां भारतमातरं दास्यादुन्मोचयितुं वहुवारं बहूनि कष्टानि ब्रिटिशसर्वकारेणार्पितानि सोल्लासमयमन्वभवन्। नैकवारं कारागारनिरुद्धोऽप्यभवत्। देशनिष्कासनमपि लोकमान्याय समादिष्टमासीत्। निर्दिष्टावधिं समाप्य पुनर्भारते प्रत्यागतं लोकमान्यं वीक्ष्य भारतीया हर्षप्रकर्षमन्वभवन्। स लोकमान्यो वस्तुत एव धन्यः। यस्य मनोभूमौ देशभक्तिस्रोतो भागीरथीवाविच्छिन्नधारया प्रावहत्। तथैवाजन्म सर्वत्र यस्य वेषोऽपि देशीयः कुलजातिशिष्टानुगुण एकविध एवासीत्। महात्मा गान्धी अपि यं लोकमान्यं स्वगुरुममन्यत। लोकमान्यस्य जन्म कालाच्छताब्दपूर्तिः १९५६ ईशवीयेस्मिन् वर्षे भविता। साम्प्रतमयं यदि जीवितश्चेच्छत-(१०० वर्षिष्ठोऽभविष्यत्। दिवंगतस्याद्य षट्त्रिंशद् (३६) वर्षाणि व्यतीतानि सन्ति। १९२० ईशवीये अगस्तमासस्य प्रथमदिनांके मोहमय्यां (मुम्बई) सरदारगृहे भारतमातुः सत्पुत्रोऽयं लोकमान्यो महामानवो भारतमातुश्चरणयोः सार्वकालं कायिकम्प्रणम्य वैकुण्ठमध्यगच्छत्। तस्य वियोगेन भारतवासिनो व्याकुलिता जलं विना मत्स्या इवाभवन्। परलोकं गते तस्मिन् आश्चर्यनिमग्ना ब्रिटिशास्तस्य ज्ञानतन्तून् परीक्षितुं पंचविंशतिकोटिमूल्येन तन्मस्तकं भारतीयान् समयाचत। परं भारतीया धनलोभेन इदं कुकृत्यं कर्तुं नान्वमोदन्त।

## "संस्कृतज्ञानां जनतायाः सर्वकारस्य च कर्तव्यम्"

—नटवर जोशी

"सकलविश्वहिताय समुद्यतो भवसि चेदभिवाञ्छसि गौरवम् ।
विमलभव्यभराऽमृतवर्षिणीं भज सदा शुचिसंस्कृतनिर्भरम् ॥"

को न जानाति यदस्मिन् विश्वस्मिन् भावप्रकाशनकरीष्वनेकासु भाषासु संस्कृतभाषैव मातृपदभागिनी वरिवर्ति यस्या मधुरक्रोडे आदिकविवाल्मीकिः सुरभारतीहास-महर्षिव्यासः, कविताकामिनीविलास कालिदास भवविभूति—आदिमहाकवयः, कलितकलेवराया भगवत्याः कमनीयकान्तो बाणः, अप्रतिमप्रतिभासंयुक्तो दण्डीत्यादि अनेकशः गद्यकाव्यरचयितारः सप्रेम लालिताः । येषां महामहिममये काव्यालये संवेदनशीलमानवहृदयस्य नानाऽनुभावभूषितानि, विचित्ररंगप्रोज्ज्वलानि, अहमहमिकया चित्ताकर्षणसमर्थानि, निसर्गोज्ज्वलानि, कलाचित्राणि प्रदर्शितानि । यानि नयनगोचरीकृत्यैव चित्तं करुणार्द्रं, हृदयमानन्दसान्द्रं, नयनमश्रुपूरितं वदनं हास्यजृम्भितं युगपदेव सम्पद्यते । किमधिकं संस्कृतगौरवं भजामहे । इयमेव विश्वस्यादिभाषा । प्राचीनतमं मनुजस्य विकाशसूचकं सम्पूर्णं वाङ्मयमस्यामेव भाषायां लिखितम् । अद्याप्यस्त्येव राष्ट्रभाषा हिन्दी तु अस्याः स्नेहपालिता पुत्री, किन्तु बंगभाषाऽपि अस्मिन्, मराठी अमुया प्रेरणां प्राप्नोति, तमिल तेलगु-मलयालमादि द्रविड़भाषाऽपि-अमुया अनुगृहीता । अनेन प्रकारेण सर्वासु, श्रेष्ठा अतः वन्दनीयाऽपि संस्कृतवाक् यदि जनमानसस्य कण्ठहारावली न जाता तत्तु संस्कृतज्ञानां स्व-कर्तव्यं प्रति-औदासीन्यस्य गाथाऽपि चास्ति वर्षसहस्रतः सर्वकारस्य गम्भीरोपेक्षायाः करुणकथा ।

किन्तु गतं न शोचन्ति पण्डिताः । यद्भूत्-तद्भूत । साम्प्रतं तु संस्कृतज्ञैः स्वातन्त्र्य-सूर्येणाधिकशोभिनि नवप्रभाते मोहमयीनिद्रां परिहाय नवचेतनास्पन्दितहृदयैः संस्कृतोन्नत्यै शंखनादः कार्यः एव । एतदर्थं संस्कृतानुरागिणां समेषामपि सज्जनानां सम्मिलितप्रयत्नस्त्वावश्यक एव परं संस्कृतज्ञानां विशेषकर्त्तव्यमस्ति ।

### संस्कृतज्ञानां कर्तव्यम्—

पारस्परिकद्वेषभावनां परिहाय व्यर्थाऽहंमन्यताञ्च त्यक्त्वा संस्कृतविदुषां संस्कृतोन्नत्यै स्वाधिकार-रक्षणाय च सबलसंघटनसंयोजनसमारम्भः कर्तव्यः । जानतांत्रिकेऽस्मिन युगे यदि संस्कृतसेवकाः संघटिताः स्युस्तर्हि ते सर्वकारं बाध्यं कर्तुमपि समर्था भवितुं शक्नुवन्ति—अन्यथा बहुमतस्यास्मिन्काले स्वाधिकारम्प्रतिशून्यचेतः अल्पमतस्य रोदनं कः सर्वकारः कर्णगोचरीकरोति । अतः स्वाधिकारलाभाय "संगच्छध्वं-संवदध्वं सं वो मनांसि जायतामिति" सिद्धान्तवाक्यमनुसृत्य ग्रामे २ नगरे २ च अखिलभारतीयसंस्कृतसमितीनां स्थापना विधेया । नगरसमितीनां निर्देशप्रदानाय जिला-समितीनाम्

जिलासमितीनां निर्देशनाय च प्रांतसमितीनां तासां कृते च अखिलभारतीयसंस्कृतसाहित्यसमितेरथवा सम्मेलनस्यावश्यकता ।

सम्मेलनस्य तत्त्वावधाने विद्वद्भिः संस्कृतशिक्षाप्रणाल्यां नव्य-ज्ञान-विज्ञानराहित्येन ये दोषा आगताः तान् निराकर्तुं प्रयत्नकरणं नितांतमावश्यकम् । पाठनप्रणाल्यां सारल्यं, सौकर्यं, मनोरंजकत्वं च सम्पादयितुं चेष्टा अवश्यं करणीया । यतः संस्कृत-छात्रा नीरसफक्किकां रटित्वा २ स्वयं फक्किकारूपा (फक्किं=फाकामिति हिन्दी करोतीति फक्किक' ते) भवितुमारब्धाः । अतः अस्यां प्रणाल्यां आमूलचूलपरिवर्तनं संस्कृतोन्नत्यै प्राथमिकीं आवश्यकतां बिभर्ति ।

संस्कृताध्यापकानां नूतन-पाठन-विधि-शिक्षणाय स्थाने २ अखिलभारतीय-संस्कृतसाहित्यसम्मेलनस्य संरक्षकत्वे अध्यापक शिक्षण-विद्यालयानां (Teachers Training Colleges) परमावश्यकता ।

अखिलभारतीयसंस्कृतसाहित्यसम्मेलनेनाऽपि प्राचीनार्वाचीन-ज्ञानसमुद्रयोरवगाहनं कारयितुं हिन्दीसाहित्यसम्मेलनवत् परीक्षा प्रवर्तनीया । यावत्पर्यन्तं सर्वकारेण अखिलभारतीय-संस्कृत-विश्वविद्यालयस्य स्थापना न विधीयेत तावत्पर्यन्तं सम्मेलनस्य परीक्षाविभागस्य तत्त्वावधान एव विद्वद्भिः संस्कृतपरीक्षासु समस्तनव्यज्ञानं सम्पादयितुं प्रयतनीयम् ।

गीर्वाणवाण्या वरदविदुषामेतदपि महत्त्वपूर्णकर्तव्यं यत्ते सरलसंस्कृते-आधुनिकविषयेषु यथा विज्ञानेतिहास-भूगोल-राजनीति-कथोपन्यासादिषु स्वलेखनीचमत्कारप्रदर्शनपरा भवेयुः ।

संस्कृतलेखने देववाण्यऽपकर्षकालसूचिकां पाण्डित्यप्रदर्शनशैलीमन्धपरम्पराञ्च विहाय सरल,सरस,गम्भीरलेखकानां वाल्मीकिव्यासकालिदासप्रभृतीनामनुकरणं प्रकुर्युः ।

संस्कृतकविभिः जनसम्पर्कं विधाय लोकजीवनस्पर्शकारिणी रचना विधेया । यस्यां दीनहीननिपीडितजनताया वेदना मूर्तिमती भूत्वा पाठकं करुणाविगलितं कारयितुं क्षमा स्यात् ।

अन्यभाषावित्संस्कृतज्ञैरन्यभाषापुस्तकानामनुवादकार्यमपि करणीयम् । आयुर्विज्ञान, ज्योतिर्विज्ञानादिविषयेषु नवीन ऋषि-अर्चनस्य (Research) महत्याऽऽवश्यकता । एतत् कार्यमपि सुयोग्यसंस्कृतमनीषिणामेवाधीनम् ।

वर्तते प्रचारस्याऽस्मिन् युगे समाचारपत्राणां महत्ताऽवर्णनीया । अतः—"अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य तत्वावधाने हिन्दुस्तानधर्मयुगादीनां समताकारिणां दैनिक,सचित्र-साप्ताहिकसंस्कृतपत्राणां प्रकाशनं नितरामाऽऽवश्यकम् । पत्राणां भाषा अतीवसरलसंस्कृतैव स्यात् ।

राष्ट्रभाषाहिन्द्यै नवीनटेकनिकलशब्दानां संयोजना संस्कृतविद्वद्भिः करणीया ।

संस्कृतं राष्ट्रभारतीपदेऽभिषेक्तुमावश्यकमदः यत् संस्कृतस्य प्रचारः समाजस्य समस्तेषु वर्गेषु भवेदन्यथा संस्कृतस्य पूर्णसमुन्नतेराशा वृथैव । स्वामिविवेकानन्देनापि प्रोक्तम्—यत् "एकस्मिन्नेव शब्दे वक्तव्यं चेत् संस्कृतं सर्वस्वामिकं भवतु । न तत्र कस्याश्चिदपि एकस्या जातेः विशिष्टवर्गस्य वा एकाधिकारोऽस्तु–इत्येव मम मनीषा ।"

संस्कृतसमितीनां संरक्षकत्वे स्थाने २ संस्कृतनाटक-प्रदर्शनाय रंगस्थलव्यवस्थाऽपि संस्कृतविबुधैः कारणीया। मासिकसंस्कृतवाग्विवादलेखप्रतियोगिताश्च कार्याः।

संस्कृतविदुषां जयन्त्योऽपि सोत्साहेन सम्पादनीया। अखिलभारतीयसंस्कृतसम्मेलनस्य नियोजकत्वे आगामिदशवर्षेषु संस्कृतं राष्ट्रभाषा कथं स्यादिति विचारणीयम्। संस्कृतोन्नत्यै सर्वकारं प्रति सम्मेलनस्वीकृतयोजना प्रेषणीया च, राज्यकार्यमपि कतिपयवर्षेषु मध्ये संस्कृतभाषायामेव भवेदिति प्रयतनीयम्।

प्रान्तीयधारासभा च संसत्सदस्यानां संस्कृतज्ञानां सस्कृतोन्नत्यै प्रस्तावान् प्रस्तुतान् कुर्यात्।

## संस्कृतछात्राणां कर्तव्यम्—

संस्कृतस्य प्रौढ़ज्ञानकरणं संस्कृतछात्राणां परमं कर्तव्यम्। यतः अमुं विना संस्कृतस्य प्रतिष्ठा कथं स्यादिति।

आंग्लभाषाछात्राणां बाह्योपकरणादीनामुज्ज्वलतां विलोक्य संस्कृतछात्रेषु यत् हीनभावनोत्पद्यते तां सर्वथा त्यजेयुः। तैर्विचारणीयं यद् बाह्योपकरणादीनामुज्ज्वलता वस्तुतः उज्ज्वलता न–चित्तस्यैवोज्ज्वलता सत्योज्ज्वलता। संघटनं कृत्वा स्वाधिकारम्प्रति सततं जागरूकाः संघर्षपराश्च भवेयुः।

वस्तुतस्तु चरित्रबलसंयुक्ताः अनुशासनपरा यदि संस्कृतछात्राः स्युस्तर्हि संस्कृतं स्वयमेव गीर्वाणवाणी समुन्नतिपदं आरोहयति।

एवं प्रकारेण यर्हि संस्कृतज्ञाः स्वकर्तव्यपालनपराः स्युस्तर्हि संस्कृतं नातिचिरं राष्ट्रभाषापदवीं धारयिष्यति।

## जनतायाः कर्तव्यम्—

परमस्मिन् विषये जनताया सहयोगोऽपि परमावश्यकः। जनताजनार्दनेन संस्कृतसेवकैः कृतं प्रत्येकं कर्म सहानुभूत्या अवलोकनीयम्। संस्कृतप्रेमिश्रेष्ठिनां तु कर्तव्यमदः यत्ते स्थाने २ आदर्शसंस्कृतशिक्षालयानां स्थापनार्थं संस्कृतसेवकानां सहायतार्थं च दानपरा भवेयुः। साधारणजनताया इदं करणीयं यत्सा स्वपुत्रान् संस्कृतशिक्षायामेव नियोजयेत्। यतः पाश्चात्यशिक्षाभ्यासिबालका स्वसंस्कृतिनिष्णाता भवितु न शक्नुवन्ति। अतः एव प्रोक्तं विवेकानन्देन स्वामिना—

सामाजिकाधःपातं निरोद्धुं सर्वोत्कृष्टा संस्कृतिः एव प्रभवति न तु अन्यविधो ज्ञानराशिः। . . अतः सर्वेषामपि जनानां वहिरङ्गज्ञानाधानापेक्षया हृद्गुहान्तरङ्गे साधुसंस्कृतिप्रतिष्ठापनार्थमेव महान् प्रयत्नः आस्थेय। सा च संस्कृतिः सस्कृताधीना एव। अतः संस्कृतिरक्षणाय संस्कृतस्य सार्वत्रिकं अध्ययनं अत्यावश्यकं अपरिहार्यं चेति।"

अतः मनसा वाचा कर्मणा केनाप्युपायेन शक्य साहाय्यं जनताजनार्दनेनाऽवश्यं प्रदातव्यम्।

## सर्वकारस्य कर्तव्यम्—

स्वतन्त्रभारतराष्ट्रस्य सर्वकारेणापि संस्कृतोन्नतिं प्रति क्रियात्मककार्यं करणीयम्। यतः परममहनीया विद्वज्जनमाननीया सौभाग्यशोभनीया गौरवमयी गीर्वाणवाण्येव भारतीयसंस्कृतेरात्मा किंवा भारतस्याऽऽत्मा।

एकसहस्रावधिके भारतीयपराधीनताकाले यदि विदेशीयसर्वकारेण सांस्कृतिक–पुनीत-पयस्विन्या नवप्रवाहो न वर्धितः तत्तु अस्माकं दौर्भाग्यरजनी दोषै-

वाऽऽसीत् । किन्तु स्वतन्त्राप्राप्त्युत्तरकालेऽपि आर्य-संस्कृतिसभ्यता-संरक्षिका संस्कृतभाषा स्वसर्वकारेणैव उपेक्ष्यते चेत्तर्हि किं कथनीयम्—आस्माकीनानां दैवदुर्विपाकः–आहोस्विन् सर्वकारस्य संस्कृतमाहात्म्याऽनभिज्ञताऽथवा जानन्तोपि संस्कृततत्त्वं गजनिमीलिका । किमपि स्यात् । परमेतत् निर्विवादं यत् संस्कृतोन्नतिं विना भारतस्य मौलिकैकता खण्डिता भूत्वा भयावहां स्थितिमुत्पादयिष्यति । अपि च संस्कृतोन्नतिं बिनाऽन्य-भारतीयभाषाणामुन्नतिरपि परमकठिना । अत प्रजाहितकारिणः सर्वकारस्य कर्तव्यमिदं यद् द्वितीयपंचवर्षीययोजनायां संस्कृतोन्नत्यै न्यूनातिन्यूनं एककोटिमितरूप्यकव्ययं योजयेत् ।

अस्मिन् द्वितीयपंचवर्षीययोजनाकाले सर्वकारेण अखिलभारतीयसंस्कृतविश्वविद्यालयस्य निर्माणं विधेयम् । एतदन्तर्गता एकाऽनुसन्धानशाला (Research Institution) एकश्च बृहत्पुस्तकालयोपि भवेत् । यस्मिन् संस्कृतस्य प्राचीनार्वाचीनाऽलभ्यहस्तलिखित-संस्कृतग्रन्थानां संग्रहः स्यात् ।

एतद्व्यतिरिक्तं सर्वकारः संस्कृतस्योपाधिपरीक्षां आंग्लभाषोपाधिपरीक्षासमां कारयेत् । कतिपयवर्षानन्तरं संस्कृतमेव उच्चपरीक्षामाध्यमं स्यादिति व्यवस्थां कारयेत् ।

संस्कृताध्यापकानां जीवनस्तरमपि ( Living Standard ) उच्चं कुर्यात् ।

योग्यतमदेशीय–विदेशीयसंस्कृतछात्राणां कृते वृत्ति व्यवस्थाऽपि कर्तव्या ।

नवीनपाठ्यपुस्तकनिर्माणाय योग्यविद्वत्समितेः पुस्तकप्रकाशनसंस्थानकस्य च प्रबन्धः करणीयः ।

स्त्रीणां कृते संस्कृतशिक्षणाय विशेषव्यवस्था कार्या । सर्वासूच्चपरीक्षासु संस्कृताध्ययनमनिवार्यं विदध्यात् ।

संस्कृतप्रचाराय अखिलभारतीयआकाशवाणी (All India Radio) केन्द्रतः संस्कृतकार्यक्रमाणां प्रसारणयोजनामपि कारयेत् ।

संस्कृतकवीनां जयन्त्यवसरे सर्वकारीयः समारोहः सार्वजनिकोऽवकाशश्च विधेयः ।

संस्कृताध्यापकानां वेतनस्तरमपि आंग्लाध्यापकैः समं कुर्यात् ।

विदेशस्थितराजदूतालयेषु संस्कृतमेव प्रयोक्तव्यम् ।

केन्द्रीयसूचनाप्रसारणमंत्रालयेन संस्कृतवृत्तचलचित्रनिर्माणायाऽऽवश्यकः प्रबन्धो विधेयः ।

प्रान्तीयसर्वकाराणाञ्च कर्तव्यमदः यत्ते द्वितीय-पंचवर्षीययोजनाकाले संस्कृतोन्नत्यै प्रान्तीयसंस्कृतविश्वविद्यालयानां स्थापनं संस्कृतशिक्षालयानामार्थिकसाहाय्यादिकार्यं च विदध्युः ।

एतानि संस्कृतविदुषां-जनतायाः सर्वकारस्य च कर्तव्यानि । यदि एते स्व स्व कर्तव्यपालनपरा भवेयुस्तर्हि अचिरादेव संस्कृतं भारतस्य राष्ट्रभाषा-भूत्वाऽन्तरराष्ट्रियभाषाऽपि भवितुं शक्नुयात् । विश्वशान्त्यर्थं शान्त्युद्जनबमसमः संस्कृतस्योत्कर्षोऽपि उत्कर्षपूर्णशान्तिप्रदः स्यादित्यहमल्पधीर्मन्ये ।

जय जय हे भगवति सुरभारति ! तव चरणौ प्रणमामः ।
राष्ट्रगिरा स्यात् संस्कृतवाणी सततमदो वाञ्छामः ॥

# माया

( पाण्डेय रघुवीरप्रसादशर्मा साहित्यविशारदः पाटलिपुत्रमहाविद्यालये, पाटलिपुत्रम् )

एकदा नारदः कृष्णं पप्रच्छ—'दर्शय मां मायाम्'। कतिपयदिवसाः व्यतीताः। कृष्णनारदौ मरुभूमिप्रदेशे यात्रां कर्तुम् प्रस्थितवन्तौ। बहून् क्रोशान् गत्वा कृष्णः प्राह—"नारद, तृषितोऽहम्, शक्नोषि किं त्वं किंचित् जलं दातुं मह्यम्? 'गच्छाम्यहं सत्वरम्, भद्र, तूर्णमेव जलमानेतुम्।' तथा च नारदो ययौ। अल्पदूरस्थः कश्चित् ग्रामः आसीत्, स ग्रामं विवेश जलान्वेषणाय। कस्मिंश्चित् द्वारि शब्दमकरोत्। एका लावण्यवती यौवनरता मृदुलाङ्गिनी बाला कपाटौ अनावृतौ कृत्वा बहिः आययौ। तस्याः प्रथमदृष्टिनिक्षेपमात्रेण स विस्मृतवान् क्षणे एव यत् तस्य स्वामी जलहेतुकीं प्रतीक्षामकरोत्, अपि च जलाभावे मृतक इव वर्ततेस्म। सर्वं विस्मृत्य तया रमण्या सह वार्त्तालापमारेभे। दिवसः व्यतीतः, परं हि स न प्रत्यावर्तितवान् स्वामिनः सकाशम्। अपरस्मिन् दिवसे स तत्र पुनः आययौ, रमण्या सह मधुरालापमारेभे च। आलापे संलापे प्रेम परस्परं जातम्। स तस्याः जनकमाहूय कथितवान् वार्त्ताम् अयाचत च ताम् विवाहाय। परिणयं कृत्वा तौ निवसतः स्म सन्तानं च प्राप्नुवन्तौ। द्वादशवर्षाणि व्यतीतानि। श्वशुरे पंचत्वं गते स तस्य सम्पत्तिमधिकृतवान्। स स्वभार्यया शिशुभिश्च सह स्वेच्छया ससुखं स्वक्षेत्रे स्व पशुभिः सम्पन्नः सुखमयजीवनं यापयामास।

व्यतीते किंचित्काले जलप्लावनम् उग्ररूपेण बभूव। एकस्यां रात्रौ नद्यां जलं विवर्द्धमानमासीत्, तटानि भग्नानि, ग्रामः प्लावितः। गृहाणि पतितानि, जना पशवश्च जलधारया नीताः प्रवाहिता जले मग्नाश्च बभूवुः। धारया सह सर्वाणि वस्तूनि प्रवाहितानि।

नारदः स्वरक्षां कर्तुं प्रायतत। एकेन हस्तेन स स्वप्राणवल्लभां गृहीतवान्, अपरेण द्वौ शिशू, अन्यः तस्य स्कन्धयोरासीत्। अनेन प्रकारेण सर्वं समावृत्य स भीषणप्लावनात् त्रातुं प्रयत्नशीलोऽभूत्। द्वि चतुराणि पदानि गत्वा स अतितीव्रां धारां अलभत। तस्य स्कंधाभ्यां पतितः शिशुः जले च मग्नः। नारदः चीत्कारमकरोत्। तस्य बालकस्य रक्षणचेष्टायां अपरः शिशुः तस्य करात् निष्क्रम्य जले प्रवाहितः। अन्ततो गत्वा तस्य पत्नी प्रवाहिता यद्यपि सा तेन सशक्तहस्तेन धृता आसीत्। स स्वयं तटे प्रक्षिप्तः, शोकसम्विग्नमानसः। तस्य पृष्ठभागात् नम्रः स्वरः आययौ—'वत्स! कुत्रास्ति जलम्? त्वं गतोऽभूः जलं प्राप्तुम्, अहम् अत्र तव प्रतीक्षायां स्थितः। त्वं अर्द्धघटिकापूर्वं गतोऽभूः।

'अर्द्धघटिका!' नारदः साश्चर्यमुवाच। सम्पूर्णानि द्वादशवर्षाणि व्यतीतानि तस्य मनसि, दृश्यानि च सर्वाणि विघटितानि अर्द्धघटिकायामेव।

कृष्णः प्राह—'नारद' इयमेव माया!'

★★

# व्यासजयन्ती

( पि · वि० कृष्णवार्यर, सम्कृत उपाध्याय , एच. ई एच एम एम एच. एस काञ्च )

[ व्यासदिनमहामहे (२२-७-१९५६ व्यासपौर्णिमादिने) एरणाकुलम् महाराजकीयकलाशालायां सम्मिलितायां सभायां पठितः उपन्यास, ]

विदितमेव हि भवतां महात्मनां यत् केचन पण्डितम्मन्या संस्कृतभाषां मृतभाषां निर्वक्तुं जाताभिलाषाः आसन्निति । तथापि भारतभूमेः स्वातन्त्र्यलाभात् परं केचित् विद्वांसः सा जीवद्भाषैवेति वक्तुमारभन्तेति सन्तोषावह एव । एतादृशेऽवसरे संस्कृतभाषायाः पितृत्वार्हस्य कस्यचन महाशयस्य जन्मदिनाघोषे संस्कृतभाषाया क्रियमाणं प्राभषणं संस्कृताभिज्ञानां विदुषां सन्तोषमेवावहेदिति मे विश्वास ।

यो महामुनिः वेदव्यसनात् सञ्जातमहायशाः, यत्कृताष्टादशमहापुराणसिन्धुतोयजलाञ्जलिपानेन भास कालिदासादयोपि स्वकीयसारस्वतप्रक्रियां कर्तुं प्रभवन्ति स्म, यस्मै च वेदविदो ब्राह्मणाः प्रतिदिनं प्रतिसन्ध्यं "व्यासं वसिष्ठनप्तारं" "व्यासाय विष्णुरूपाय" इत्यादिभिः स्तोत्रैः नमस्कृतिं कुर्वन्ति, तस्मै पुराणानां कर्त्रे, महीयसां महसां संहर्त्रे, विज्ञानविशेषाणां दात्रे, विदुररूपेणावतीर्णस्य पितृपतेरपि पित्रे प्रथमतः नमस्कृतिं कुर्मो भक्तियुक्तेन मनसा ।।

वेदानां व्यस्तिहेतोः व्यासः इति, द्वीपान्तर्भूतसंव्यावात् द्वैपायन इति, कृष्णवर्णात् कृष्ण इति च समाहूयमानः सोऽयं महामुनिः वैकर्तनीमुत्तरं मागतस्य मुनिवर्यस्य पराशरस्य तत्रैव नद्यां यदृच्छया दृष्टायां सत्यवत्यां दासपुत्र्यां सञ्जातः पुत्रः इति समाचक्षते पुराणज्ञाः । किन्तु न मम विश्वासभूमिमारोढुमलमयमितिहास । प्रत्यूषसमये पराशरमुद्वहन्ती नौका तावत् नदीवेगेन कस्मिन्नपि द्वीपे संलग्ना, ततश्च तस्मिन्नेव द्वीपे प्रभातविभावसुसमप्रभः कोऽपि कुमारः पराशरेण दृष्टः स चानपत्यतया तं पुत्रनिर्विशेषेण वात्सल्येन पोषितवान् स एव व्यास इत्येव मे मनीषा । न कदापि कापि दाशकन्यका महायशसः महामुनेः सवित्री भवितुमर्हति ।

सोयं व्यासः कृतयुगे वसिष्ठादीनां तपोधनानां कुले कृतावतार इति भारतीया वर्णयन्ति । आङ्गलेयास्तु व्यासो नाम न कश्चित् पुरुषविशेषः, किन्तु व्यासः इति गोत्रनामधेयाः, केचन तपोधनाः तत्तत्कालीनाः इति तर्कयन्ति । एतादृशचिन्तासागरमग्नो भूत्वा न वृथाकालं नाशयितुमिच्छामि । परन्तु युद्धाद्यधार्मिकमार्गनिरतेषु ज्ञानवैराग्यमोदादिषु विमुखीभूय बंभ्रम्यमाणेषु सर्वेष्वाङ्गलेयेषु भारतीयाः परं आध्यात्मनिरताः भूत्वा कर्मभूमि भारतभुवं ससुखमावसन्ति चेत् तस्य निदानं व्यासप्रभृतीनां महामुनीनां परार्थपरित्यक्तजीवितानां सदुपदेशमाहात्म्यमेवेति निश्चप्रचमेव ।

अपारे संसारे मज्जनोन्मज्जनमादधानेषु जनेषु तेषामनुजिघृक्षया सदुपदेशभूयिष्ठानि सत्कथासहस्रविलसितानि महापुराणानि निर्मातुमिच्छामावहन् तत्र भवान् व्यासमहामुनिरित्याहु । तथाहि "अष्टादशपुराणानां कर्ता सत्यवतीसुतः" इति खलु पुराविदः कथयन्ति ।।

"मद्वयं भद्वयं चैव बत्रयं वचतुष्टयम् अनापलिङ्गकूस्कानि पुराणानि महामुनेः" इति सूतश्लोकेन विख्याताख्येषु तेषु पुराणेषु कानिचित् वैष्णवैः भक्तैः परं पठ्यमानानि वराहादीनि, कानिचित् मार्कण्डेयादीनि शैवैः भक्तैः परं लालितानि च भवन्तीति वयमुत्पश्याम। अनेन तेषां भिन्नकर्तृत्वं न शङ्कनीयम्। यथा पौरोगव एकस्मिन्नेव महानसे बुभुक्षूणां रुचिभेदेन बहूनि व्यञ्जनानि व्यत्यस्तरुचीनि करोति तथा महामुनिरपि भिन्नमार्गावलम्बिनां मुमुक्षूणां भक्तानां भिन्नरुचित्वमभिलक्ष्य विविधानि पुराणानि निर्मितवानिति निश्चेतुमलम्। यतः भिन्नमार्गावलम्बिनामपि मोक्षदशायामेकस्मिन्नेव विलयः इति स सम्यक् जानात्येव। अन्यथा "एको देवः सर्वभूतेषु वासी, सर्वव्यापी, सर्वभूतान्तरात्मा" इत्याद्युपनिषद्वचनं कथं सङ्गतं भवेत्? अतएव "आकाशात् पतितं तोयं यथा गच्छति सागरं, सर्वदेवनमस्कारः केशवं प्रति गच्छति" इत्युक्तवान् महामुनिः।

एतान्यष्टादशपुराणानि मुद्रितानि न केवलं भारते, किन्तु देशान्तरेष्वपि प्रसिद्धानि, चरित्रान्वेषणविचक्षणैः बहुसंख्यकैः भक्तैश्च सादरं सश्रद्धं पठ्यन्ते कलियुगेऽस्मिन्नपि। तेषु पुराणेषु विष्णुभक्तैरमृतमिव पीयमानं, भगवतः विष्णोः विविधैरवतारैर्विभूषितं विशिष्य कृष्णस्य बालक्रीडादिभिरलंकृतं, मुमुक्षुभिः सप्ताहयज्ञादिषु पठ्यमानं, सरलं, सरसं कथाभिरुपकथाभिश्चालंकृतं भागवतपुराणं पुनरासेतुहिमाचलं प्रसृते भारते प्रसिद्धतममिति निर्मत्सरबुद्धिभिरङ्गीकृतमेव। यद्यपीदं पुराणं नाऽष्टादशपुराणान्तर्गतमिति मनीषिणः कथयन्ति तथाप्यस्य व्यासकर्तृत्वे नास्ति विवादो विदुषाम्। तत्रान्तर्गता सम्मताख्येन वृत्तविशेषेण ग्रथिता "जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि" इत्यादिपद्यैरारभ्यमाणा गोपिकागीता सर्वभागवतसारभूता भगवतो महर्षेः व्यासस्य महामुनित्वमिव महाकवित्वमपि प्रकाशयन्ती लसति। काले कदाचित् केरलीयैः कैरल्याः कण्ठाभरणभूत इति वर्णितः द्वितीयाक्षरप्रासोऽपि गोपिकागीतायां दृश्यत इतीदं कौतुकावहमेवास्माकं केरलीयानाम्।

श्रुत्वा गुणान् भुवनसुन्दर शृण्वतां ते
निर्विश्य कर्णविवरैर्हरतोऽङ्गतापान्।
रूपं दृशां दृशिमतामखिलार्थलाभं
त्वय्यच्युताविशति चित्तमपत्रपं मे"

इत्यादिभिः पद्यैः ग्रथिता रुक्मिण्या श्रीकृष्णाय प्रहिता सन्देशवागपि सहृदयानामोदमहोदधौ मज्जयितुमलमिति निर्विवादमेव। एवं ध्रुवाम्बरीषाजामिलानां कथासु वर्ण्यमानासु महामुनिनानेन प्रदर्शितं कवितानिर्माणपाटवं तत्र सर्वत्राभेदेनास्वाद्यमानं स्वारस्यं च वर्णयितुं विस्तरभयात् मया न यत्नः क्रियते। तथापि वेदान्तसर्वस्वसारभूतः एकादशस्कन्धान्तर्भूतः उद्धवोपदेशः विशेषतः परिगणयितुमर्हतीति कथयनीयमेव।

अयि भोः महाशयाः, व्यासनिर्मितानि पुराणान्यधिकृत्य मया नातिविस्तीर्णतया यत् किमप्युपन्यस्तम्। तथापि तेन महामुनिना कृतं महाभारतमधिकृत्यापि किञ्चिदिवानुक्त्वा यद्युपन्यासोऽयं समाप्नुयात् तर्हि तदतीवासमीचीनतां व्रजेत्। अतः महाभारतं तद्द्वारा व्यासस्य महिमातिशयं च प्रख्यापयितुमुचितमिति मन्ये। अष्टादशपुराणानां निर्माणानन्तरं तेषु वर्णितः कथानां भागः ग्रन्थेनकेन संक्षेपतः समाहृत्य कथनीयः इति कृत्वा तेन महामुनिना निर्मितं महाभारतमिति खलु विद्वांसो वदन्ति। अत एवाष्टादशपुराणानां संक्षेपात्मकतया ग्रन्थस्यास्य महत्वं, तादृशात् भारवत्त्वाच्च महाभारतमिति

## सम्पादकीयम्—

इयं संस्कृतभाषा भारतीयाया एकताया: सुमहत् प्रतीकम्—'पूना' प्रदेशस्थे "भाण्डारकर-शोधसंस्थाने" भारतप्रधानमन्त्रिणः श्रीनेहरूमहोदयस्य भाषणमगस्तमासस्य १ तारिकायामभूदिति पठितं स्यात्संवादपत्रपाठकैः। प्रधानमन्त्री 'भाण्डारकर-प्राच्यसंशोधनसंस्थाने' (भाण्डारकर ओरिएण्टलरिसर्च इन्स्टिट्यूट) सार्वजनिकसभायामासीद् भाषमाणः। पूर्वोक्त संशोधनसंस्थाने भारतीयसाहित्यस्य अक्षय्यो निधिः श्रीमन्महाभारतं बहोः कालान् मुद्रयमाणमस्ति इति ज्ञातं स्यात् संस्कृतसेविभिः। महाभारतस्यास्य संप्रति 'शान्ति-

---

संज्ञा च सङ्गच्छते। "धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ, यदिहास्ति तदन्यत्र यन्नेहास्ति न कर्हिचित्" इत्ययं श्लोकः अस्य महाग्रन्थस्य सर्वग्रन्थसारभूतत्वं प्रख्यापयति। लक्षाधिकैः पद्यैः प्रथितोऽयमितिहासः लोके विद्यमानेषु तादृशेषु बृहत्तममिति सर्वे कथयन्ति। असंख्यैः कथोपकथागणैः उपदेशैः स्तोत्रैः चातुर्वर्णिकानां धर्मभेदैराचारभेदैः सरसमुपवर्णितैर्विभूषितस्यास्य ग्रन्थस्य सर्वैरास्तिकैरधीयमाना समस्तोपनिषद्रहस्यभूता श्रीमद्भगवद्गीता सर्वहैन्दवग्रन्थानां नायकत्वमापादयति। प्रतिदिनं भक्तसहस्रैः सादरं पठ्यमानं श्रीविष्णुसहस्रनामस्तोत्रमप्यस्मिन् ग्रन्थ एव सङ्घटितं महामुनिना॥

बकहिडुम्बादीनां रूपवर्णनं, सर्वत्र सुलभतया वर्णितः वनानां नदीविशेषाणां च विलासः, घटोत्कचप्रभृतीनां युद्धयात्रा, किं बहुना व्यासस्य तूलिकानिर्गतानि सर्वाण्यपि सहृदयस्य मनसि चित्रवत् प्रतिभान्ति। श्रीकृष्णविदुरसञ्जयादीनां राष्ट्रतन्त्रज्ञता तावदाधुनिकानपि विस्मापयेत्॥

विदुरस्य सर्वज्ञता, भीष्मस्य परोपदेशनिपुणता, द्रोणस्याभ्यसनपाटवं, कृष्णस्य भक्तवात्सल्यं आपदुद्धरणक्षमत्वं च, युधिष्ठिरस्य धर्मज्ञता, कर्णस्य दानशीलता, दुर्योधनस्य लोभः, याज्ञसेन्याः निश्चयदार्ढ्यं, भीमार्जुनयोर्भ्रातृभक्तिः, पृथायाः दुःखेष्वक्षोभ्यता चैवमादिविविधानां व्यक्तिविशेषाणां स्वभावस्य वैविध्यं वैचित्र्यं चावहन् महाग्रन्थोऽयं सर्वान् प्राचीनानर्वाचीनांश्च एतादृशसर्वातिशायिनो ग्रन्थस्य निर्माणेनैव वेदव्यासः सर्वेषामस्माकं स्मरणपथादगच्छन् सर्वदा विलसति।

एवं बहूनां पुराणानां महाभारतस्य च निर्माणेन सेतुहिमाचलपर्यन्तं व्याप्तस्य भारतखंडस्याध्यात्मिकशक्तिं सुदृढयन्, तद्द्वारा तस्य कर्मभूमित्वमपि सम्पादयन्, निःस्वार्थेन सेवनेन, निर्मत्सरेण कर्मणा च जनतामनुगृह्णन्, अतिपुरातनोऽप्याधुनिक इव विदुषां हृदयकमलेष्वनवरतं निवसन् वेदव्यास इव यद्यपरोऽस्ति सः वेदव्यास एवेत्येव वक्तव्यं भवति। तादृशस्य महाभारतस्य जन्मदिनेऽस्मिन् तस्य स्मरणे, तदपदान् कीर्तने, तन्निर्मितानां ग्रन्थानां वर्णने चास्मादृशाः जनाः प्रयत्नलेशमपि यद्यातिष्ठेयुः तर्हि तदस्माकमवश्यकर्तव्यानुष्ठानव्यग्रतामेवोद्घोषयति।

अयि भोः महान्तः सन्तः अस्मत्कृतेऽस्मिन् प्रभाषणे दत्तश्रद्धानां युष्माकमयमञ्जलिः।

---

पर्व-शल्यपर्वणो.' त्रयो भागाः पूर्ति गताः। अतएव संस्थानेऽस्मिन् साहित्यसेविभिः राजकर्मचारिभिः अगस्तमासस्य प्रथमदिवसे सोयमुत्सवः समारोपितोऽभूत्। अस्मिन्नुत्सवे समवेतुमामन्त्रितोऽभूत् प्रधानमन्त्रिमहाभागः। वायुयानस्य अवमोचनस्थाने ['हवाई अड्डा'] रामवतीयैव श्रीनेहरुमहाभागो मोहमयीप्रदेशस्य राज्यपालेन, मुख्यमन्त्रिणा च सह भाण्डारकरीयं संशोधनस्थानमिदमुपागमत्। चतुःक्रोशादीर्घेऽस्मिन् व्यायते मार्गे अपारा जनता निजस्य जननायकस्य चिरकांक्षित दर्शनमतीवोत्सुकतया कुर्वन्ती आसीत्।

पं० नेहरूमहोदयो निजभाषणस्य शीर्षकरूपेण प्रथम-प्रथममेव सोत्साहं समभाषत—"यत् देशस्याऽस्य राजनैतिकं कीदृशमपि स्वरूपं भवेत्, किन्तु संस्कृतभाषा आर्याणां मूलभाषारूपेण देशस्याऽस्य एकतामद्यावधि अक्षुण्णरूपेण स्थापयामास। सेयमार्यभाषा भारतीयजनतायाः सांस्कृतिक्याः एकतायाः सुमहामहत् प्रतीकम्।

अभाषत प्रधानमन्त्रिमहाभाग —यदा ह्यहं पुण्यपत्तनार्थं प्रस्थितोऽभवं तदा स्पष्टं मे प्रतिभातमभूद् यद् राजनैतिकीं मलिनतामुल्लंघ्य सत्यस्य विचारस्य च पुण्यमये प्रदेशेऽहं गच्छामि। अस्मिन्नवसरे द्वे अपि कार्ये मत्संमुखमतिमहत्त्वस्य समुपस्थिते, एकमिदं शोधसंस्थानम्, द्वितीयं चाद्यैव समुपस्थितं लोकमान्य-तिलक महाभागस्य निर्वाणदिनकार्यम्, यस्य कारणादिदं मे समागमनमत्राऽभूत्।"

## प्रशंसनीयं कार्यम्

पं० नेहरूमहाभागेनोक्तम्—"क्रियात्मकराजनीतिकार्यादपि समधिकसुस्थिरं तदिदमस्ति यदिदं विशालकायस्य महाग्रन्थस्य समीक्षात्मकं प्रकाशनं नाम। एवंविधा ग्रन्था अस्माकमतीतं महत्त्वमस्मान् पुनः पुनः स्मारयन्ति। संस्कृतसाहित्यस्य तदिदं महाकाव्यमस्माकं प्रशंसनीयस्याऽतीतस्याऽद्वितीय इतिहासः। अनेन हि स्पष्टमिदं प्रमाणितं भवति यत् संस्कृतभाषा सहस्रसहस्रवर्षाणि यावत् आर्यदेशस्याऽस्य मूलभाषारूपेण भूमण्डलेऽस्मिन् गौरवान्विता प्राचरत्।"

भारतमिदं संस्कृतभाषायाः, तथा ज्ञानप्रभुत्वस्य कारणादत्यन्तं समृद्धिशालि समभवत्। पुरातनं तदिदमेव ज्ञानस्वत्वम् ('विरासत') अद्यतनानां भारतीयसंतानानां सविधे महत्त्वाय विद्यते।" प्रधानमन्त्रिमहाभागो भारतीयजीवनं, तस्य संस्कृतेर्महत्त्वम्, भारतस्य पुरातनसमृद्धिशालितां चाऽऽलम्ब्य बारं बारं देशस्याऽस्य गौरवमघोषयत्। पं० नेहरूमहाभागेनोक्तम्—"संस्कृतं जनतायाः परस्परसंलापस्य भाषा कदापि नाऽभवत्। एषा हि अनन्तशताब्दीरारभ्य भारतस्य जीवने, तत्संस्कृतेश्च विषये प्रधानं मूलकारणमासीदिति कथने न कोऽपि मे संदेहः। एतदप्यहं निःसंशयं मन्ये यत्सेयं भाषा भविष्यत्कालेऽपि महत्त्वपूर्णमिदं पदमधिरूढा भवेत्। अनुसंधानक्षेत्रे भाण्डारकरीयस्याऽस्य शोधसंस्थानस्य भूरिभूरि महत्त्वं नूनम्। विवादास्पदतां परिहाय महाभारतस्य तदिदं संस्करणं भारतीयविकासयोजनायामतिमहत्त्वपूर्णं कार्यं सेत्स्यति। महाभारतस्याऽस्य भारतीयलोकानां मस्तिष्के अतिगभीरः प्रभावश्चिरकालात्सुस्थिरोऽभवत्, भविष्यत्काले चापि सोयं तिष्ठेत्।

संस्कृतभाषाया महत्त्वमुद्घोषयन् नेहरूमहोदयो मानवजीवने विचारशक्तेरेव सर्वोपरि महत्त्वमास्थापयत्।" यद्यपि क्रियाशक्तेः स्थानमपि न किञ्चिद् हीनम्, किन्तु विचारशक्तेः स्थानं सर्वाधिकमहत्त्व-

पूर्णम्। प्रत्युत क्रियाऽपि विचारबलेनैव अनुप्राणिता भवति। पुरातनकाले भारतस्य महत्त्वपूर्णं यत्किल 'प्रदानम्' (देन) अस्ति, तद्धि संस्कृतभाषाद्वारा 'एकता' स्थापनं नूनम्। संस्कृतभाषाया अध्ययनं, सर्वतः प्रयोगश्च भारतस्य प्रत्येकप्रान्ते समभवत्। यद्यपि पुराकाले देशोऽयं बहुषु राजनैतिकभागेषु ('इकाइयां') विभक्तो भवेत् किन्तु संस्कृतभाषया, तत्प्रकटितविचारैश्च भारतस्य एकता सुस्थिरी कृता। सेयं संस्कृतभाषा पुरातनभारतस्य परम्परायाः, ज्ञानपिपासाप्रतिरोधकस्य च प्रतिनिधित्वं करोति। अद्यतनेऽस्मिन् भौतिकयुगे भारतीयजनैर्ज्ञानाऽर्जने एव सर्वात्मना प्रयतितव्यम्।"

अस्मिन् प्रसङ्गे पं० नेहरूमहोदयो भाण्डारकरीयशोधसंस्थानस्य, अन्यान्यसंस्थानां च, भूरिप्रशंसामकरोत् या हि प्राचीनज्ञानस्य गवेषणे संलग्नाः सन्ति। निजभाषणस्योपसंहारे नेहरूमहोदयः सोत्साहं समभापत—"भविष्यत्काले भारतस्य भवेत्कामं कीदृशमपि रूपं किन्तु मम नास्ति स्तोकोऽपि संदेहो यत् सेयं संस्कृतभाषा, तद्द्वारा प्राप्तव्यं ज्ञानं च सर्वदैवाऽस्माकं सहचरे भवेताम्।"

**भीषणो दैवप्रकोपः**—अस्मिन् वर्षे स्थानस्थानतो दैवकृतानामुत्पातानां संवादाः समुपलभ्यन्ते। इन्द्रकृता वर्षा प्राणिनां जीवनदानाय संपद्यते। यदि कस्मिन्नपि वर्षे वर्षायास्त्रुटिश्चेत्सम्पद्यते तर्हि देशे सर्वतो हा हा कार इव प्रारभ्यते। मनुष्याणां पशूनां च जीवनसंशयः समुदेति। किन्तु सैव वृष्टिः सीमानमुल्लंघ्य यदि भीषणं रूपं धारयति तर्हि लोकानां जीवनदानस्थाने सैव जीवनापहर्त्री संभवति। अस्मिन् वर्षे प्रारम्भत एव वर्षायाः प्राचुर्यं परितः प्राऽलोक्यत। हिमालयाञ्चले

वैशाखादेव वृष्टिः प्रारभ्यत, येन बदरीनाथयात्रिणां स्थाने स्थाने मार्गाऽवरोधः, धन-जनक्षयश्च संभाव्यते स्म। मद्रासप्रान्ततोऽपि कावेरीनद्याः पूरोपप्लवस्य संवादः पठितः पत्रपाठकैः। बिहारप्रान्ते तु प्रायः प्रतिवर्षमेव नदीनां पूरवृद्ध्या धन-जनहानिः श्रूयते।

ऐषमः राजस्थानतोऽपि वर्षाऽऽधिक्येन जनतायां हानेः कोलाहलः श्रूयते। मेदपाटे (मेवाड) ये तडागाः संपूर्णवर्षे निरन्तरवर्षया भ्रियन्ते स्म, ते हि दिनद्वय वृष्ट्यैव पूरिताः। 'जालोर' स्थाने भीषणवर्षया वाष्पशकटिमार्गस्य लोहलेखाः स्थाने स्थाने विशीर्णाः। 'मोदरा' नगरे स्थाने २ धान्यराशिर्भूमिसात् जातः। मेदपाटस्य बहुषु ग्रामेषु कृषीवलाः, अस्पृश्यजातीयाश्च जना गृहहीनाः संपन्नाः बहुषु स्थानेषु छागादयः पशवः प्रवाहे व्यपगताः। एवं सर्वतो विपद्ग्रस्ता जनाः सांप्रतं सर्वथा खिद्यन्ते। धनिकानां धनसाहाय्येन विपद्ग्रस्तेभ्यः अन्न-वस्त्रादिप्राप्तिर्भवति।

एकतो वर्षाऽधिक्येन लोकानां कोलाहलः श्रूयते, अपरतो भूकम्पेन जनानां विपत्तिरुपगता। पञ्चदशदिवसा व्यतीताः, कच्छप्रदेशे भयानको भूकम्पः समभवद् येन १०१ जनाः सर्वथा मृताः, त्रिशतं पुरुषाश्च आहताः समभवन्। अञ्जारप्रदेशे पञ्चशतं गृहाः सर्वथा धराशायिनो जाताः, अनुमानतस्तावन्त एव च विशीर्णाः। दमाकडा-दुधाईप्रभृतिग्रामेषु शत-शतगृहा विशीर्णाः। भूकम्पप्रारम्भे एव जना गृहान् परित्यज्य बहिः पलायिताः अतएव मनुष्यहानिर्न तावती जाता। गृहहीनानां सहायतार्थं स्थाने २ धनसंचयः क्रियते।

# भारती

( संस्कृतस्य प्रमुखं मासिकपत्रम् )





गीता येनाऽभिगीताऽभूत्पुरा भारतसंयुगे ।
हीनोद्धारसंतृष्णोऽस्तु श्रीकृष्णो भारते सदा ॥

वर्षम् ६ | एकादशोऽङ्कः | मूल्यम् वार्षिकम् ३) रु० एकस्याङ्कस्य =)

राजस्थान-मद्रास-मध्यप्रदेश-सौराष्ट्र-भूपाल-उत्तरप्रदेश-बिहार-पञ्चनद-आन्ध्र-सर्वकारैः स्वीकृता—

## ❋ विषय-सूची ❋



सूचना :—सर्वे ग्राहकाः सूच्यन्ते यत् पत्रव्यवहारावसरे निजग्राहकसंख्यां स्वस्मिन् पत्रे अवश्यं दर्शयेयुः। अन्यथा पत्रोत्तरे बाधा समुत्पस्यन्ते।

### —❋ "भारती" पत्रस्य उद्देश्यानि नियमाश्च ❋—

१. संस्कृतभाषायाः प्रचारः, सरलेन संस्कृतेन सामयिकानां विचाराणाम्, उत्कृष्टाया मानसिकविचारपरिपोषिकायाः सामग्र्याश्च समर्पणम्, अस्य पत्रस्योद्देश्यानि।

२. 'भारती'पत्रस्य वार्षिकं शुल्कं ३) रूप्यकत्रयम्।

३. मासिकपत्रमिदं प्रतिमासं पूर्णिमासं प्रतिपदायां तिथौ प्रकाशितं स्यात्।

४. एकस्यांकस्य मूल्यम् ।=) आणकषट्कम्।

सम्पादकः—
कविशिरोमणि
भट्टश्रीमथुरानाथशास्त्री
सहसम्पादक —
देवर्षिकलानाथशास्त्री बी. ए.
जयपुरम्

# भारती

भानुवद् भारतीयानां भास्वद्भवनभासिनी ।
भागीरथीव भावाढ्या भारते भातु भारती ॥

प्रबन्ध-सम्पादकः—
गिरिराजशर्माशास्त्री

वर्षः ६ | भाद्रपदशुक्ला १, सं० २०१३ | अङ्कः ११

नव्यनाटकम्—

## श्रीकृष्ण--दौत्यम्

[ ले० भास्कर केशव ढोक ]

नान्दीः—

कृष्णो विराजतां हृदि नः । कृष्णो विराजताम् ॥
मनसि वचसि काये रमतां नो देवः प्रीयताम् ॥

हत्वा कंसप्रमुखान् दुष्टान्
रक्ष गोद्विजवृन्दं सुजनान्
चकार धर्मावनं बहुविधाम्
लीलां सुन्दराम् ॥१॥

सखा पाण्डवानां यो भूत्वा
कृष्णां प्रियभगिनीमिव मत्वा
ररक्ष लज्जां तस्याः, कृत्वा
खलु तां निर्भयाम् ॥२॥

अत्र मयेदं माधव-दौत्यम्
वर्णितमच्युतकृपया विमलम्
अधुना छात्रगणैरभिनीतम्
सुजनैर्दृश्यताम् ॥३॥

कौरवराजसभायां हरिणा
पुरस्कृतासीत् सामयोजना
मन्यन्ते स्म न ते मतिहीनाः
तस्य प्रार्थनाम् ॥४॥

अपनेतुं फाल्गुनसंमोहम्
कथितं तस्मै गीताज्ञानम्
उपकृतमखिलं येन हि विश्वम्
श्रीशो विजयताम् ॥५॥

प्रथमः प्रवेशः ।

भीमः—आर्य ! दुर्योधनेन प्रहितः संदेशः अत्र भवता महाराजेन श्रुतं किम् ।

युधिष्ठिरः—अथ किम्-युद्धेन विना अस्माकं राज्यं प्रत्यर्पितुं स नेच्छति ।

भीमः—तत् प्रथममेव मया अभिहितम् । दुर्योधनस्य सदृशः हि स संदेशः । अधुना किं चिंतयति महाराजः ।

युधि०—व्यसनकाले श्रीकृष्ण एव अस्माकं गतिः । स एव अस्मान् अधुना मार्गं दर्शयिष्यति । अतः स मया अत्र आहूतः । अचिरेण एव सः अत्र आगमिष्यति इति अहं मन्ये । पश्चात् अयं प्रश्नः पुनर्विमर्षणीयो भविष्यति ।

भीमः—(अवलोक्य) एष भगवान् श्रीकृष्णः द्रौपद्या सह आगतः ।

(द्रौपद्या सह श्रीकृष्णः प्रविशति)

युधि०—देव आगम्यताम्, चिंतितोपस्थितो भवान् । अनुगृहीतोऽस्मि । गृह्यताम् इदं आसनम् ।

श्रीकृष्णः—अहं तु भवतां स्नेहबंधने निबद्धोऽस्मि । भवद्भिः चिंतितः सन् अहं कथं न आगच्छेयम् । अपरं च—

यद्यत्काले स्मरति भवतां कोऽपि मां प्रेमभावात्
तत्तत्काले स्फुरति हृदयं गूढभावैर्ममेदम् ।
आविर्भूय प्रणतमुखराः कुंतला याज्ञसेन्याः
मामाकृष्य स्वगतिकथनैरानयन्त्यत्र सद्यः ॥

कथ्यताम् किमर्थं अहं स्मृतोऽस्मि ।

युधि०—हस्तिनापुरात् प्रत्यागतेन दूतेन अधुनैव संदेशः आनीतः । युद्धेन विना सुयोधनः अस्माकं राज्यं प्रत्यर्पितुम् नेच्छति ।

श्रीकृष्णः—तर्हि किं कर्तव्यम् अधुना ।

भीमः—योद्धव्यम् -किं अन्यत्, नान्यः उपायः विद्यते ।

युधि०—परं एकवारं पुनः संध्यर्थं प्रयत्नः कार्यः । अविचारतः किमपि न करणीयम् अस्माभिः

भीमः—युद्धेन विना नान्या गतिः । अस्माकं सर्वसंधिप्रयत्नाः विफलीभविष्यति ।

श्रीकृष्णः—महाराजः युधिष्ठिरः किं मन्यते ।

युधि०—भगवता श्रीकृष्णेन स्वयं एकवारं सामप्रयत्नः करणीयः इति मे मतिः ।

भीमः—एतत् सर्वं निष्फलं भविष्यति । बाल्यादेव अस्मान् नाशयितुं तेन विविधाः प्रयत्नाः कृताः । अन्यायेन अस्माकं राज्यलक्ष्मीः तेन अपहृता । अधुना सः अनीतिमान् अधमाधमः दुर्योधनः तां प्रत्यर्पितुम् कथं तत्परः भविष्यति । अपरंच, अस्माकम् दोर्दंडेषु कालं अपि जेतुं क्षमं बलं विद्यते । तर्हि दीनवत् एषा याचना किमर्थं क्रियते ।

श्रीकृष्णः—महाराजस्य आज्ञया अहं हस्तिनापुरं गन्तुं सन्नद्धोऽस्मि । परं, सर्वस्वनाशं प्रति अविचारतः गच्छन्तं पदं प्रतीपयितुं असंभवं अस्ति ।

युधि०—बांधवैः सह युद्धं न कस्यापि हिताय भवेत् । अतः यावत्शक्यं युद्धं अवरोद्धुं अस्माभिः उद्योगः कार्यः । देव ! पांडवाः पंचग्रामैः संतुष्टाः भविष्यन्ति । यदि सुयोधनः अर्धराज्यं दातुं नेच्छति तर्हि पंचग्रामाः तस्मै याचनीयाः ।

भीमः—किं पंचभिर्ग्रामैः संधिं कर्तुं इच्छति युधिष्ठिर-महाराजः 'तर्हि धिक् अस्माकम् बलम्-धिक् क्षत्रियत्वम्-हा ! हन्त !'

पुरा यद्बाहुभ्याममितनृपलक्ष्म्यो हि विजिताः
जरासंधो भग्नः खलनिशिचरास्ते विदलिताः ।
इमौ मे दोर्दंडौ बत विहतशक्तीव विपुलौ
सहेते निःशब्दं कथमहह मानावमथनम् ॥

अपि महाराजः कृष्णायाः मुक्तकेशान् न स्मरति ? परं अहं तु तत् विस्मर्तुं न शक्नोमि ! पुरा मत्कृता प्रतिज्ञा कदापि अन्यथा न भविष्यति । देवि द्रौपदि अहं अद्य पुनः प्रतिज्ञां करोमि ।

तं सानुजं कुरुपतिं समरे निहत्य
कृत्वोरुयुग्ममनया गदया च भग्नम् ।
दुःशासनस्य रुधिरेण तवालकांस्तान्
आलिप्य बंधनयुताननघे करोमि ॥

द्रौपदी:—समाश्वसितु नाथः । जानामि यत् भवता स्वप्रतिज्ञा अवश्यं पूरिता भवेत् । अरिरुधिरेण मे केशाः अवश्यं संयमिता भविष्यन्ति । (श्रीकृष्णं प्रति) प्रियभ्रातर् महाराजस्य इच्छया भवान् हस्तिनापुरं सुखं गच्छतु । परं एते मे केशाः भवता कदापि विस्मृताः न भविष्यन्ति इति अहं आशासे ।

श्रीकृष्णः—प्रिय भगिनि ! चिन्तां मा कुरु । तवावमानना विस्मर्तुं न शक्या । महाराजस्य आज्ञया मया एकवारं संधिप्रयत्नः अवश्यं कार्यः । किन्तु जानामि सम्यक् दुर्योधनम् । अपि च पतंगः यथा अग्नि उपरि पतति तथा द्विजशापग्रस्तः स मूढमतिः युद्धाय अवश्यं सन्नद्धः भविष्यति । अपरं च शकुनिकर्णादयः तस्य दुर्मन्त्रिणः निज-दुर्मंत्रेण तं मृत्युमुखे अवश्यं पातयिष्यन्ति । प्रिय भीमसेन, शांतिं धारय । तव प्रतिज्ञा अवश्यं सफलीभविष्यति । तथापि महाराजस्य आज्ञया मया सामप्रयत्नः अवश्यं करणीयः । महाराज, के पंचग्रामाः याचनीयाः ?

युधि०—इन्द्रप्रस्थं वृकप्रस्थं जयंतं वारणावतं एतान् चतुरः ग्रामान्, कमपि च पंचमं ग्रामं भवान् यच्छतु इति सुयोधनाय भवता कथनीयम् ।

श्रीकृष्णः—तथा

युधि०—मातरं गांधारीं मातरं कुन्तीं पितामहं गुरुद्रोणं, तातं धृतराष्ट्रं तातं च विदुरं प्रति अस्माकं सर्वेषां प्रणामः प्रापयितव्यः ।

श्रीकृष्णः—अवश्यमेव । गच्छाम्यहम् ।

युधि०—शुभास्ते पंथानः ।

# भगवद्गीतायां अहिंसा-विचारः

[ ले० कृष्णलाल 'नादान' ]

रणभेरिनादो जायते । महता तुमुलेन अनुनाद्यन्त इव सर्वा दिशः । हन्त ! तत् कुरुक्षेत्रं तच्च भीषणं भारतं युद्धम् । एकतो धार्तराष्ट्राणामन्यतश्च पाण्डवानामवस्थिताः सन्ति सुसन्नद्धायुधा योद्धुकामा योधाः । अपरस्मिन्नेव मुहूर्ते बान्धवा अपि परस्परं शत्रवो भविष्यन्ति । दुनोति च मोहवशादर्जुनस्य चेतः— "अहो ! हिंसा ! घोरहिंसा !! पापम् !!! किंकरवाणि ? नाहं योत्स्ये ।" एवं च तत्र समुपस्थिते विषमे भगवता गीता गीतावाणी अर्जुनमुद्बोधयति, तं च कर्मणि नियोजयति । श्रूयते प्रतिपदमत्र गीतायाम्, "अर्जुन युद्धस्व । अर्जुन प्रहारं कुरु" इति । क्वायं युद्धोपदेशः क्व चेयं तपस्विनी अहिंसा । कथमत्राऽऽहिंसा भवेत् ? परन्तु एवं सत्यपि युद्धोपदेशे, अहिंसामूर्तेर्महात्मनो गान्धेर्गीता पथप्रदर्शिकाऽऽभूत् इति महद् इदमाश्चर्यम् । अन्योऽन्यविप्रतिपिद्धमेतत् प्रतिभाति ।

परमन्वीक्षणेन सुस्पष्टं गीतायामहिंसासम्पादनमालक्ष्यते । अस्ति खलु तत्र अहिंसाभिप्रायप्रभेदः । न तत्र तथा अहिंसा यथा जैनमतावलम्बिनो मन्यन्ते, यतो हि किंचिदपि कर्म कुर्वता, न जातु जीवहत्यामविधाय मनुष्येण शक्यते वर्तितुम् । श्वसति, चलति, खादति मनुष्ये, सर्वदा असंख्याका जीविनो म्रियन्ते । तन्न शक्यते रोद्धुं पट्टिकयाऽपि परिधाप्य मुखम् । न जातु मानवः क्षणमपि तिष्ठत्यकर्मकृत् । अतएव मनुष्येण कर्म कर्तव्यम्—योगः कर्मसु कौशलम् । स्वभावेन तत्र या जीवहिंसा स्यात् सा वर्ततां नाम । न सा यथार्थं हिंसा । अहिंसैव सा । हिंसा तु तदैव स्यात् यदि मनुष्यो निजसन्तोषाय एव, निजसुखायैव च अकारणमेव निर्दोषमन्यं जनं कष्टे निपात्य तं निहत्य वा यतेत । एष एव विचारो वेदब्राह्मणसूत्ररामायणप्रभृतिषु ग्रन्थेषूपलभ्यते ।

एतत्परिभाषानुसारेण अर्जुनेनापि हिंसा विहिता इतिचेन्न, यतो हि स्वधर्मानुचरणं तत्, सज्जनरक्षणं चैव । निस्वार्थेन मनुष्येण स्वकीयः स्वाभाविको धर्मोऽवश्यमेवाचरणीयः, कामं तत्र जीवनाशः स्यात् । उक्तमपि:—

"श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।"

सन्ति केचन अहिंसाप्रवर्तका महापुरुषा येषामियं मतिः यत् "यदि कश्चिदन्य एकस्मिन् कपोले चपेटिकाप्रहारं करोति, तर्हि अपरोऽपि कपोलस्तत्प्रहारार्थं दातव्यः ।" एते महानुभावा आत्मरक्षामपि हिंसाकोटिमारोपयन्ति । एषां मते दुष्टाः सज्जनान् पीडयन्तु नाम, अल्पसंख्याका एव दुराचारिणो निखिलं राष्ट्रं दूषयन्तु नाम, यत् किञ्चिदपि स्यात्, परन्तु ते राष्ट्रघातिनो न दण्डार्हा यतोहि कथमपि दण्डेन, शरीरेण, मनसा, वाचा वा दुर्निवारा हिंसा सम्पत्स्यते । अहिंसाव्रते च भङ्गो जनिष्यते । किन्तु गीतायां नैतादृशमहिंसादर्शनम् । अखिलराष्ट्रहिताय सज्जनहिताय च अल्पसंख्याकानामेव दुष्टानां नाशो हिंसापदं नैव प्राप्नोति । अतएव व्यभिचारिणोऽपकारिणः सद्भ्रातृद्रोहिणो धार्तराष्ट्रान् प्रति युद्धाय भगवता पार्थं उत्साहितः ।

# सरलीकरणं विकलीकरणं वा

[ ले० स्वामी लक्ष्मणशास्त्री, संस्कृतविद्यालयाध्यक्षः नागौर (राजस्थान) ]

साम्प्रतं भारतेऽत्र संस्कृतभाषायाः सरलीकरणाय विदुषां विविधा विचारास्तत्र तत्र पत्रेषु पत्रिकासु सभासु समितिषु च महानिशान्धतमसमिवातितरां प्रसेस्रीयमाणाः सर्वतोऽभिलक्ष्यन्ते।

केचन विद्वांसोऽस्याः संस्कृतभाषाया व्याकरणनियमान् सर्वानेव समूलमुन्मूलयितुमीहन्ते। अपरे च द्वित्रानेव विहाय शब्दानामखिलान् सन्धिनियमान् मूलतः समुच्छेदयितुमिच्छन्ति। अन्ये च व्याकरण-

---

गीतायां प्रस्तूयतेऽहिंसा ज्ञानिगुणेषु प्राधान्येन। तथा हि:—

"अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥" इति।

अत्रास्मिन् श्लोके ये केचन गुणाः प्रशस्तास्ते सर्वे अहिंसां प्रतिपादयन्ति, परिपोषयन्ति, संवर्धयन्ति च। हिंसोत्पादयितॄणां सर्वेषां विकाराणां गीतायां सुविहितमस्ति मनोवैज्ञानिकं विश्लेषणम्। गर्हिता तत्र प्रियाप्रियलाभालाभादिविवेकबुद्धिः, श्लाघिता च प्रतिपदं स्थिरा समाना धीः। "समत्वं योग उच्यते" इति। निषिद्धा तत्र विषयासक्तिर्बहुमतश्च कर्मफलत्यागः। यतो विषयासक्तिरेव जननी सर्वेषां मनोबुद्धिदेहजन्यविकाराणाम्। इयमेव पयस्विनी हिंसाकुलटायाः। तारका राक्षसी च अहिंसादेव्याः। विषयासक्ते सति मनुष्ये, तस्य जायते विषयेषु ईप्सा। अनया च कामो जायते प्रबलः। इदानीं च न चेत् प्राप्यते स विषयः, यतोहि विधिवशमेवाखिलं जगदिदं, तर्हि क्रोधः समुद्भवति, येन मोहान्धो मनुष्यः स्वाभीष्टं कथमपि प्राप्तुं प्रयतते। यत्सन्काशम् अपि तस्याभीष्टं किंचिद्वर्तते विच्छिद्य सर्वा बाधास्तं स निहन्ति, पीडयति, नाशयति च, स्वयमपि च परिणामतो बुद्धिनाशमापन्नः सर्वनाशमधिगच्छति। तथा चोक्तं भगवता:—

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते।
सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते॥
क्रोधाद्भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति॥

एवं ज्ञायते यदिन्द्रियाणां विषयेष्वासक्तिरेव मूलं सर्वनाशपरिणामस्य हिंसाविषद्रुमस्य। तदस्य मूलच्छेदनायैव गीतायाम् इन्द्रियवशित्वं तदर्थं च साम्ययोग एव कुठाराघात इवाभिमतः। प्रियाप्रिये चेत् समे स्याताम् मनुष्याणां, तर्हि प्रियाढ्या जनाः प्रियाणि अन्येषां भद्राय वितरेयुः, प्रियवस्तुशून्याश्च अन्येभ्यः प्रियाण्याहर्तुं हिंस्रवृत्तयो न स्युः। परस्परं च जायते विश्वबन्धुत्वभाव एकात्मभावश्च। उक्तमेव हि:—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥

इत्थं सर्वेषु एकात्मानुभूतौ सञ्जातायामन्योऽन्यस्य दुःखानि स्वकीयानीवानुभविष्यति, तत्परिहारार्थं च दत्तचित्तो भविष्यति। कथं तदा सम्भवो जुगुप्साया हिंसाया वा? क्व तत्र पारस्परिको विरोधः? गीतानुशासनेनैवं सर्वत्र अहिंसायाः साम्राज्यं शाश्वतिकी च शान्तिः सम्भाव्यते।

—

शास्त्रे नियतानां दशलकाराणां स्थाने केवलं त्रिचतुरान् पञ्चषान् वा लकारान् प्रयोक्तुं नितरामभिलषन्ति। पाश्चात्यपठनपाठनप्रणालिविमुग्धचेतसोऽन्ये केचन सुधारकरणविचक्षणा हिन्द्यादिदेशभाषाणामांग्लभाषादिविदेशभाषाणां शब्दान् किञ्चिन्मात्रेण परिवर्त्य ताश्च संस्कृतभाषायां सम्मिश्र्य शुद्धां संस्कृतभाषां सर्वथा विकलाङ्गीं कर्तुं वाञ्छन्ति। इतरे चाधुनिका विद्वांसः शब्दानां कारकसमासादिप्रकरणान् धातूनां च णिजन्तादिप्रकरणान् सर्वथा निरर्थकान् विघोष्य तान् व्याकरणतो बहिष्कर्तुं कृतत्वरा सन्ति। तेष्वेके च सिद्धान्तकौमुद्यादिकान् व्याकरणग्रन्थान् कठिनतमत्वादतिविस्तृतत्वाच्च वर्त्तमानसमयस्य सर्वथैवानुपयुक्तानुद्घोष्य तत्स्थाने सुगमातिसुगमामतिसंक्षिप्ततमां च काञ्चन नूतनामेव व्याकरणसरणिं निर्मातुं नितरामीहन्ते। तेष्वप्येके च व्याकरणं विनैव संस्कृतमध्येतुमधीतिनः समुत्साहयन्ति। केचनोदारमतयश्चाधुना संस्कृतभाषामिमां पठितानामपठितानां च सर्वेषामेव भारतनिवासिनां जनानां मातृभाषां कर्तुं वाञ्छन्ति।

एवं संस्कृतभाषायाः सरलीकरणाय तस्याः प्रचारविवर्धनाय चाधुना नैके विचारास्तत्र तत्र विद्वद्भिरुपन्यस्ता वर्त्तन्ते। ते विचारा मामप्यत्र विषये किञ्चिद् वक्तुं मुखरीकुर्वन्ति।

यदियं संस्कृतभाषा विशेषतो विदुषामेवास्ति। यतस्त एवैनां शुद्धतयोच्चारयितुं परिपालयितुं च शक्नुवन्ति। संस्कृतभाषायां त्वेकैकस्य वस्तुनो नैके शब्दा एकैकस्य शब्दस्य नैकेऽर्थाः शब्दार्थवाक्यादीनां विविधाः प्रयोगाश्च विद्यन्ते। पदे पदे वाक्ये वाक्ये च शब्दानां धातूनां च विभिन्नानि रूपाणि भवन्ति। कथंकारमपठिताः साधारणजनास्तां संस्कृतभाषामनायासेन वक्तुमवबोद्धुं च प्रभवेयुः।

सत्यप्येवम्, बलाद् हठाद् वा यदि ते साम्प्रतिकाः सुधारकरणैकपक्षपातिनः संस्कृतभाषामिमां पठितानामपठितानां च सर्वेषामेव मातृभाषां कर्त्तुं प्रयतिष्यन्ते, तदेयं संस्कृतभाषा परवशेव सर्वैरेव जनैः साधारणतया निर्गलं यथेष्टं वा सततं प्रयुज्यमाना स्वल्पेनैव कालेन स्वस्य स्वाभाविकं सुस्वरूपं सौष्ठवं स्वारस्यं च सहसैव विहायान्यभाषावत् स्वस्य वैरूप्यं, वैरस्यं, नामान्तरं प्राप्स्यति। न तया भाषया चेतः पूर्वं विद्यमानं सर्वत्र प्रसृतं च संस्कृतभाषाया नानाविधं साहित्यमवबोद्धुमवबोधयितुं च कोऽपि प्रभविष्यति। न चेयं विकृता भाषा पूर्ववत् संस्कृतानुरागिणोऽनुरञ्जयितुं शक्ष्यति। पुनरपि यत्केचनैनां संस्कृतभाषामतिकठिनां मन्वते, तदपि सर्वथा न संगच्छते। यतोऽसौ संस्कृतभाषा शिरीषपुष्पादतिकोमला, वज्रादप्यतिकठिना चास्ति।

अस्याः सौगम्यं दौर्गम्यं वा केवलं प्रयोक्तुर्वैदग्ध्याधीनमेव खल्वस्ति। प्रयोक्तुर्वैदग्ध्येनैवास्यां संस्कृत भाषायां सरलातिसरलानि वाङ्मुखादीनि, कठिनातिकठिनानि महाकाव्यादीनि च यथेष्टं निर्मातुं शक्यानि।

उदाहरणरूपेणावलोक्यताम्।

पुरातनेषु श्रीवाल्मीकीयरामायणादिषु पुराणादिषु च कियदस्या भाषायाः सारल्यमुपलभ्यते, यां साधारणविद्वांसोऽप्यनायासेन विज्ञातुम्प्रभवन्ति। पुनस्तेष्वेव पुरातनेषु न्यायवैशेषिकादिषु षड्दर्शनेषु महाभाष्यादिषु च कियदस्याः संस्कृतभाषायाः काठिन्यमुपलक्ष्यते। यां महान्तोऽपि विद्वांसस्तत्वतोऽवगन्तुं न पारयेयुः।

# अधुनापि भारते राष्ट्रियताया अभावः

## स्वातंत्र्यदिवसस्यावसरे विचारः

[ ले० जे० एन० श्रीमाली, शास्त्री, 'साहित्यरत्न' ]

स्वातन्त्र्यप्राप्तेरस्माकमयं नवमो वर्षः। निश्चितमेवास्माभिः अस्माकं सर्वकारेण च देशस्य विकासदिशायां साफल्याय समयेऽस्मिन् प्रभूतं प्रयतितम्। प्रथमद्वितीयपंचवर्षीयायोजनमवलम्ब्य अन्नजलविद्युत्कृपियातायातोत्पादनशिक्षादिषु प्रचुरप्रचारप्रसारादिरूपेण दृश्यते एव सफलता। समाप्ता राजानो भूस्वामिनः (जागीरदाराः), तेषां च दीनहीनेषु बर्बरता। विदेशेष्वपि चास्माकं प्रधानमंत्रिणः श्रीजवाहरलालस्य प्रभावात् प्रभूतादरो दृश्यतेऽस्माकं भारतदेशः। तथापि सखेदं निवेद्यते यद् वयं भारतीया अधुनापि नैव वर्तामहे आदर्शस्वतन्त्रनागरिकाः। अधुनापि दृश्यते भारतीयेषु राष्ट्रियतायाः अभावः।

'अहं भारतीयः, भारतश्च ममात्मनो देशः। मम सर्वस्वं भारताधीनं, भारतस्य च सर्वं वस्तुजातं बहुमूल्यमल्पमूल्यं वा ममैव नान्यस्य कस्यचन, यथा वयम् आत्मनो निकृष्टमुपयोगानर्हमपि पदार्थं रक्षामः तथैव राष्ट्रसम्पत्तिरपि स्वकीयेति मत्वाऽस्माभिः रक्षणीया।' चेद् यद्येतादृशो भावोऽस्मासु सर्वेषु तर्हि कथं प्रतिदिनमन्यान्यनगरेषु दृष्टिपथमागच्छेयुर्जनधनध्वंसकोपद्रवाऽनलाः। मोहमयी(बम्बई)नगरे यत्किंचिज्जातं तत्कस्य स्वाभिमानिनो देशभक्तस्य हृदयं न विदारयति ? कचिच्छुरिकाप्रहारः, कचिद्यष्टिकाघातः, कचिद्गुटिकाज्वालाः, कचित्सम्पत्तिदाहः कचिच्च नारीणां सम्मानापहरणप्रयासाः, सा एव स्थितिरापतिता यथा नव दशवर्षपूर्वं भारतांगभंगकाले सिन्धु-पंचनद-बंगादिप्रदेशेषु दृश्यते स्म। उन्मत्ता महाराष्ट्रीया अन्यप्रदेशीयान् तेषां सम्पत्तिं च इत्थं विनाशयन्ति स्म यथा ते अभारतीया विदेशीया वा आसन्। राजकीयसम्पत्तिध्वंसकालेऽपि न चिन्तितं केनापि यत्ते किं कुर्वन्ति स्म ? किं राजकीया सम्पत्तिर्विदेशीयानां सम्पत्तिरासीत् ? सत्यपि सर्वकारस्य दोषे राजकीया सम्पत्तिः राष्ट्रसम्पत्तिरस्तीति मत्वा रक्षणीया भवति। एतत् समाजदेशद्रोहिजघन्यापराधं कृत्वा न केवलमात्मनः प्रत्युत हिन्दुधर्मध्वजोद्धारकस्य महाराजशिवराजस्य जगद्गुरोर्भारतस्यापि मुखे मसी प्रक्षिप्ता।

यदि प्रतिष्ठिता आदरणीया विद्वांसो लोकसभासदस्या नेतारोऽपि 'बम्बई-निर्णयो बम्बई-वीथिकासु भविष्यति' सदृशीमपूतां गिरमुद्गिरन्ति तर्हि अपठितेषु असभ्योपद्रविदलेषु दोषारोपणं व्यर्थमेव प्रतिभाति। तदनन्तरं तानेव समर्थयन्तः श्रीयुतचिन्तामणिदेशमुखसदृशा योग्याः भारतीयजनजीवनाशावलम्बभूताः

---

वस्तुतः संस्कृतभाषाया व्याकरणमेव जीवनमस्ति। अतो व्याकरणनियमानामुच्छेदः परिवर्त्तनं वा न तस्याः सरलीकरणाय विशेषप्रसाराय वा समुचितः पन्थाः। पठतां कृते कक्षाक्रमेण सरलातिसरलानां पाठ्यपुस्तकानां निर्माणमेव केवलं संस्कृतभाषाया विशेषप्रचाराय श्लाघ्य उपायः।

अवशिष्टमुपरिष्टात् कदापि वक्ष्यते।

—

देशभक्तमन्त्रिणोऽपि प्रदेशस्यैकस्य कृते सम्पूर्णभारतदेशतरीमर्थसंकटावर्ते निपात्य पलायन्ते चेदन्येषां का कथा ? नाहं बम्बईनगरस्य महाराष्ट्रे विलयनस्य विरोधी तथापि तेषां तत्कृते कृतः आग्रहो हिंसात्मकत्वास्सत्यपि सत्ये दुराग्रहो जातः । अतएवैतस्य समर्थनं हिंसाया राष्ट्रस्यैकतायामविश्वासस्य वा समर्थनमिति मन्ये ।

अथान्यत्र वयं पंचनदप्रदेशं पश्यामः । विभाजनानन्तरमवशिष्टोऽयमर्धोऽपि प्रदेशः, 'क्षेत्रीयफार्मूलारूपेण' एनं पुनर्विभक्तुं प्रयततेऽस्माकं सर्वकारः ।एतदपि राष्ट्रहितं गर्ते निपात्य जातिहितं ब्यक्तिहितं वा साधयितुं भविष्यति । मास्टरतारासिंहो न जाने केन चक्षुषा 'सिखानां हितानि असुरक्षितानि' पश्यति ?

हिन्दुराष्ट्रधर्मसम्मानरक्षायै त्यक्तक्षौरादिसर्वसांसारिकस्वार्थकर्माणो हिन्दुराष्ट्ररक्षाव्रतिनो हिन्दुशिष्याः (सिक्खाः) अद्यात्मनोऽहिन्दून्मन्यन्ते । तेषां मनसि अद्य हिंदुभ्यः 'सिक्खधर्मसंस्कृतिविनाशस्य' आशङ्का प्रादुर्भूता । तेभ्यो हिंदुभ्यो, ये भारतमातुर्वक्षोविदारकान् सद्यश्छिन्नायास्तस्याः कवोष्णशोणितारक्तहस्तान् पंचकोटिमौहम्मदान् स्ववक्षसि संस्थाप्य धारयन्ति । यैः स्वयं निराहारैर्निगृहैर्निर्वस्त्रैरप्युषित्वा तेभ्यो गृहाहारवस्त्राणि दीयन्ते । तेषां व्यापारे क्षतिमकुर्वन्तः सन्तो रामकृष्णभूमौ भारत- वर्षेऽत्र गोहिंसनं सहन्ते । ये शतशः सहस्रश्च श्रीकृष्णस्य मुखपद्मविनिःसृतांगीतां श्रुत्वाऽपि 'नष्टो मोहः स्मृतिर्लब्धे' त्यनवोच्य सर्वदा 'धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत्' इत्येव मुहुर्मुहुः रटन्ति । ते हिंदव. सिखान् मारयिष्यन्ति ? मास्टरतारासिंहस्य मातृसमाः शतशो हिन्दुमातरः प्रतिवर्षं शतशः स्वपुत्रान् गुरोः श्रीनानकदेवस्य चरणयोः शिष्यरूपेण समर्पयन्ति । राष्ट्ररक्षायै अन्नधनदानेन सह हिन्दुमातृणामेतत् 'पुत्रदानम्' (काममधुनैषा धार्मिकरूढिरेव स्यात्) हिंदु-सिक्खेतिहासस्य अनुच्छेद्या शृंखला विद्यते । अनेन ज्ञायते यत्पुरा मुगलराज्यकाले हिन्दुमातरो राष्ट्रधर्मरक्षणाय स्वेच्छया स्वपुत्रेषु एकतमं शिष्यरूपेण राष्ट्रपुरुषस्य चरणयोः समर्पयन्ति स्म । यस्मिन् सिक्खसमाजवृक्षे कैश्चित्स्वार्थान्धैर्विषसेकः ।क्रियते, स वृक्षो हिंदुभिः स्वशोणितदानेन आरोपितो वर्धितो रक्षितश्च, एनं हिन्दवश्छेत्स्यन्ति ? नातः परमसत्यं पापं देशद्रोहिता च भवितुमर्हति ।

एवमेव राज्यपुनर्घटनामवलम्ब्य प्रायशः समग्रदेशे उपद्रवा अभूवन् । ते अस्मासु राष्ट्रैक्यभावस्य न्यूनतामेव प्रकटयन्ति । फर्रुखाबादे मुस्लिमजमात-सम्मेलने यत्किंचित्समाचारपत्रेषु दृष्टं तेन सुस्पष्टं सिद्ध्यति यद् दुर्दैवात् कोटिशो भारतीया अधुनापि भारते भारतीयैकताया मूलभूतस्थानेषु तेषां विश्वासेषु मान्यतासु भारतीयजनधर्मसंस्कृतिषु असाम्प्रदायिकजनतन्त्रव्यवस्थासु च न श्रद्धां धारयन्ति इति । यत्र कुत्रापि सामाजिककार्यादिषु वास्तविकतापेक्षया प्रवंचनां प्रदर्शनं च वयमधिकाधिकं पश्यामः, सर्वेषु कार्येषु स्वार्थसाधने एव रता वयं देशस्य सहस्ररूप्यकानपि विनाश्य रूप्यकस्यैकस्य स्वलाभं स्वीकुर्मः । अतएव निर्माणादिकार्येषु व्ययानुरूपा सफलता नावलोक्यते । यदि सत्यमेव राष्ट्रहितधिया व्ययानुरूपं कार्यं भवेत्तर्हि निश्चितमेव देशोऽयमल्पकाल एव संसारस्य समृद्धदेशेषु स्थानमाप्तुं शक्नोति । अथ च भारतवर्षे भारतीयेषु सपद्येव सम्प्रदायवादप्रान्तीयवादहीना प्रबलराष्ट्रियता नोदयते चेदेतस्य दुष्फलम् अकथनीयं भवेत् ।

---

# श्रीभारविः

( ले० कविभूषण-कविताप्रवीण-शतावधानि-ज्योतिर्विद्याविशारद-ज्वालापतिलिङ्गशास्त्री, ईमनि [आन्ध्र] )

श्रीकालिदासभवभूति कविद्वयस्य
मध्ये भवल्ललितपीठमलं करोमि ।
यस्मात्तदीयमधुरं भवता परार्थं
काव्ये गृहीतमिति गौरवमन्यलभ्यम् ॥ १

व्यासस्य भारतकथामृतसिंधुजात-
काकोलमूर्छितसुयोधनकीर्तिकान्ता ।
श्रीभारवेर्मधुवचोमृतसेचनेन
लब्ध्वा स्मृतिं मधुरभावगुणैर्विभाति ॥ २

या द्रौपदीवागधुनापि स्त्रीणां स्वेच्छाप्रवृत्तिं विहितां प्रदत्ते ।
शास्त्रीयधर्मस्सदनिन्द्यभाषा संदृश्यते स्त्रीनयरक्षणाय ॥ ३

यावद्वपुर्घनबलं तु वृकोदरस्य
तावद्वचोघनबलं प्रतिभाति काव्ये ।
यन्नीतिदं च कठिनं मधुरं हितं च
तद्धर्मजस्य हृदयप्रियमातनोति ॥ ४

व्यासस्य प्रियतार्जुनतपश्शक्तिः किरातकृते-
श्शम्भोर्भक्तजनेषु दानगरिमा तावत्प्रशंसावचः ।
अस्त्राणां महिमा शिवस्य च मनश्शक्तिर्गिरेर्वैभवं
काव्ये भान्ति समग्रदर्शकजनेहामुत्र सौख्यप्रदे ॥५

निसर्गदुर्बोधपदार्थगौरवं रसानुभूतिं मनसः प्रदास्यति ।
अनन्यभावे निकषोपले मणेः प्रकर्षणेनोद्गमति स्वभान्तरात्
॥६

विचित्रवृत्तं सुमहार्थकल्पितं रसप्रपूर्णं नरशंकरात्मकम ।
अवक्रघण्टापथगम्यसन्निधि स्वकाव्यकूपं प्रतिभाति
भारवेः ॥७

ब्रह्माण्डोभयमार्गवर्तनवशान्नित्यं बभौ भारवेः
लोकस्योभयमार्गदर्शनवशाद्विद्वद्बभौ भारवेः ।
तस्माद्द्वौ जगतं मनस्सु सततं स्तुत्यौ कृतिम्सत्कृतिः
भूयादित्यनुचिन्त्य लोकयुगसाहित्यात्मसंसिद्धये ॥८

ब्रह्मैकात्मनिसर्गसर्गमकरोल्लक्ष्मीं तथैकामपि
किं चित्रं क्व च तत्र नास्ति हि महान् श्रीभारविस्त्वेकदा ।
किंत्वष्टादशधा विशिष्टगुणसर्गाश्चापि लक्ष्मीस्स्वयं
कृत्वा लोकममोहयच्छ्रुतिपथाक्रान्तस्फुरद्भाषया ॥ ९

नवनवयुगभास्वत्सर्गसर्गादयशक्तिः
परिपरिकृतनिन्दादोषदोषार्कबिम्बः ।
कृतिकृतिसदलङ्कारकारोपपत्तिः
गुणिगुणितमहार्थप्राप्तभास्वद्यशश्श्रीः ॥ १०

एकानेकसवर्णतुल्ययमकोद्यत्सत्पदालंकृतिः
नानाचित्रविचित्रवर्णितकथाकल्पोज्ज्वलालंकृतिः ।
भाषाबन्धुरबन्धुतापरिचयार्थव्यंग्यभावध्वनि-
स्रोतः प्रोतसमानयानकृतिजाग्रत्कर्णधारी महान् ॥ ११

मधुरसालरसालफलोपमा, समधुरा मधुराक्षरवैखरी ।
श्रुतिहिताऽतिहिता विलसत्कृतिः, गुणवता नवता
कृतसत्कृतिः ॥१२

---

# कालिदास-समये चित्रकला

प्राध्यापकः साधुरामः

कविकुल-गुरु-कालिदासस्य कृतिष्वनेकानि प्रमाणा-न्युपलभ्यन्ते यैर्ज्ञायते यच्चित्र-कलाऽतीव समुन्नतिं गता, सर्वजन-प्रिया चासीत् । 'प्रतिकृतिः', 'सादृश्यम्', 'आलेख्यं', चैते शब्दाश् 'चित्र'-शब्दस्य पर्याया एव दृश्यन्ते प्रयोगे ।

काव्य-नाटकेषु परस्परं विरहितौ प्रेमिणौ, नायिका-नायकौ वा वियुक्तस्य प्रिय-जनस्य चित्रम् एव लिखित्वा विरह-व्यथाम् अपनोदयतः । 'मेघदूते' यक्षेण विधुरा स्वपत्नी पत्युर्विरह-जं कार्श्यम् अदृष्ट्वाऽपि "मत्सा-दृश्यं भाव-गम्यं लिखन्ती" ति संभाव्यते । असावपि "प्रणय-कुपितां" तां धातुरागैः शिलायाम् आलिख्य यावच्चरण-पतितम् आत्मानं लिखितुम् इच्छति तावत् प्रवृद्धै रश्रुभिस्तस्य दृष्टिरालुप्यते । 'विक्रमोर्वशीये'ऽपि राजा "प्रियाया आलेख्येऽसमाप्त एव नयने मे बाष्पे-णोपरुत्स्येते" इति परिदेवयते । अन्यत्र, वासन्ती-लताभूता महाराजेनालिङ्गित-मात्रैव प्रकृति-स्था संवृत्ता उर्वशी "मां नवेन सकामुकाभिनव-चित्र-शोभिना पयो-मुचा वसतिं नय" इति राज्ञा प्रार्थ्यते । 'मालविकाग्नि-मित्रे' "यावच्चित्र-शालां गता देवी प्रत्यग्र-वर्णरागां चित्रलेखाम् आचार्यस्यावलोकयन्ती तिष्ठति" तावत् सहसा प्रविष्टेन राज्ञा चित्र-गताया देव्याः परिजन-मध्यगता मालविका दृष्टा ।

'शाकुन्तले', राजा विदूषकं ब्रूते, "माढव्य, अन-वाप्त-चक्षुःफलोऽसि येन त्वया धात्रा 'चित्रे निवेश्य परिकल्पितसत्व-योगा' ऋषि-कन्यका न दृष्टा । अन्यत्र, शकुन्तलायाः पतिगृह-प्रस्थानकाले तस्याः सख्यौ अनुपयुक्त-भूषणत्वात् चित्र-परिचयेनैव तच्छरीर आभरण-विनियोगं कुरुतः । तदनु षष्ठेऽङ्के चतुरिकया आनीतं स्वहस्त-लिखितं शकुन्तलायाश्चित्रं दृष्ट्वा तत्रार्ध-लिखितं विनोद-स्थानम् अवलोक्य चतुरिकया पुनर्गत्वा आनीतया वर्तिकया राजा "स्रोतोवहां मालिनी गौरी-गुरोः पावनान् पादान्, कृष्णमृगस्य शृङ्गे वाम-नयनं कण्डूयमानां मृगीं च निर्मातुम्" इच्छति । तथा च 'कुमारसम्भवे,' "अस्त-शिखरं गते रवेर्वपुषि" हरः पार्वतीं "रक्त-पीत-कपिश-कोटीन् पयोमुचो" दर्शयन्नाह, "अये कुटिल-केशि ! एषां पयोमुचां कोटयोऽनया संध्यया वर्तिकाभिरिव साधु मण्डिताः" प्रतिभान्ति ।

एभिः प्रमाणैर्ज्ञायते यन्न केवम् एकस्यैव जनस्य, किन्तु जनसमुदायस्यापि प्रतिकृतय आलिख्यन्ते स्म । अग्निमित्रेण मालविका देव्याः परिजन-मध्यगता दृष्टा, न त्वेकाकिनी आलिखिता । विदूषकोऽपि दुष्यन्तलिखिते चित्रे तिस्रो दर्शनीया युवतीरवलोक्य अभिज्ञान-विमूढः

---

तस्मादेव सर्वत्र अशान्तिः, सर्वत्र असन्तोषः, सर्वत्र दुःखम् सर्वदा कष्टम्, एवं तृष्णाया लिप्सायाश्च साम्रा-ज्यम् अस्ति ।

सारांशोऽयं यत् यदि जनाः सुखिनो भूत्वा निवासं कर्तुमिच्छन्ति तर्हि ते स्वावश्यकवस्तूनां त्यागं कुर्युः यावत्परिमाणे आवश्यकताः न्यूनाः भविष्यन्ति, तावत् परिमाणे सुखं शान्तिश्च भविष्यतीति मे सम्मतिः ।

---

सन् पुनर्निपुणं निर्वर्ण्य "शिथिल-केशबन्धोद्वान्त-कुसुमेन केशान्तेन, उद्भिन्नस्वेदबिन्दुना वदनेन, विशेषतोऽपसृताभ्यां बाहुभ्याम् अवसेक-स्निग्ध-तरुणपल्लवस्य चूत-पादपस्य पार्श्वे ईषत्-परिश्रान्ताम् इव लिखितां शकुन्तलां" संवित्ते। चित्राणां पश्चाद्भूमौ पशु-पक्षि-विहार-रमणीयानि, तरु-लता-विलास-मनोहराणि, कुश-कुन्द-विकास-कमनीयानि, गिरि-सरिद्-उल्लास-लोभनीयानि प्रकृतेरद्भुतानि दृश्यान्यपि समुज्जम्भ्यन्ते स्म।

सर्व एव जनश् चित्रालेखने निपुणो बभूव। यतस्तल्लिखितानि चित्राण्यनितरां सादृश्य-भाञ्जि अभूवन्। तानि तु बहुधा निरूपयतां जनानां विभ्रम-कारीणि संजातानि। राजा दुष्यन्तः स्वहस्त-लिखित एव शकुन्तलाचित्रे जात-संमोहो यावत् प्रियाया बिम्बाधरं स्पृशन्तं भ्रमरं कमलोदर-बन्धनस्थं चिकीर्षति तावद् विदूषकस्य पुरोभागितया "चित्रं खल्वेतद्" इति स्मारितोऽसौ विनष्ट-दर्शनसुखानुभवो बाष्पं विहरति।

एभिर्विवरणैश्चित्रकलायाः प्रौढिमाऽनुमीयते। चित्रेषु परिश्रमस्वेदोद्भेदादि-शरीर-विकाराः प्रणय-कोपादि-भाव-विकाराश्चातीव कौशलेन संदर्शिता बभूवुः इति एतेन चित्रकाराणां निरीक्षणसौक्ष्म्यं मनोविज्ञानाभिज्ञत्वं चानुमीयते।

भित्ति-चित्रम् अन्तरेणापि कालिदास-कृतिषु प्रमाण-बाहुल्यम् अस्ति। ख्रिष्टपूर्वे शताब्द-द्वये भित्तिचित्र-कलायाः प्रचारो भारते समवर्ततेति अजन्तागुहा-चित्रेभ्यः परिज्ञायते। कालिदाससमयेऽपि कलेयं लोक-रूढा जनमनोरञ्जिनी च बभूव। अलकायाः प्रासादा बहिर्भित्तिषु इन्द्रचाप-वर्णपट्टैश् चित्रिताः सचित्राः सन्तः सेन्द्र-चापं मेघं तुलयितुम् अलं बभूवुः। "यत्र-

वस्य घातमात्रमेव नास्ति हिंसा। धर्मदृष्ट्या तु यदि केनचिन्मनुष्येणाऽज्ञातावस्थायां कस्यचिज्जीवस्य घातो भवति ततोऽपि स हिंसको न भवति। यतः मनसि तु कस्यचिज्जीवस्य घातस्य भावना नासीत्। यदि च कस्यचित्पुरुषस्य हृदये जीवघातस्य भावा. सन्ति, किंतु कारणवशात्स तस्य जीवस्य प्राणघातं कर्तुं समर्थो न भवति, एतादृश्यामवस्थायामपि स हिंसको भविष्यति। श्री "उमास्वामी" अस्मिन् विषये प्रकाशं कुर्वन्नाह—"प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा"। "अनागारधर्मामृत" नामधेयग्रन्थेऽप्यस्योल्लेखोऽस्ति—

सा हिंसा व्यपरोप्यन्ते यत् त्रसस्थावरांगिनाम्!
प्रमत्तयोगतः प्राणा द्रव्यभावस्वभावकाः॥

अनेन प्रकारेण हिंसायाः वर्णने सति अहिंसायाः ज्ञानं स्वयमेव भवति। "न हिंसेति अहिंसा" अर्थात् हिंसायाः मनसा वाचा कर्मणा सर्वथा परित्यागोऽहिंसा।

अस्माकं प्राचीनधर्माचार्याः संसारे समस्तपापानां मूलं गृहञ्च केवलं हिंसामेव मन्यन्ते। अर्थात् संसारे नास्ति हिंसातिरिक्तमन्यत् प्रवृद्धतरं पापम्। सर्वेषां पापानां मूलं हिंसैवास्ति। अनेन महापापेनात्मरक्षायै मानवेन सदैव सतर्कतया स्वकार्यं कर्त्तव्यम्। तेन स्वसात्विकजीवननिर्वाहार्थमेतादृशानि साधनानि आश्रयणीयानि यैः स्वाज्ञानेऽपि कस्यचिज्जीवस्य लेशमात्रमपि कष्टं न भवेत्। केवलमित्थं करणादेव मनुष्यः स्वजीवने पूर्णरूपेणाऽहिंसामाधातुं नार्हति। एतदर्थं तु तेन स्वाभाविको गुणः क्षमाऽपि प्रयोक्तव्या। यतः क्षमारहिताऽहिंसा प्राणहीनशरीरमिवास्ति। यथार्थे अहिंसायाः प्राणाः क्षमा एवास्ति। महाभारते क्षमाया महत्वमाह—

अहिंसा परमो धर्मस्तथाऽहिंसापरोदयः।
अहिंसा परमं दानमहिंसा परमं तपः॥

# आडम्बर-रहित-जीवने एव सुखं शान्तिश्च सन्निहिता

(ले० श्रीधरप्रसाद पतः 'सुधांशुः' साहित्यशास्त्री १ वर्षम्, "विशारदः" श्री दु० संस्कृत कालेज, पीलीभीत [उ.प्र.])

साम्प्रतम्प्रायः सर्वतः दुःखम्, कष्टम्, एवम् अशान्तिश्च दृष्टिगोचरा भवन्ति। सर्वेजना अशान्तेः भीषण-ज्वालायां दह्यन्ते। केनापि अस्य मूलं कारणं ज्ञातुं न कष्टम् कृतम्। आगच्छन्तु, अद्यास्य मूलतत्वं ज्ञात्वा समयस्य सदुपयोगं कुर्मः।

वस्तुतः यदि भवान् सुखिजीवनं व्यतीतं कर्तुमिच्छति तर्हि सरलतां ( सादगी ) स्वीकरोतु। सरलतायामेव सुखस्य निवासोऽस्ति,आडम्बरयुक्तजीवने कदाऽपि सुखं शान्तिश्च न भवति।

अद्यतनः समाजः आडम्बरपूर्णः एवं स्वार्थी चास्ति। मनुष्याणां तृष्णा अनुदिनं वृद्धिङ्गताऽस्ति। यदाऽस्माकं तृष्णापूर्तिर्न भवति। तदा वयं सर्वत्रैव कष्टस्य दुःखस्य चानुभूतिं कुर्मः। अनेकानेकानि निन्दितकार्याणि कृत्वापि स्वलिप्सापूर्तिं कर्तुमिच्छामः, येन इह लोके तु कथं लोकान्तरेऽपि शान्तिर्न भवति।

जीवनं सुखमयं एवं शान्तिमयं निर्मातुं सर्वप्रथमं परमसन्तोषस्यावश्यकताऽस्ति। सन्तोषः एतादृक् अनुपमं वस्तु विद्यते येन जीवनं स्वर्गतुल्यम्भवितुमर्हति। सन्तोषस्य वर्णनं कुर्वता प्रकृतिपुरोहितेन महाकविना भर्तृहरिणा उक्तम्--

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते,
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति।
कन्दैः फलैर्मुनिवराः क्षपयन्ति कालम्,
सन्तोष एव पुरुषस्य परं निधानम्॥

अतोऽस्माभिः सन्तोषधारणं कृत्वा जीवनं सुखि कर्तव्यम्। चित्तं अभ्यासेन स्वाधीनं कृत्वा तृष्णा-पराजयः कार्यः। तदैव जीवने वास्तविकशान्तिः प्राप्ता भविष्यति।

उक्तं च--

वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः
सम इह परितोषो निर्विशेषो विशेषः।
स हि भवति दरिद्रो यस्य तृष्णा विशाला,
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः॥

अतः स्पष्टमस्ति यत् मनसैव मनुष्यः धनवान् एवं दरिद्रीभवति। अतएव योगेश्वरश्रीकृष्णस्य आज्ञानुसारम् "अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते" स्वचित्तं स्वाधीनं कर्तव्यम्। अन्यथा चञ्चलचित्तेन सुखानुभूतिः सर्वथा असम्भवाऽस्ति।

भारतीयदर्शनशास्त्रस्य अध्ययनेन ज्ञातमभवत् यत् प्राचीनसमये ऋषिमुनिवर्गाः परमसन्तोषिणः एवं वशिनश्चासन्, ते संसारस्य समस्तेभ्यो भोगेभ्यो निःस्पृहाः सन्तः भोगमकुर्वन्। तदैव तेषां जीवनं परमसुखमयञ्चासीत्।

जीवनं सुखमयं निर्मातुं सर्वे उपायाः दर्शनेषु सन्निहिताः सन्ति। किन्तु अधुना ज्ञानलवदुर्विदग्धाः पुरुषाः तद् ज्ञानं न जानन्ति। अथवा ज्ञात्वा अपि कार्यरूपे परिणतं न कुर्वन्ति।

# अहिंसा

( ले० राजकुमारो जैनः "भारिल्लः" दर्शनोपाध्यायः )

अहिंसा तदमोघास्त्रमस्ति यद्बृहल्लघुसबलनिर्बल-समृद्धदीनास्तिकनास्तिकाश्च सर्वे प्राणिगणा लब्ध्वाऽनेन भयंकरातिभयंकरापत्तावपि शत्रुं पराजितं कृत्वा विजयलक्ष्म्याः पाणिग्रहणं कर्तुमर्हन्ति ।

मानवस्य स्वाभाविकगुणोऽस्ति मानवता । गुणविशिष्टेनानेनैवाद्य प्राणिवर्गे मानवः ईदृश उन्नतोत्कृष्टश्चास्ति । अहिंसा मानवतायाः तदंशोऽस्ति, यत् पृथक्करणेन मानवस्य मानवतेति गुणो नश्यति । दानवतायाञ्च परिणतो भवति । तथा मनुष्यः मानवभूतोऽपि दानवः भवति । अनेनेदं स्वयं ज्ञातं भवति यन्मानवजीवनेऽहिंसा कीदृशमुत्कृष्टं एवं ग्राह्यं वस्त्वस्ति ।

मानवः स्वजीवनं प्रायः भागद्वये विभक्तं करोति । प्रथमे तु राजनीत्यां परतश्च धर्मे । राजनीतिः धर्मश्च मानवजीवनस्य द्वे सशक्ते चक्रे स्तः । अभ्यां चक्राभ्यां विना जीवनचक्रिकायाः स्वनिश्चितलक्ष्यपर्यन्तं गमनमसम्भवमस्ति । एका वार्ताऽवश्यमेवास्ति यदाधुनिकेऽस्मिन् प्रगतिवादिनि वैज्ञानिके युगे मानवजीवनस्याधिकांशो भारो राजनैतिके चक्रे एव हि भवति । अर्थात् मानवजीवनस्याधिकः समयः धर्मापेक्षया राजनैतिके क्षेत्रे एव व्यतीतो भवति ।

धर्म एवं राजनीतिः द्वावपि मानवजीवनस्य द्वौ हस्तस्वरूपौ द्वे आवश्यकप्रधानांगे स्तः । तथापि द्वयोरेतादृशी विषमताऽस्ति यादृशी सर्पनकुलयोस्तथा मार्जारमूषकयोः । येन प्रकारेण एकस्मिन् खड्गगृहे द्वौ खड्गौ स्थातुं न समर्थौ स्तः । तेनैव प्रकारेण एकस्मिन्नेव स्थाने धर्मस्य राजनीत्याश्च निवासोऽसम्भवोऽस्ति । किंतु प्राणिमात्रस्यायं स्वभाविको गुणोऽस्ति यत्स प्राणी स्वस्मिन् परस्परप्रतिद्वन्द्विनां गुणानामप्याश्रयं ददाति । इदमेव कारणमस्ति यदद्य परस्परप्रतिद्वन्द्वी धर्मो राजनीतिश्च न केवलं मानवमात्रस्यापितु प्राणिमात्रस्य द्वे प्रधानांगे स्तः । यतः द्वाभ्यामाभ्यामेव हि मानवः स्वस्यैहलौकिकं पारलौकिकं च ध्येयं पूर्णं कर्तुमर्हति । अनयोर्द्वयोर्लक्ष्ये पृथक् पृथक् स्तः । यया वार्तायाः राजनीत्यां समर्थनं भवति, तां वार्ता धर्मः खण्डयति । तथा या वार्ता धर्मे ग्राह्या भवति, सैव वार्ता राजनीत्यां त्याज्या भवति । किंत्वहिंसा एकमेतादृशं वस्त्वस्ति यद् द्वयोरपि सादरमुपादेयं भवति । अस्यातिमहान्त्युदाहरणानि अद्याप्यस्मान् सम्बोधयन्ति कथयन्ति च—यदपि वस्तु त्वं प्राप्तुं वाञ्छसि तस्य प्राप्तिपूर्वं त्वं तद्वस्तु प्राप्तुं प्रयत्नं कुरु यल्लब्धानां तेषां वस्तूनां प्रधानकारणं, तथैकमात्रं सत्यसाधनमस्ति । तत् साधनं कारणञ्चास्त्यहिंसा । उदाहरणार्थमस्माकं स्वतंत्रतामेव ग्रहणं कुरु । यस्य भारतवर्षस्य शतातिशतवर्षप्राचीनपरतन्त्रतां दूरीकर्तुं राजनीत्याः सहस्रशः प्रयत्ने कृतेऽपि साफल्यं हस्तगतं नाभवत् । तस्या एव स्वतंत्रतायाः सफलतां राष्ट्रपिता बापूः स्वस्यामूल्यामोघास्त्राहिंसया एवावाप्तवान् । अधुना भवान् स्वयमनुमातुं शक्नोति यत् सहजप्राप्यामूल्यशस्त्रेणैतादृशं महद्वस्तु (यस्य प्राप्तिवाञ्छा भारतवासिषु बहुवर्षपूर्वमासीत्) प्राप्तमभवत् । तदा त्वेदृशं किं वस्त्वस्ति यदहिंसया

प्राप्यं नास्ति । अनेनेयं वार्ता स्वयंसिद्धाऽस्ति यद्राजनीत्यामहिंसायाः कीदृशं महत्वपूर्णं स्थानमस्ति ।

अथ धर्मः । धर्मेऽप्यहिंसायाः न केवलं महत्वपूर्णं स्थानमस्ति, अपित्वहिंसैव धर्मोऽस्ति । अद्य भारतवर्षे नास्त्येतादृशः कोऽपि धर्मो योऽहिंसायामहत्वं न ज्ञातवान्, तथा तां स्वधर्मे महत्वपूर्णं सर्वोत्कृष्टस्थानं न दत्तवान् । प्राय सर्वैरपि धमः "अहिंसा परमो धर्मः" इदं सत्यं पूर्णरूपेण स्वीकृतम् । यदि धर्मादहिंसातत्वं पृथक् क्रियेत तर्हि धर्मः इति नाम किञ्चिदपि वस्तु ना भविष्यत् । अहिंसारहितधर्मो नेत्रहीनप्राणी इवास्ति । अद्य मानवः यदप्राप्यस्थिरशान्त्यानन्दयोश्च कामनां कृत्वा सरससुमधुरस्वप्नान् पश्यति, तत्स्थिरशान्त्यानन्दावहिंसयैव लब्धौ स्तः । अहिंसा संसारं शान्त्याः सन्देशदात्री एकाऽद्वितीयाऽनुपमाऽकथनीयाऽदृश्या च शक्तिरस्ति । अस्यैव विषयस्योल्लेखं कुर्वन् श्रीशुभचन्द्राचार्य आह—

अहिंसैव जगन्माताऽहिंसैवानन्दपद्धतिः ।
अहिंसैव गतिः साध्वी श्रीरहिंसैव शाश्वती ॥
अहिंसैव शिवं सूते दत्ते च त्रिदिवश्रियम् ।
अहिंसैव हितं कुर्यात् व्यसनानि निरस्यति ॥
तपःश्रुतयमज्ञानध्यानदानादिकर्मणाम् ।
सत्यशीलव्रतादीनामहिंसा जननी मता ॥

**अहिंसायाः स्वरूपम्—**

अहिंसायाः स्वरूपस्य ज्ञानात्पूर्वं हिंसायाः स्वरूपस्य ज्ञानमत्यावश्यकम् । हिंसायाः विषये यदि कश्चिदल्पज्ञो मन्दबुद्धिः पृच्छ्येत तर्हि स इदमेव कथयिष्यति यत् कस्यचिदपि जीवस्य घातनमेव हिंसा । व्यवहारे इदं कथनं केषुचिदशेषु सत्यम् । किंतु यथार्थे कस्यचिज्जी-

स्यागारं धनपतिगृहाद् उत्तरेण, सुरपतिधनुश्चारुणा तोरणेन दूरादेव लक्ष्यम् आसीत्।" तस्य द्वारोपान्ते 'शङ्ख-पद्मौ' चालिखितौ आस्ताम्। वायुना नीता "जल-मुचो जालमार्गैर्विमानाग्रभूमीः प्रविश्यालेख्यानां नव-जलकणैर्दोषम् उत्पादयन्ति स्म। राजभवनभित्तिषु राजवंश्यानां चित्राणि, विशेष-घटना-परम्परोज्जृम्भ-कानि चान्यानि आलेख्यानि चित्रितानि समभूवन्। अयोध्यां प्रतिनिवृत्तौ सीता रामौ चित्रवन्ति सद्मानि प्रविश्य दण्डकेषु प्राप्तानि दुःखानि स्मारितौ अपि तानि इन्द्रियार्थ-सुखानुभूत्या न बहु अमन्येताम्। अयोध्याऽ-धिदेवता अर्धरात्रे शय्यागृहे प्रसुप्तं कुशं प्रबोध्य ध्वस्ताया अयोध्याया दुर्दशां वर्णयन्तीं परिदेवयते यद् 'विशीर्ण-भवनानां भित्तिषु आलिखिताः करेणुभिर्दत्त-मृणाल-भङ्गाः पद्म-वनावतीर्णाश्चित्र-द्विपाः सजीव-गजबुद्ध्या संरब्धसिंहैर्नखांकुशाघातैर्विदीर्ण-कुम्भा विधीयन्ते।'

एतस्मात् प्रमाण-समुच्चयात् सुस्पष्टम् एव ज्ञायते यच्चित्रलेखनं लीला-मात्रकं विनोद-साधनं नासीद्, अपितु 'स्पृहणीया ललित-कला इयम्' इति कृत्वा राजभिः साधारणैर्जनैश्च, ललनाभिस्तु विशेषतोऽति-मनो-योगेनाभ्यस्यते स्म। मुनिकन्यास्तासां सख्योऽपि तपोवनाश्रमेषु विविक्ते चित्रकर्मणि प्रावीण्यम् आपा-दयन्। राजानो, राज्ञ्यो, राजकुमार्यो, यक्ष-यक्षिण्यो, राज-परिजनाः, प्रजाश्च सर्व एव चित्र-कर्माभिनन्दन्तस् तस्मिन् प्रावीण्यं लब्धुं प्रयत्नवन्तो बभूवुः। इन्दुमती "ललिते कलाविधौ" स्व-पत्युः "प्रियशिष्या" आसीत्। राज्ञाम् उपायनी-भूतः परिजनोऽपि शिल्पि-कारिका-भूयिष्ठोऽभूत्।

चित्र-कला निरीक्षणसौक्ष्म्यं, कल्पना-वैशद्यं परं मनः-समाधिं चापेक्षते। कालिदासोपवर्णनेभ्यो ज्ञायते यच्चित्रकारा अनुपस्थितानामपि जनानां रूपं समाधिना मनश्चक्षुषः पुर आधाय सादृश्य-निर्विशेषाणि चित्राणि आलिखितुम् अलं बभूवुः। मूल-रूपाद् रेखा-मात्रोऽपि व्यभिचारो, अणु-मात्रोऽपि प्रमादः शिथिल-समाधित्व-दोषायाकल्पत कर्तुः।

चित्रोपयोगिनो वर्णा नीली-आद्योषधीभ्यो, मनः-शिला-गोरोचन-हरिताल-गैरिकादि-धातुभ्यो, लाक्षादि-वृक्ष-निर्यासेभ्यश्चोपालभ्यन्त। चित्रफलक-चित्रपट-लम्बकूर्च-तूलिका-वर्तिका-शलाका-वर्तिकाकरण्डकादीनि उपकरणानि चित्रकर्म-साधनान्यासन्, इति।

---

# "वाक्कीलस्य चातुरी"

(वैद्यनाथशर्मा कलकत्तास्थः)

एकदा कश्चिद् वाकीलो नगरान्तरस्थितन्यायालये स्वीयं कार्यं समाप्य शुल्कञ्चादाय स्वनगरं प्रति रेलयानेन प्रस्थितः । सर्वोच्चश्रेणीनिलये (Compartment) पविष्टोऽसौ । तत्र द्वौ जना एवोपविष्टा आस्तामेकस्तावद् वाकीलमहोदयोऽन्या चैका युवती-महिला ।

वाकील· स्वस्थाने सुखमासीन प्राप्तं धनराशि बहिष्कृत्याजीगणन् । तद्-द्रव्यराशिदर्शनसंजातलोभाया महिलाया मुखे जलं प्रास्रवत् । सा च वाकीलस्य द्रव्यग्रहणे मतिमकरोत् । प्रोक्तञ्च तया–भो महाशय ! यदि त्वं संमानेच्छुस्तदा स्वं समग्रं धनं मे समर्पय नोचेदहमाक्रन्दिष्यामि यत्त्वया बलादिह ममाभिमर्षणं कृतमिति । झटिति राजपुरुषा आगत्य त्वां पाशैः भन्त्स्यन्ति । तच्छ्रुत्वाऽपि वाकीलमहोदयोनिर्भीक इव नैजे कार्ये व्यापृत आसीत् । तया महिलया पुनरुक्तोऽपि स तूष्णीमेव स्थितः ।

तत परं द्रव्यलिप्सया सा स्थानात् उत्थाय तन्निकटे गत्वोच्चैरवादीत्, 'अयि, किं बधिरोऽसि यन्मे वचो न शृणोषि' ।, वाकीलोऽपि "आगतं तु भयं वीक्ष्य नर कुर्याद् यथोचितम्" इति विचिन्त्य सपदि सावधानोऽभूत् । प्रत्युत्पन्नमतिना तेनात्मानं बधिरमिव संदर्श्य तां प्रति पत्रे किञ्चिद् विलिख्य प्रश्न· कृत । वाकीलस्य कूटबुद्धिमजानत्या लोभदुर्मदान्धया तया स्वाभिप्रायः पत्रे लिखित । तस्मिन्नेव समये तत्पत्रं हस्तगतं कृत्वा वाकीलः स्मयमानरतामवोचत्, 'सुन्दरि, त्वमिदानीं सर्वथा मद्वशा । मिथ्याभयप्रदर्शनेन मां लुण्ठयितुमैषी', क्षणं तिष्ठ, भुङ्क्ष्वाधुना स्वनिर्लज्जतायाः फलम् । पश्येदानीं दण्डनायका आवयोः कं कारागारे निक्षिपन्तीत्युक्त्वा स रेलयानसंलग्नसतर्क-करीं लोहश्रृङ्खलां (Alarm chain) समाकृष्टुमुत्थितः ।

सा महिला महतीं विपदं विशङ्कमाना स्वरक्षायाः कृते वाकीलस्य शरण्यतां विहाय उपायान्तरमदृष्ट्वा भयेन कदलीव वेपमाना तस्य चरणयोः पतिता । भृश रुदती भविष्यति (Future) न केनाऽपि समम्त्थं व्यवहरिष्यामीति प्रतिश्रुतिञ्च कुर्वती स्वापराधाय वाकीलं क्षमामयाचत । सा प्रबोधवचनैः समाश्वसिता पथि याने स्थिते अवतीर्य लज्जयाऽधोमुखी दृष्टिमार्गमतिक्रांता ।

वाकीलमहोदयोऽपि सुखेन स्वचातुर्य्यात्तथाविधां सुविषमा दशां निस्तीर्णः स्वनगरं प्रापत् ।

## सम्पादकीयम्—भगवत्याः संस्कृतसरस्वत्याः वर्तमानयुगेपि शक्तिपरिचयः

[डा० रघुवीरमहोदयस्य भारतीयसंस्कृतिप्रणयश्च]

आर्याणामादिमा भाषा सेयं संस्कृतभारती सर्वासां भाषाणां जननीति कैर्गुणैः प्रख्यायते, इदं हि मर्मपरीक्षकैः समये सति मूलविचारेण शक्यते परिज्ञातुम्। अस्यां भाषायां शब्दानामुत्पत्तिः प्रायो धातूनां सकाशाद् भवति। एते धातवोऽपि यदा उपसर्गैः सह संमिलिता भवन्ति तेभ्योऽपि पुनरनेके शब्दाः प्रादुर्भवन्ति। प्रसिद्धः सोयमर्थः साधारणानामपि संस्कृतज्ञानां यत् एकस्मादेव हरणार्थकाद् 'हृ' धातोः उपसर्गाणां योगाद् आहार-विहार-प्रहार संहारादीनां नानार्थकानां शब्दानां समुद्भवः। एतदतिरिक्तं कृदन्त-तद्धितादयः प्रत्यया अपि तथा सन्ति येभ्यो नवीननवीनशब्दानां सिद्धिर्यथामनोरथं शक्यते कर्तुम्। प्रचलितास्तदिमे हिन्दीभाषायामपि साम्प्रतम्। यथा—प्रयोजनीय-उपयोगी-सुहावना-रमणीक-सराहनीय-पाश्चात्य-भौकोलिक-सांस्कृतिक-इत्यादयः।

एतस्मिन् विषये यैः साहित्य-सभ्यताप्रणयिभिरधिकतमं प्रयास आरब्धस्तेषु 'सरस्वतीविहार'स्य (इन्टरनेशनल एकेडमी आफ् इण्डियन कल्चर नागपुर), तत्संचालकस्य डाक्टर रघुवीरमहोदयस्य च नाम चिरस्मरणीयं भवेत्। महाभागेनानेन १६३६ तमस्य ख्रिष्टीय संवत्सरस्य समीपे हिन्दीभाषायामन्यान्यप्रान्तीयभाषासु च वैज्ञानिकशब्दावल्या निर्माणस्य कृतोभूदारम्भः। च योरोपीयभाषासु तस्य महाभागस्याऽभूत्प्रेरणा यत् आङ्गलभाषायामन्यासु या किल वैज्ञानिकशब्दावली ह्यस्ति सा हि हिन्दीभाषायामपि अक्षुण्णरूपेण स्थानमासादयतु। किन्तु अपरिवर्तितरूपे यदि वैदेशिकशब्दावली हिन्द्यां स्थानमासादयेत्तदाऽस्माकं साहित्यं वैदेशिकभाषाया अनुकरणमात्रं सिध्येत्। इमं भयानकं गत्यवरोधं दूरीकर्तुं डाक्टरमहोदयेन वैदेशिक-पारिभाषिकशब्दानामनूदितरूपेण स्वीकरणं, तत्र च श्रीमत्याः संस्कृतभाषाया आधारग्रहणं निर्धारितम्। डाक्टरमहोदयो बहुभाषाणामभिज्ञः। एतेन ज्ञानेन, संस्कृतसरस्वत्या आधारेण च विंशतिवर्षाणां सततपरिश्रमेण स ह्यस्मिन् विषये समभूत्सफलः। एतस्य फलस्वरूपे नागपुरनगरात् वैज्ञानिकशब्दानां बृहदाकारः कोषः प्रकाशितोभूद्, यस्मिन् १८०० पृष्ठानि, लक्षाधिकनवीनशब्दैः पूरितानि। कोषेणाऽनेन विज्ञानपाठ्यक्रमे ३४ संख्यकानि पुस्तकानि निर्मितानि, यैः इण्टरपरीक्षापर्यन्तं वैज्ञानिकशिक्षा निरर्गलं प्रादीयत।

न केवलं विज्ञानविषये एव, अपि तु प्रशासनसंबन्धेऽपि या पारिभाषिकशब्दानामावश्यकताऽभूत् सापि डाक्टरमहोदयेन संस्कृतभाषायाः साहाय्येन सफलतापूर्वकमभूत् पूरिता। प्रचलिताश्च ते नवीनाः शब्दाः साम्प्रतं हिन्दीभाषायां सर्वतः। यथा—संविधानम् (कांन्स्टिट्यूशन) विधानम् (लेजिस्लेशन), संसद् (पार्लियामैण्ट), अधिनियमः (एक्ट), सचिवः (सेक्रेटरी), आयुक्तः (कमिश्नर), शासनम् (गवर्नमैण्ट), प्रशासनम् (एडमिनिस्ट्रेशन) इत्यादि।

डाक्टरमहोदयस्य भारतीयसंस्कृतेर्विषये नैसर्गिकप्रेमैव कार्येऽस्मिन् सफलतां प्रददौ। भारतीयसंस्कृतेरुद्धाराय युरोपस्य एशियाप्रदेशस्य च बहुषु स्थानेषु परिभ्रमणं कृतवान् श्रीरघुवीरमहोदयः। साम्प्रतमेव

सोयं चीनप्रदेशे रूसप्रान्ते च भ्रमणं कृत्वा परावृत्तः। चीनप्रदेशात् प्राचीन-हस्तलिखितग्रन्थानां, मूर्तीनां, अभिलखादीनां च या सामग्री तेनोपलब्धा, तस्या अंशमात्रेण नवदेहल्यां शिक्षामन्त्रालयस्य तत्त्वावधाने एका विशाला प्रदर्शिनी समपद्यत। एवमेव रूस-मध्येशिया, मंगोलिया, तिब्वत, जावादिप्रदेशेभ्योपि भारतीयसंस्कृतिसंबन्धिनी प्रचुरा सामग्री समुपलब्धा, यया हि विभूषितः संप्रति 'सरस्वतीविहारः'। महान् हर्षस्य विषयो यत् 'इन्टरनेशनल एकेडमी' दिल्लीराजधान्यां शीघ्रमेव स्वकार्यं प्रारप्स्यते। अनेन हि विलुप्ताया भारतीयसंस्कृतेः संबन्धे भूयांसि तथ्यान्याविष्कृतानि भवेयुः। डाक्टररघुवीरमहाभागं, तस्य संस्कृतिप्रेमाणं च चिरायुषं क्रियाद् भगवान्।

## वायुयानसेनायामपि भारतीयानां वीरता

व्योमयानं भारतीयानां कृते नवीनं नास्ति। भारते न केवलं देवानामेव, अपि तु भूचारिणामपि विमानानि पुरा भारतगगने अभ्राम्यन्। भगवान् श्रीरामचन्द्रो लंकाविजयसहायकैः सुग्रीव-विभीषणादिभिः सह यदा अयोध्यामुपागमत्तदा पुष्पकविमानमारुह्यैव अत्राऽऽगच्छत्। अयोध्यावासिभिः सर्वैरेव पुष्पकविमानमवलोकितम्। किन्तु भौतिकेऽस्मिन् युगे फ्रांसादिदेशवास्तव्यैरेव वायुयानमाविष्कृतम्। भारतीयैस्तु पश्चिमदेशवासिनां सहयोगेन व्योमयानसंचालनमधिशिक्षितम्। किंतु निसर्गतः साहसिनो भारतीयवीरा अत्रापि शनैः शनैः प्रावीण्यमधिजग्मुः। जोधपुरनगरे 'वायुसेना कालेजो' स्तीति भवेदेव विदितं लोकवृत्तविज्ञानाम्। सम्प्रति अगस्तमासस्य २६ तारिकायां वायुसेनाकालेजेऽस्मिन् वायुसेनाशिक्षार्थिनां कृते आसीद्दीक्षान्तभाषणम्। अस्मिन् 'एयरकमोडोर' (वायुसेनाध्यक्षेण) आर एच् डी सिंहेन दीक्षान्तभाषणे प्रोक्तम्—"भारतीयवायुसेनाया निर्माणम् अनेकेषामध्यक्षाणां, तथा वायुसैनिकानां च प्रभूतेन परिश्रमेण, असाधारणेन बलिदानेन च जातम्। भारते-निष्ठा-सेवा-साहसादीनां गौरवपूर्णा परस्परा चिरात् प्रचलिता। एतस्याः संरक्षा भवतामेव हस्तेऽस्ति साम्प्रतम्।

द्वितीया कथा सेयमस्ति, यस्याः कृते भवतामवधानं भवेत्। भारतीयवायुसेनायाः स्वरूपमन्यापेक्षया नवीनमस्ति। अस्यां सर्वेषामपि प्रांतानां मनुष्याः संमिलिताः। सेयं सर्वस्यापि भारतस्य प्रतिनिधित्वं करोति। प्रादेशिक्यां भिन्नतायां सत्यामपि वायुसेनायाः अध्यक्षेषु, सैनिकेष्वपि च सुदृढो भ्रातृभावः। सोयं पञ्चशीलस्य प्रभावो भवेदित्यपि शक्यते वक्तुम्। सामञ्जस्यस्य सेयं भावना, वीरतायाश्च सेयं परम्परा सर्वदा जीविता तिष्ठेदिति भवत्सु आयत्तम्"। इत्यादि येभ्यः स्नातकेभ्यः उड्डयनचिह्नानि (विंग्ज) प्रादीयन्त, तेषु भारतीयनौसेनायाः अध्यक्षौ लेफ्टिनेंट एस्० सी० चोपर, लेफ्टिनेंट आर्० एस्० ग्रेवार, एतदादीनामपि नामान्युल्लेखनीयानि। एवमेव राजकीय-अफगानसेनायाश्चालकः मुहम्मदयाकूबः, एतदादयोऽप्युल्लेखार्हाः। ऐतिहासिककालादारभ्य अद्यावधि अपि निरन्तरं निगूढा सेयं भारतीयवीराणां साहसिकता धीरता च चिरं स्थायिनी भूयादिति देशहितैषिणां कामना।

**शोकसंवादः—**

पं श्रीरामकुमारशास्त्रिणः ('विजय') 'नीमकाथाना' (तोरावाटी) स्थानात्पत्रमुपगतं यत्र महाभागेनाऽनेन शोकसभायाः सूचना दत्ता, या हि संस्कृतसाहित्य-

सम्मेलनस्य तोमरवाटीशाखासभायाः तत्वावधाने २८ अगस्तदिवसे समायोज्यत। अस्यां साम्प्रतमेव दिवमुपगतस्य श्रीमुरारिमिश्रस्य शोकप्रकाशनमक्रियत। सभायामस्यां 'नीमकाथानास्थ' संस्कृतानुरागिजनतया मिश्रमहाभागस्य संस्कृतसाहित्यसेवां प्रशंसन्त्या, तस्य स्वर्गगमनेन प्रान्तस्यास्य महती क्षतिरभिव्यक्ता। मिश्रमहाभागस्य जीवनविषये श्रीगिरिधरचोटिया, श्रीप्यारेमोहनसाहित्याचार्यप्रभृतीनां भाषणान्यभूवन्।

दु:संवादमिममधिगत्य तत्परिचिता संस्कृतानुरागिणः सर्वे एव विषादमुपगच्छेयुः। पङ्क्तीनामासां लेखकस्य 'बगड' संस्कृतपाठशालायां मिश्रमहाभागेन सह प्रथमपरिचयोऽभवदिति स्मरामि। महाभागोयं पाठशालायामस्यां पाणिनीयव्याकरणस्य, साहित्यस्य च सफलतयाऽध्यापनमकरोत्। अन्तिमदर्शनं तु साम्प्रतमेव राजस्थानप्रान्तीयसंस्कृतसाहित्यसम्मेलनस्य' शीकराधिवेशने समभवत्। हन्त! कोऽयं जानीते स्म यदिदं मिश्रमहोदयस्य दर्शनमन्तिमं भवेत्। चराचरनायको मिश्रमहोदयाय शाश्वतिकीं शान्तिं प्रदेयादिति भगवन्तमभ्यर्थयामहे।

## संवादपत्राणां पृष्ठानुसारं मूल्यनिर्धारणं भवेत्-

संवादपत्राणि जनशिक्षणस्य महत्त्वपूर्णं साधनम्। न केवलमिदमेव, अपितु जनमतपरिवर्तनस्य संवादपत्रेषु एषु महती शक्तिः। राजनैतिकेषु विषयेषु जनतायां प्रसृतेषु, संवादपत्राणि स्वस्याऽद्भुतां शक्तिं परितः प्रचालयितुं बद्धपरिकराणि भवन्ति। शनैः शनैश्च स्वविचारानुसार जनताया मतपरिवर्तने पत्राणि इमानि सफलान्यपि भवन्ति। एवंविधशक्तिसंपन्नमिदं शस्त्रं यदि केवलं धनकुबेराणाम् (पूंजीपति) एव हस्तगतं भवेत्तर्हि अस्माकं जनतन्त्रस्य शनैः शनैः स्वरूपमेव अन्यरूपं भवेत्। भौतिकस्वार्थमयं तदिदं युगं धनबलाऽधीनम्। वर्तमानकाले प्रायः सर्वेष्वपि क्षेत्रेषु धनबलसंपन्नाः पुरुषा विजयं लभन्ते। समाचारपत्राणामपि सांप्रतं विलक्षणा स्थितिः। वर्तमानकाले प्रायो बहून्येव पत्राणि किञ्चिदुद्देश्यमवलम्ब्य न प्रकाश्यन्ते जनतायाम्। तानि हि साम्प्रतं वाणिज्य-व्यवसायश्रेणौ अन्तर्भवन्ति। दुर्भाग्यवशात् कतिपयपत्राणां स्वामित्वं महतां धनपतीनां संप्रति हस्तगतम्। अतएव एकाधिकारस्थापनस्य भावना प्रबला संपद्यते।

एवं स्थितौ लघुलघूनि पत्राणि, किं वा प्रादेशिकानि पत्राणि, बहुधा विलीनानि। किं वा विलयोन्मुखां दशामुपगतानि। तेषां विषये सर्वदा संदेहो भवति यत्तानि अग्रे प्रचलिष्यन्ति, अथवा निरुद्धानि भविष्यन्ति। अस्यां दशायामावश्यकमभूत् यत् लघुलघूनां, प्रादेशिकानां च पत्राणां सा स्पर्द्धा केनचिदुपायेन निरुध्येत या हि धनकुबेराधीनैः महद्भिः पत्रैः सह प्रवृत्ताऽस्ति। तेषां पत्राणां जीवनस्थितये तेभ्यः संरक्षणदानमावश्यकमिवाऽभूत्।

कतिपयमासेभ्यः नामिमां प्रतिस्पर्द्धां निरोद्धुं चर्चा अपि प्राचलन्। प्रान्तीयसर्वकारेण सर्वसंमतम् उपायमाविष्कर्तुं पत्राणां स्वामिनः, प्रकाशकाश्चापि परामर्शार्थं समाहूताः। किन्तु धनपतीनामन्तर्निगूढः स्वार्थः संवादपत्रोद्योगं देशे नोत्साहयेत्। अन्ते बहुधा विचारविमर्शाभ्यां प्रतिस्पर्द्धा निरोधनार्थं पृष्ठानुसारं संवादपत्राणां मूल्यनिर्धारणं स्थिरीकृतमभूत्। संसदि सूचनाप्रसारणमन्त्रिणा डा० बालकृष्णकेसकरमहोदयेन एकं विधेयकं प्रास्तूयत यस्मिन्, सर्वकारस्याऽधिकारो भवेत् यत्पृष्ठानुसारं स हि पत्राणां मूल्यं निर्धारयेत्। संप्रति पत्रैः संबद्धा व्यक्तयः प्रार्थयेरन् यत् सर्वकारः पृष्ठानुसारं मूल्यनिर्धारणसमये तेषां हितं लक्ष्यीकृत्यैव निर्णयं प्रकाशयेदिति।

**आयुर्वेदचिकित्साप्रणालीद्वारा देशस्याऽस्य महती सेवा**—श्रावणकृष्णप्रतिपदि (३१) जुलाई आयुर्वेदमार्तण्ड-भिषगाचार्य-स्वर्गवासि-श्रीलक्ष्मीराम-स्वामिमहाभागानां सप्तदशो निर्वाणदिवससमारोहः पूर्वोक्तस्वामिमहाभागानामुद्याने (मोतीडूंगरी) निरवर्त्यत। यत्र हि राजस्थानस्य स्वास्थ्यमन्त्री श्रीबदरीप्रसादगुप्तमहाभागः अध्यक्षपदममण्डयत्। अध्यक्षपद-

# भारती

( संस्कृतस्य प्रमुखं मासिकपत्रम् )



भूमावादर्शितस्वर्गा दुर्गा दुर्गार्तिनाशिनी ।
भारतेऽखिलवर्गाणामपवर्गाय जायताम् ॥

वर्षम् ६ | द्वादशोऽङ्कः | मूल्यम् वार्षिकम् ३) रु० एकस्याङ्कस्य ।=)

राजस्थान–मद्रास–मध्यप्रदेश–सौराष्ट्र–भूपाल–उत्तरप्रदेश–बिहार–पञ्चनद–आन्ध्र–सर्वकारैः स्वीकृता—

# ❋ विषय–सूची ❋



सूचना :—सर्वे ग्राहकाः सूच्यन्ते यत् पत्रव्यवहारावसरे निजग्राहकसंख्यां स्वस्मिन् पत्रे अवश्यं दर्शयेयुः। अन्यथा पत्रोत्तरे बाधा समुत्पस्यते।

## —❋ "भारती" पत्रस्य उद्देश्यानि नियमाश्च ❋—

१ संस्कृतभाषायाः प्रचारः, सरलेन संस्कृतेन सामयिकानां विचाराणाम्, उत्कृष्टाया मानसिकविचारपरिपोषिकायाः सामग्र्याश्च समर्पणम्, अस्य पत्रस्योद्देश्यानि।

२ 'भारती'पत्रस्य वार्षिकं शुल्कं ३) रूप्यकत्रयम्।

३. मासिकपत्रमिदं प्रतिमासं प्रतिपदायां तिथौ प्रकाशितं स्यात्।

४ एकस्यांकस्य मूल्यम् ।≈) आणकषट्कम्।

सम्पादकः—
कविशिरोमणि
भट्टश्रीमथुरानाथशास्त्री
सहसम्पादक —
देवर्षिकलानाथशास्त्री बी. ए.
जयपुरम

# भारती

प्रबन्ध-सम्पादकः—
गिरिराजशर्माशास्त्री

भानुवद् भारतीयानां भास्वद्भवनभासिनी ।
भागीरथीव भावाढ्या भारते भातु भारती ॥

वर्षम् ६ | आश्विनशुक्ला १, सं० २०१३ | अङ्कः १२

## दीनः

(शिवशरणझा, झासी)

अभिधीयते स दीनः ।

१

कष्टानि यस्य हेतोरिह सन्ति सन्ततानि ।
संसज्य तेषु येन गीतानि विस्मृतानि ।
संस्तौति यो, न दयते देवोऽपि जातु यस्मिन् ।
निःसीम-भीम-दुस्तर-सन्ताप-सिन्धु-लीनः ॥

२

प्रातर्विसर्जयति यं भूरिश्रमाय गेहात् ।
सायं यमाह्वयति च रात्रौ विराम-कामात् ।
गोष्ठीषु जीर्णवासा यो गर्हणामुपैति ।
कतिपय-कुटुम्ब-रक्षा-चिन्ता-तडाग-मीनः ॥

३

तीव्रातपेन ग्रीष्मे तातप्यतेऽसहायः ।
शीताद् न चापि शिशिरे त्राणे भवत्युपायः ।
वर्षाम्बुनाऽभिषेकं प्रावृट् करोति यस्य ।
आवश्यकोपकरणैरस्त्येव यो विहीनः ॥

४

शुष्कान्न-भोजनेन सततं कृशश्च कायः ।
कायाद् बहिः सरन्ति चास्थीनि, कोऽस्त्युपायः ?
कृत्वा प्रयत्नमपि यो नहि साध्य-सिद्धिमेति ।
भू-स्वामि-ऋणमदत्वा मृत्युश्च नास्त्यधीनः ॥

५

हसितुं च क्रीडितुं च यस्यास्ति नावकाशः ।
परिवार-पालनस्य कण्ठे स्थितोऽस्ति पाशः ।
जीवति न चैव म्रियते, मध्येऽवलम्बते यः ।
रोगाद्युपद्रवे तु यस्यास्ति नात्मनीनः ॥

६

मधु-कामनां हि कर्तुं यस्यास्ति नाधिकारः ।
गेहं मनःप्रदेशं चाऽवेष्टतेन्धकारः ।
पुण्य-स्थलानि द्रष्टुं यस्यान्तिके धनं नो ।
दुःखे सुखे समः सन् शान्त्यै सदैव क्षीणः ॥

७

सत्यं न चेदुपायो, लोपेऽथ दीनतायाः ।
सकृच्च दीन-देहे प्राप्तौ तु पीनतायाः ।
क्रान्तिस्तदा भविष्यति भू-लोक-कम्पयित्री ।
विधिराशु शान्ति-कामैरुद्भाव्यतां नवीनः ॥

# श्रीकृष्णदौत्यम्

(पूर्वानुवृत्तम्)—

[ले॰ भास्करकेशव ढोक]

द्वितीयः प्रवेशः

(दुर्योधनस्य प्रासादः)

दुर्योधनः—मातुल, अपि श्रुता भवता दूतेन आनीता वार्ता ?

शकुनिः—न श्रुता। का पुनः सा वार्ता ?

दुर्यो॰—अस्माकं निमंत्रणं अनादृत्य स शिशुपालवधकः पांडवानां दूतः कृष्ण विदुरगृहं भोजनार्थं गतः।

शकुनिः—एतत् मया पूर्वं एव तर्कितम्। अनेन हि तस्य राजकार्यपटुता धूर्तता च प्रकटीभवतः।

दुर्यो॰—अधुना पांडवैः प्रत्यक्षः श्रीकृष्णः दौत्याय प्रहितः। किं कर्तव्यमूढा भवति मे मतिः। किं करणीयम् स्यात् ?

कर्णः—तत् हि पूर्वमेव अस्माभिः निश्चितम्। युद्धं विना राज्यभागः सर्वथा न देयः। युद्धे अस्मान् विजित्य पांडवैः स्वराज्यं प्राप्यम् इति श्रीकृष्णाय स्पष्टं कथितव्यम्।

शकुनिः—श्रीकृष्णः अतीव मधुरालापी अस्ति। स्वभाषणेन अस्मान् सः मायावी मोहयेत् कदाचित्। अपरं च कपटप्रबंधे सः अतीव निपुणः।

यः कालं मुचकुंदकोपदहने नीत्वा दरीं दग्धवान्  
द्विर्भग्नश्च वृकोदरेण मगधाधीशो हि यस्येंगितैः।  
भूपानां परिपश्यतां बलवतां वै राजसूयाध्वरे  
चैद्यो येन हतः स पाण्डवसखा दौत्यार्थमत्रागतः॥

तर्हि सावधानतया अस्माभिः वर्तितव्यम्।

दुर्यो॰—युद्धे समुपस्थिते श्रीकृष्णः पांडवानां अवश्यं साहाय्यं करिष्यति। कृष्णबलेन संयुक्ताः पांडवाः सामर्थ्यशालिनः अजेयाः च भविष्यन्ति।

कर्णः—न भेतव्यं भवता। मयि त्वत्सहाये सति किमर्थं तव एषा चिंता ?

दुर्यो॰—तव एव बलेन अहं पाण्डवानां विरोधं करोमि। एते भीष्म-विदुर-द्रोणाः पांडवानां कुशलं इच्छन्ति। शरीरेण ते अत्र संति किंतु मनसा ते पांडवानां समीपम् एव वर्तन्ते। न मे तेषु विश्वासः।

कर्णः—निश्चिन्तः भव। अयं कृष्णः स्वयमेव एकाकी अत्र आगच्छति। तर्हि सः प्रथममेव किं न बन्धने ग्रहीतव्यः। कृष्णे बंधनप्राप्ते पांडवा मृतप्रायाः भविष्यंति।

शकुनिः—यदि आवश्यक एष उपायः अपि अवश्यं करणीयः।

दूतः (आगत्य) देव, महात्मना विदुरेण सह श्रीकृष्णः राजसभां शीघ्रमेव आगमिष्यति।

दुर्यो॰—तर्हि वयं तत्रैव गच्छामः।

(सर्वे प्रस्थिताः)

तृतीयः प्रवेशः

(राजसभा)

दुर्यो॰—भगवतः वासुदेवस्य वयं सहर्षं स्वागतं कुर्मः। निवेद्यताम् यदि वयं कामपि भवत्सेवां कर्तुं योग्याः।

धृत॰—वासुदेव, अपि मे पुत्रकाः पांडवा सपत्नीकाः कुशलिनः सन्ति।

**श्रीकृष्णः** – राजन् सर्वे कुशलिनः संति। भवत्सहितान् सर्वान् पांडवैः सादरप्रणामः मन्मुखेन भणितः।

धृत०—उचितमेव एतत् तेषाम्। अद्य वासुदेवस्य चरणरजोभिः एषा सभा पाविता। कस्मात् कारणविशेषात् अद्य भवतः अत्र प्रस्थानम् अभवत्? तत् श्रोतुमिच्छामः।

श्रीकृष्णः—भवन्तः सर्वे जानंति एव यत् पांडवैः स्वकृतपणः सयशः पूर्णतया संपादितः। अधुना अस्माकं राज्यभागः अस्मभ्यम् तूर्णं देयः इति तेषां सविनयं प्रार्थना अस्ति।

धृत०—जात दुर्योधन, अस्मिन् विषये किं चिंतितं भवता। भवता उचितमेव कर्तव्यम्।

दुर्यो०—अस्माभिः न किंचिदपि अनुचितं कृतम्। पांडवैः प्रतिज्ञा पूर्णतया न पालिता इति वयं मन्यामहे। अतः ते राज्यं याचितुं न अर्हन्ति।

श्रीकृष्णः—अलीकम् एतत्। पांडवाः न्यायप्रियाः सत्वशालिनः सत्यप्रियाः च संति। तैः नीतिविरुद्धं आचरणं कदापि संभवनीयं न भवेत्।

धर्मज्ञाः खलु पांडवाः सुकृतिनः सन्नीतिमन्तो बुधाः
दीनानां परिपालकाः खलु सतां सेवापरा निस्पृहाः।
स्वाराज्यार्थमपि त्यजंति सहसा सन्नीतिमार्गं न ते
वीरा बिभ्रति नो भयं लवमपि प्रत्यक्षकालादपि॥

अतः तेषां प्रार्थना अवश्यं सम्यक् चिंतनीया।

शकुनिः—अस्माभिः पूर्णतया सर्वमेव चिंतितम्, अनंतरं च निश्चितम्। पांडवाः राज्याय पात्रं न संति।

श्रीकृष्णः—धृतराष्ट्रमहाराज! पितामहभीष्म, गुरुवर्यद्रोण अन्ये च सभ्याः श्रूयताम्। दुर्मंत्रितः अयं दुर्योधनः पांडवान् प्रति महान्तं अन्यायं करोति। अस्य पापकर्मणः सुष्ठु परिणामः कदापि न भवेत्। यथा पांडवाः तथैव कौरवाः अपि मे प्रियाः सम्बन्धिनः च सन्ति। अहं उभयोः शुभं चिन्तयामि। अतः पुनः वदामि पांडवानां राज्यभागः तेभ्यः तूर्णं देयः।

कर्णः—युद्धं विना राज्यं प्रत्यर्पितुं दुर्योधनः कदापि सन्नद्धः न भविष्यति।

विदुरः—अस्य दुराग्रहस्य परिणामः कौरवाणां अनिष्टकारकः भविष्यति। पांडवाः धर्ममार्गानुचारिणः सन्ति। अपरं च श्रीकृष्णः तेषां सखा। एतत् चिंतनीयम्।

कर्णः—वयं पांडवेभ्यः सकृष्णेभ्यः न बिभिमः।

विदुरः—अलं एतेन प्रलापेन। अपि स्मर्यते घोषयात्राप्रकरणं युष्माभिः।

गंधर्वैर्विजिताः स्वपाशविधृता बन्दीकृतास्ताडिताः
एते कर्णसुयोधनप्रभृतयो निर्लज्जवीरब्रुवाः।
श्रुत्वैतत् हि युधिष्ठिरेण सदयं संप्रेष्य भीमार्जुनौ
उन्मुक्ता अरिबन्धनात् कथमलं जेतुं क्षमी पांडवान्॥

श्रीकृष्णः—युधिष्ठिरः युद्धाय अनुत्सुकः अस्ति। न कस्मादपि भयात्, अपितु कुलघातं निवारयितुम्। अतः स साम्ने तत्परः अस्ति। युधिष्ठिरेण केवलं पंचग्रामाः याचिताः। दीयतां ते तेभ्यः, निवार्यताम् अयं विनाशकारी कलहः।

दुर्यो०—युद्धं विना सूच्यग्रामपि भूमिं न दास्यामि, किं पुनर् अर्धराज्यम्।

मद्भाग्यद्विषतां बलात् छलयतामस्मान् शिशुत्वे सदा
सौद्धत्यं मयमन्दिरे विहसतां मां भीमशक्तेर्मदात्।
संप्राप्ता स्वधियो बलैन हि मया लक्ष्मीररीणामियम्
सा युद्धेन विना भवेत् कथमहो प्रत्यर्पिता शत्रवे॥

श्रीकृष्णः—बाढम् आत्मनाशाय तत्परोऽसि। अन्न नास्ति काऽपि अन्या गतिः। अस्तु एतत्। गच्छामि।

दुर्यो०—कृष्ण! तत्रैव स्थीयताम्। सेवकाः! (ते प्रविशंति) गृह्यताम् असौ बन्धने काराकारे च स्थापितव्य'।

भीष्मविदुरौः— महान् अनर्थः। महान् अनर्थः अयम्। धृतराष्ट्र अवरोधय एनम् कुलघातम्। अन्यथा शिशुपालवधस्य पुनरावृत्ति· अत्र सुनिश्चितम् भविष्यति।

श्रीकृष्णः—(विहस्य) न भेतव्यं युष्माभिः। मां ग्रहीतुं न कोऽपि समर्थः। जंबूकोपमा एते उत्तरगो-ग्रहणप्रसंगे एकाकिनमपि नरशार्दूलं पार्थं जेतुं असमर्थाः। अपि तु तेन हि पराजिताः कृष्णीभूतमुखाः तत प्रत्यागताः। कथम् एते वराकाः मां अवरोद्धुं समर्थाः। दूरे तिष्ठन्तु ते ये स्वकुशलं इच्छन्ति।

धृत०—दुष्ट दुर्योधन मा रुंद्धि वासुदेवम्। भगवन् श्रीकृष्ण क्षाम्यतु मां भवान्। एते मूर्खाः न जानान्त तव प्रभावम्। सुखेनैव गच्छतु भवान्। कथ्यतां पांडवान् यत् तैः धर्मानुसरणम् यथापूर्वं सदा कर्तव्यम्।

श्रीकृष्णः—तव अयं अनीतिमार्गगामी पुत्रः एव अस्मै उपदेशाय पात्रं, अस्ति पांडवाः आजन्मधर्मशीलाः सन्ति। अधर्मवृत्तिस्तु तान् दूरादपि न स्पृशति। धर्माज्ञया मया एषः संधिप्रयोग कृतः कौरवाः दोषभागिनः। ते आत्मनः दुष्कर्मणाम् फलं अवश्यं प्राप्नुवन्ति। समाप्तं मे कार्यम्। ईश्वरो हि एतेभ्यः मूढकौरवेभ्य· सद्बुद्धिं प्रदद्यात्। गच्छामि अधुना। (निर्गच्छति)

(ईशस्तुतिः) भैरवी

प्रभुपदे प्रेम्णा प्रणमनम्। बालकानाम्।
जगत्पावनं त्वत्पदस्मरणम्।
सपदि स्मृतवतां दहत्यघवनम्।
त्वां हि प्रपन्नश्छात्रगणोऽयम्।
पाहि प्रभो तं शरणापन्नम्॥ १॥

त्वमेव साक्षात् विश्वविधाता।
त्वमेव भर्ता विलयं कर्ता।
चराचराणां जीवनदाता।
त्वमेव सर्वेषामसि शरणम्॥२॥

वितर दयाब्धेऽस्मासु सन्मतिम्।
मातृभूमिरतिममलां प्रीतिम्।
दृढनिश्चयमथ सत्यप्रीतिम्।
अपनय सुखहां कुमतिं तूर्णम्।३।

भारतभूराप्नोतु सत्वरम्।
प्राग्वैभवममल च गौरवम्।
भारतयूनामेतत्साध्यम्।
क्रियतां तस्मिन् सुयशोदानम्।४।

---

## मा हसत :—

एकः पठानः स्वघटिकायन्त्रं सुधारयितुं घटिकानिक्रेतुरापणं गतः। पृष्टमनेनः 'कियता मूल्येन घटिका मे सुधारिता भविष्यति?" विक्रेता उक्तम्—स्वल्पेनैव। यावता मूल्येन इयं क्रीता, तावतोऽर्धं ददातु भवान्।" पठानोऽवोचत्—"मया तु कलहावसरे मुष्टि (घूंसा) चतुष्टयाघातेनापहृताऽभूत्। मुष्टिद्वयं भवतेऽधुना ददाम्युत पश्चात्?"

# पुरुषपरीक्षा

[उत्तमराव विनीवाले]

स्थैर्यं नरो व्याघ्र-मुखाग्रतो वा
युद्धे शतघ्नेः पुरतोऽपि भक्ते ।
स विध्यते तु प्रमदाकटाक्षैः
यो धृष्यते नैव स वै महात्मा ॥१॥

यो व्याघ्रवत्कालकरालदंष्ट्रैः
कंठेऽपि वीरः खलु गृह्यमाणः ।
भयात्स्वधर्मं न जहाति भूम्याम्
लोकोत्तराणां स नरो वरेण्यः ॥२॥

न जायते बालसुभाषितेन
कुतूहलं यस्य कठोरचित्ते ।
स मानुषो नैव पशुस्तु साक्षात्
विद्येत हा पुच्छविषाणहीनः ॥३॥

यः स्वार्थलोभात्स्वजनान् निहन्ति
भूत्वा सहायो हतकः पराणाम् ।
स्वार्थो न वै सिध्यति तस्य पुंसः
स हन्यते सर्पसखेव कङ्कः ॥४॥

आधर्षणं वीक्ष्य कृतं खलेन
नार्याश्च तस्याः करुणार्तशब्दम् ।
श्रुत्वापि यः क्रुध्यति नैव तत्तः
क्लीबः स गण्यः पुरुषेषु जातः ॥५॥

त्यक्त्वा स्वधर्मं वृणुते विधर्मम्
आरोप्य दोषं निजपूर्वजेषु ।
विद्वान् नरो यः कुलपांसनः स
धिग्ज्ञानमेवं धिगियं च विद्या ॥६॥

ग्लायेन्न दुःखे न सुखे तु हृष्येत्
पश्येन्न भेदं ह्यधने धनाढ्ये ।
सर्वेषु भूतेषु दयान्वितो यः
श्रेष्ठः स पुंसां स्थितधीर्महात्मा ॥७॥

सत्तामदोन्मादगतो नरेन्द्रो
मनस्विनां यो वचनानि हित्वा ।
प्रवर्तते राष्ट्र – विनाशनाय
प्राज्ञैः स वध्यो ह्यविचारयद्भिः ॥८॥

सुखोपभोगाय धनं च भुंक्ते
कायं च यो दाररतिक्रियासु ।
वित्तापहाराय मनः पराणाम्
नराधमोयं भुवि भारभूतः ॥९॥

दारिद्र्यकाले व्यथते हृदन्त-
र्यो हस्तपादं न विचालयित्वा ।
श्वसन् हि भस्त्रेव मृतोपमः स
किं जीवनेनास्ति फलं तु तस्य ? ॥१०॥

किं कोमलं सज्जन-चित्तमेव
किं सुन्दरं विद्धि हरेः स्वरूपम् ।
का वीरता राष्ट्रकृतेऽसुदानं
का वै दया दीन – विपन्नरक्षा ॥११॥

कः सज्जनो भूतहिते रतो यः
को दुर्जनो द्वेष्टि निरागसं यः ।
प्राज्ञश्च को वेत्ति हिताहिते यो
मूर्खस्तु को, यो ह्युभयं न वेत्ति ॥१२॥

---

# संस्कृतज्ञान्प्रति

[ले० कालीरामशर्मा शास्त्री, मन्त्री संस्कृत-साहित्य-सम्मेलन, अम्बाला छावनी]

परतन्त्रतायां यादृशी-अवस्था संस्कृत-संस्कृतज्ञानामासीत्ततोऽपि निकृष्टतमा स्वतन्त्रतायां सञ्जाता इति नास्ति-अविदितं भवद्भिः। परतन्त्रतायां या संख्या संस्कृत - पाठशालानामासीदधुना तस्याश्चतुर्थांशोऽपि नावशिष्यते। यद्यपि कार्यं द्विगुणितं सञ्जातं परं संस्कृताध्यापकानां वेतनन्तदेव। किं कथयामि या आशा-आसन् परतन्त्रतायां यद्भारते स्वतन्त्रे सञ्जाते संस्कृत-संस्कृतज्ञानामुन्नतिः सभविष्यति ताः प्रभञ्जन विद्राविता मेघा इव न जाने कस्यां गुहायां विलीनाः। संस्कृतज्ञानामाशाः कमलकोशगतद्विरेफाशावत्—

"रात्रिर्गमिष्यति भविष्यति सुप्रभातम्,
भास्वानुदेष्यति हसिष्यति पंकजश्रीः।
इत्थं विचिन्तयति कोशगते द्विरेफे,
हा हन्त! हन्त! नलिनीं गज उज्जहार॥"

आंग्लभाषोपासकैर्गजैः कवलिताः। आंग्लभाषाध्यापकानां वेतनवृद्धिः संजाता, परं संस्कृतज्ञान्प्रति न केनाप्यवलोकितम्। वोटदानस्याधिकारे यदा कदाचिच्चर्चा भवति तदा त एव सीनेटसदस्याः 'संस्कृतज्ञा मूर्खाः" इत्युक्त्वा विरोधमाचरन्ति ये संस्कृतमेवाश्रित्य स्वोदरपूरणं कुर्वन्ति। नेतारस्तु "संस्कृतभाषा सर्वासां भाषाणाञ्जननी, तस्याः साहित्यमतीव विशालम्, नहि अन्या काचिद्भाषा या अस्याः समतां कुर्यात्। एषा देववाणी।" इत्येवमादीनि साररहितानि भाषणानि दत्त्वा वराकान् संस्कृतज्ञान् संतोषयन्ति। यदा वयं कथयामः संस्कृतज्ञानां वेतने वृद्धिः करणीया तदा नेतारः कथयन्ति आम्! विचारयामो वयम्। वयं संस्कृताय यद्भवन्तः कथयन्ति तदेव करिष्यामः। परन्तदपि पञ्जाबीकथनानुसारं "पञ्चायत का कहना सिर मत्थे पर परनाला उत्थे का उत्थे"। किमस्ति-अस्य निदानन्तदाहन्तु एतदेव कथयिष्यामि "संस्कृतज्ञानां नपुंसकता तथा संघटनाभावः"। परोपदेशाय तु एते कथयन्ति "संघे शक्तिः कलौ युगे" परं दीपकस्याधस्तात् अन्धकारः।

अधुनालस्यं विहाय प्रतिनगरं संस्कृतसभाः करणीयाः। समाचारपत्रेषु संस्कृतविषये लिखित्वान्दोलनं करणीयं येन संस्कृत-परिपन्थिनोऽवगन्छेयुर्यत् संस्कृतज्ञा अपि जीवन्ति तेऽपि किञ्चित् कर्तुं शक्नुवंति केवलं पारितैः प्रस्तावैः किञ्चिन्नैव भविष्यति। अपितु-

"उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः"

---

# पाण्डित्यस्य सिद्धयोगः ('नुस्खा')

व्यासादीन् कविपुङ्गवाननुचितैर्वाक्यैः सलीलं हसन्
उच्चैर्जला निमील्यलोचनयुगं श्लोकान् सगर्वं पठ।
काव्यं धिक्कुरु अत्परैर्विरचितं स्पर्द्धञ्च सार्द्धं बुधै-
र्यद्यभ्यर्थयसे श्रुतेन रहितः पाण्डित्यमाप्तुं बलात्॥

# "तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ"

[ले० कालिकाप्रसादशुक्लः, व्याकरणाध्यापकः, संस्कृ महाविद्यालयः, बड़ौदा]

इदं धराधाम सर्गस्यादित एव बुद्धिवादस्य शास्त्रवादस्य च विशाल मानवमस्तिष्कस्य चरमविकाससीमा मनीषिमल्लभूमरिव जयतीति नास्ति प्रेक्षावतां तिराहितम्। एकः पक्षोऽनपेक्षितशास्त्रतर्ककर्कशसाधारणमानवमस्तिष्कमेव प्रबलप्रमाणत्वेन परिगणयन्, तदुर्वरप्रदेशात् प्रसूतं मतमेव सिद्धान्तभूतं मन्यमानः तदनुकूलमेव पन्थानमवलम्बितुमागृह्णाति स्वपक्षावलम्बिनः। अन्यश्च पक्षः कामं तद्विरुद्धवेदोदितहेयहान्युपादेयोपादानशबलितपथस्य वेदमूलकातीतानागतवस्तुजातसाक्षात्कारकलितान्तःकरणऋषिप्रणीतस्मृतिप्रतिपादितवर्त्मनश्चावलम्बन एव प्राणिजातस्य श्रेयः-प्रेयसी कलयति, समुपदिशति चानवद्यं तमेव पन्थानमाश्रयितुम्। विशेषतोऽनयोः पक्षयोः प्रथमस्य परिग्रहीता भौतिकवादेऽभिनिवेशानिविष्टः पाश्चात्यो देशो नितरां नेत्रातिथीक्रियते, द्वितीयस्य च शास्त्रप्रतिपादितमार्गैकशरणो भारतः। यद्यपि भरतभूमिरपि पक्षद्वयस्यास्य द्वन्द्वादात्मानं मोचयितुं नाशकत्, परिणामतोऽत्रापि परस्प कलहायमानानामास्तिकनास्तिकद्विविधदर्शनानां दर्शनं समभूत्। परिस्थितिविशेषे विकासो ह्रासश्चापि द्विविधदर्शनानां समान एवासीत्। तथापि भारतस्य शास्त्रवादस्य विजयवैजयन्ती सर्वदैव समुल्लसन्ती, अजयत्, जयति, जेष्यति चेत्येवं भगवतो भूतभावनस्य कश्चनापरिहेयः सङ्केतोऽस्तीत्यत्र नास्ति मतद्वयस्यावकाशः।

अहो ? भारतेऽपि बुद्धिवादः ? तत्रापि शास्त्रवादस्य प्रतियोगितायाम्? अलीकमेतत्! अथवा वर्तते चेत् वर्तताम्, भौतिकपदार्थचिन्तनाय चिरंजीवतात् पूर्वपक्षत्वेन शास्त्रवादस्य, सुखं तिष्ठतु समुद्रे रत्नेन सह शुक्तिकेव, न तत्र कश्चन मत्सरः, तेन न किञ्चिच्छिन्नं शास्त्रवादस्य, प्रत्युत स्फटिकनिर्मलता प्रकाशिता भवति, स्वीकृत भवति चोपादेयता। परं विस्मयसागरस्तदैव वेलां विगलति, यदाबुद्धिवादाभिनिवेशानां साहसं लौकिकबुद्ध्यचिन्त्यापरिमेयभावेष्वपि तत्त्वविनिश्चयात्तथैव न विरमति यथा लौकिकभावेषु। परन्तु बुद्धिवादकलितान्तःकरणैः कदापि न विस्मर्तव्यं यदचिन्त्याऽपरिमेयभावानां धर्मादीनां निर्णये शास्त्रमेव अभवति, नानपेक्षितशास्त्रः कर्कशस्तर्कः—"तस्माच्छास्त्रं प्रमाणं ते कार्या-कार्य व्यवस्थितौ"। तर्कस्य वार्ता तावत् कोणे तिष्ठतु, अन्यानपेक्षप्रत्यक्षस्यापि मनाक् सामर्थ्यन्नास्ति धर्मादीनां पदार्थानां प्रामाण्ये, यतो हीन्द्रियसंयुक्तानां तत्तदिन्द्रियग्राह्यतत्तद्गुणानां द्रव्याणामेव प्रत्यक्षविषयत्वेन विद्यमानोपलम्भनत्वाद्भविष्यति धर्मेऽरूपे ब्रह्मणि च प्रत्यक्षविषयता गगनकुसुमायिता भविष्यति, यद्यपि श्रेयस्करभाष्ये गोदानादि द्रव्यं, यागादि क्रिया, नीचैस्त्वादिगुणश्च फलसाधनत्वेन धर्मशब्देनोच्यते नापूर्वादि। य एव श्रेयस्करः स एव धर्मशब्देनोच्यते। न केवलं लोके, वेदेऽपि, "यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासान्" इति यजति शब्दवाच्यमेव धर्मं समामनन्ति। तेषाञ्चैन्द्रियिकत्वात्, धर्मस्य प्रत्यक्षविषयता वज्रलेपायत एव। तथापि तेषां फलसाधनस्वरूपेण धर्मताऽस्ति, फलञ्च जन्मान्तरभावीति—प्रत्यक्षगोचरता धर्मस्वरूपेण शशशृङ्गायमाणैवास्ति।

उक्तञ्चैतत्—

"द्रव्यक्रियागुणादीनां धर्मत्वं-स्थापयिष्यते ।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ॥१॥
श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते ।
ताद्रूप्येण तु धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥२॥"

"धर्मः स्वनुष्ठितः पुंसाम्" "धर्मः क्षरति कीर्त्तनात्" इत्यादिस्थाने यागादेरेव धर्मत्वस्य मीमांसा शास्त्रेण व्यवस्थापनात्, अन्यैः सर्वैश्च तथैवाभ्युपगम्यते। यद्येतादृशे प्रसङ्गे तर्कस्य कर्कशाकरे धर्मस्य शिखा स्यात्तदा वराकस्य धर्मस्य दुर्दशैव स्यात् -

यतो हि यागत्व स्वर्गसाधनत्वयोर्व्याप्यव्यापकभावस्य क्वाप्यगोचरीकृतत्वेन "प्रमाणेन निश्चितायां व्याप्तौ साधनं साध्यं निश्चिनोती"ति नियमात् व्याप्तिग्रहाभावेन, तन्मूलकस्यानुमानस्यापि निरासात्, साहचर्य नियमस्य व्याप्तेरभावात्। वह्निधूमयोर्भोजनशालायां गृहीतमेव साहचर्यं पुरस्कृत्य पर्वते वह्निरनुमीयते धूमात्। युक्तिवादिनो नास्ति तद्वदिहापि। एवञ्च व्याप्ति ग्रहाभावेऽवशैस्तर्कैकशरणैरत एव तार्किकैर्वक्तव्यं भवेत् "यद् वह्निरेव दहति न जलमिति स्वभाव एव प्रमाण मि"ति, न किमपि युक्त्यंतरं समुपस्थाप्येत, तथैव यागः स्वर्गसाधनम्, यागत्वात् (स्वभावात्) इति यागस्य कश्चन स्वभाव एव तादृशो येन स्वर्गं प्रापयतीत्येव तैर्वक्तव्यं भवेत्। परन्तु-अग्नेर्दाहकतायाः प्रत्यक्षसिद्धत्वेन वह्नेर्दाहजननस्वभावस्य सोरस्ताडं प्रतिपादयितुं शक्यत्वेऽपि यागे स्वर्गसाधनताया अप्रत्यक्षतया यागः स्वर्गसाधनस्वभाव इति निवेदयितुं मुखमपि कथमुद्घाटितम्भवेत्। यदि आगमात् यागत्वस्वर्गसाधनत्वयो र्व्याप्यव्यापकभावं विनिश्चित्यानुमितीच्छन्त्यनुमितौ प्रवृत्तिश्चेत्तदा नास्त्यस्माकं काचनापि विप्रतिपत्तिः प्रत्युत महान् प्रमोद एव। सम्यगुक्तम्:—

"हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्"

अतएव साधूक्तं महावैयाकरणेन भर्तृहरिपादेन—

"हस्तस्पर्शादिवांधेन विषमे पथि धावता ।
अनुमानप्रधानेन विनिपातो न दुर्लभः ॥
(ब्रह्म का० ४२ श्लोकः)

जैमिनीयं मीमांसाशास्त्रमपि तदेव प्रतिपादयति— "आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" अस्येदं तात्पर्यं यत् आगमानपेक्षशुष्कतर्कस्य न किमपि मूल्यम्। एतत्सर्वं मनसि निश्चित्य प्रोक्तं—

"न चागमादृते धर्मस्तर्केण व्यवतिष्ठते"
वाक्यपदी०, ब्रह्म का० ३० श्लोकः।

योगाभ्यासजनितसंस्कारविशेषभावनाबलाज्जात-- योगिप्रत्यक्षं धर्मनिर्णायकं भवेदित्यपि केषाञ्चिद् विदुषां मनोरथमात्रम्। भावना हि अनुभूतपदार्थगोचरनियतानुभूतेषु निश्चयरूपां स्मृतिं जनयति,सा च न प्रमाणं स्यात् यतो हि सा स्मृतिः। इदमत्राकूतं यत् ऋषीणां यद् अतीन्द्रियार्थविषयकं प्रातिभं ज्ञानं भवति तदपि आगममूलमेव न स्वोत्प्रेक्षामूलम्। आगमप्रतिपादितजपतपःस्वाध्यायाचरणपरिपूतात्मनामेव ऋषित्वेन आर्षज्ञानस्य प्रतिभासंज्ञकधर्मविशेषजन्यस्यागममूलकत्वमेव नितान्तमौचितीमादधाति। वैपरीत्ये तु ऋषिप्रणीतस्यागमत्वादागमप्रतिपादितस्याचरितुश्च ऋषित्वात् परस्पराश्रय आपतेत्—उक्तं च "एव यैः केवलं ज्ञानमिन्द्रियाद्यनपेक्षिणः। सूक्ष्मातीतादिविषय जीवस्य परिकल्पितम्। नर्ते तदागमात् सिद्धयेन्न च तेनागमो विना" (श्लोकवार्त्तिके।) उक्तार्थाभिप्रायेणोक्तम्-

"ऋषीनामपि यज्ज्ञानं तद्प्यागमपूर्वकम्।" (वाक्यपदीय) ब्र का ३०।

मास्तु तावत् यत्र तर्कस्य पादो न प्रसरति तत्र तर्केण धर्मप्रमिति परन्तु यत्र तर्कः सर्वथा समर्थ यथा "नरकपालं शुचि प्राण्यङ्गत्वात्" अग्निषोमीयपशुहिंसा नरकसाधनम् पीडाजनकत्वात्, ब्रह्मवधादिवत्, इत्यादिस्थले तर्केणैव धर्मप्रमितिः स्यान्नागमेन-इत्यपि केषाञ्चित्तार्किकल्पानां साहसमात्रमेव—यतो हि अस्य प्रश्नस्यापातत एव रमणीयता वर्तते सद्विचारनिकषोपले त्रपुतामेव भजेत्।

यतो हि अनादिकालतः शिष्टानां परम्परात अविच्छिन्नतया प्राप्तानि अत एव लोके प्रसिद्धानि धर्माधर्मादि–परोक्षवस्तु–निर्णायकानि श्रुतिस्मृति–प्रभृतिशास्त्राणि तर्केण न कदापि पराभवितुं शक्येरन्। लोकप्रसिद्धिपरम्परायाः पुरः तर्कस्य विद्वत्परिषदिनदेव मूल्यं भविष्यति यदेव कस्याश्चित् प्रामाणिकव्यक्तेः समक्षं कस्यचित्प्रमत्तस्य। अत आगमस्य तर्कद्वारा बाध्यता न स्यात्, प्रत्युत नरकपालस्य शुचित्वं यागीयहिंसाया अहिंसात्वं च प्रतिपादयतागमेनैव तर्कः पराभूयेत,

"धर्मस्य चाव्यवच्छिन्नाः पन्थानो ये व्यवस्थिताः।
न तांल्लोकप्रसिद्धत्वात् कश्चित्तर्केण बाधते ॥"

वाक्यपदीय ब्र श्लो ३१

येऽपि कर्कशतर्कैकशरणा अनुग्रहाद् धर्मं, पीडातोऽधर्मञ्चानुमिमते, तेषां पन्थानमाश्रयतां जनानां मधुपाने गुरुतल्पगमनेऽपि भूयान् धर्म प्रसज्येत, यतो हि तत्रापि भूयसी उपकारिता वर्तत एव।तस्मादनुमानेन परोक्षवस्तुनिर्णयेऽनर्थपरम्परामृगया न भवन्तु। तार्किकास्तदर्थं शास्त्रेण यन्निषिद्धं तदेवाधर्मः, यद्विहित तदेव धर्म. तथा यस्य कर्मणो यत् फलं प्रतिपादितं तदेव फलं नान्यदिति समीचीनं पन्थानमाश्रयितुमागममेवावलम्बन्ताम्। तादृश निश्चये तदेवोक्तम् भट्टपादेन "चोदनालक्षणो धर्मः" इति सूत्रे। श्लोकवार्तिकेऽपि

"धर्माधर्मावबोधस्य तेनायुक्तानुमानगीः।
अनुग्रहाच्च धर्मत्वं पीडातश्चाप्यधर्मताम् ॥१॥
वदतो जपहोमश्राद्धपानादौ नोभयं भवेत्।
क्रोशता हृदयेनापि गुरुदाराभिगामिनाम् ॥२॥
भूयान् धर्मः प्रसज्येत भूयसी ह्युपकारिता।
अनुमानप्रधानस्य प्रतिषेधानपेक्षिणः ॥३॥
हृदयक्रोशनं कस्मात् दृष्टां पीडामपश्यतः।
तस्मादनुग्रहं पीडां तदभावमपास्य च ॥४॥
धर्माधर्मिभिर्नित्यं मृग्यौ विधिनिषेधकौ।
तस्माद् यद् यादृशं कर्म यत्फलोत्पत्ति शक्तिकम्।
शास्त्रेण गम्यते तस्य तादृशस्यैव तत्फलम्।

न केवलमतीन्द्रियपदार्थविबोध एव तर्कस्यासफलता अनुभूयते प्रत्युत लौकिकेष्वपि पदार्थेषु तर्कस्य सैव दुरवस्था सर्वतो भासते। यदि कश्चन बुद्धिवादी स्वां बुद्धिमवलम्ब्य सोरस्ताडं प्रतिपादयेत् यत् "शीतस्पर्शेन जलमनुमेयम्, उष्णस्पर्शेन तेज." परन्तु मनोरथमात्रमेतत्तस्य यतोऽवस्थादेशकालभेदात् पदार्थानां शक्तिषु भूयान् भेदो दृश्यते। एवञ्च हेतूनां व्यभिचारात् अनुमिति शशशृङ्गायमाणा स्यात्। तथाहि अवस्थाभेदात् – बीजानां मूषिकानाघ्रातानामेवांकुरजननशक्तिर्नान्यथा पिपल्यौषधेरार्द्रस्य कफजननशक्तिः शुष्कस्य च त्रिदोषशमनशक्ति, यादृशं बलं यौवने न तादृशं

बलं परिणतवयसि। देशभेदात् जह्नुकन्याया एव शीतस्पर्शो न बलाहकाग्निकुण्डजलेषु। कालभेदात्- हेमन्ते कूपोदकमुष्णं ग्रीष्मे च शीतम्, ग्रीष्मे अग्नेरत्युष्ण' स्पर्शो न तथा हेमन्ते एवं भूयान् भेदो गणयितुमशक्यः। एवञ्च जलत्वसाधनेन उष्णत्वस्य शीतत्वस्य वा नानुमानं कर्त्तुं शक्यते तत्र तत्र व्यभिचारात्। अनुमातारो दृढं विश्वसन्ति यद् धूमो वह्नि न व्यभिचरति परन्तु इदन्तेषां विश्वासमात्रम्, अथवा अभिमानमात्रम्, अवस्था-देशकालभेदात् स्यादपि कश्चन तादृशो धूमो यो वह्निं व्यभिचरेदपि यथा शालूकादपि शालूको गोमयादपि। एवञ्च यदि लौकिकेषु पदार्थेषु एवमव्यवस्था तदाऽप्राकृतगम्ये पदार्थेऽनुमानस्य का दुरवस्था स्यात्। तत् साधूक्तं भर्तृहरिणा- 'हस्तस्पर्शादिवान्धेन विषमे पथि धावता। अनुमानप्रधानेन विनिपातो न दुर्लभः। (वा० ब्र० का० ४२ श्लोकः।)एतत्सर्वं पर्यालोच्यागमचक्षुरन्तरेण तर्कमात्रेण को मनीषी तत्त्वं निश्चेतुकामो भवेत्? तदुक्तम्- अवस्थादेशकालानां भेदाद् भिन्नासु शक्तिषु। भावानामनुमानेन प्रसिद्धिरिति दुर्लभा॥ वा० ब्र० ३२

शाङ्करभाष्येऽप्युक्तं "लौकिकानामपि मणिमन्त्रौषधिप्रभृतीनां देशकालनिमित्त वैचित्र्यवशाच्छक्तयो विरुद्धानेककार्यविषया दृश्यन्ते, ता अपि तावन्नोपदेशमन्तरेण केवलेन तर्केणावगन्तुं शक्यन्तेऽस्य वस्तुन एतावत्य एतत्सहाया एतद्विषया एतत्प्रयोजनाश्च शक्तय इति किमुताचिन्त्यस्वभावस्य'' तस्माच्छब्दमूल एवातीन्द्रियार्थयाथात्म्यावगम" इति।

अयं दहति वह्नित्वादित्याद्यनुमानेन दाहजनकत्वानुमितिरपि शास्त्रतत्त्वावगाहनापटुसरलानां परप्रत्ययनेयमतीनां प्रतारणमात्रमेव, मणिमन्त्रादीनां प्रतिबन्धकद्रव्याणां समवधानेऽग्नित्वस्य दाहजनकत्वव्यभिचारस्य शतशोऽनुभवात्। एवञ्च वस्तुस्वभावो नानुमानेनावगन्तुं शक्यतेऽपितु आगमादेव।

अतएवोक्तं भर्तृहरिणा—"निर्ज्ञातशक्तेर्द्रव्यस्य तां तामर्थक्रियाम्प्रति। विशिष्टद्रव्यसम्बन्धे सा शक्तिः प्रतिबध्यते"। वा० ब्र० ३३

सुकुमारमतीनां तर्कस्याव्यवस्थावार्ता तावत् कोणे तिष्ठतु महापुरुषाणां कपिलकणादादीनामपि परस्परमतिशयविप्रतिपत्तिदर्शनेन तेषामपि तर्काः नितरां दुर्व्यवस्थामेवाऽन्वन्ति प्रेक्षावतां मानसमानसे, यतो हि आजानबाहुमहर्षिकपिलपादैर्महता प्रयत्नेन प्रकृतिर्जगत्कारणत्वेनोत्प्रेक्ष्यते, प्रातःस्मरणीयैः कणादपादैः परमाणुः तथात्वेनो(जगत्कारणत्वेन)त्प्रेक्ष्यते। अन्नानुरूपैव बुद्धिर्भवतीति महर्षिकणादेन सत्यापितम्। अन्यैस्तर्कवादिभिरन्यथैव तर्क्यते। उक्तञ्च वाक्यपदीये "यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः। अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते" (वा० ब्रह्म का० श्लो० ३४) यतो यत्नेन निर्णीता अपि आगमानपेक्षाः पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का अव्यवस्थिता भवन्तीति नागमगम्येचिन्त्यापरिमेयपदार्थे केवलेन तर्केण प्रत्यवस्थातव्यम्। आह च भगवान् बादरायणः तर्काप्रतिष्ठानादिति।

# भारतीय संस्कृतेस्त्रय आदर्शाः

[ले० श्रीधरप्रसादपन्त 'सुधांशु' पालीभीत (उ० प्र०)]

वर्तमानयुगे सत्यपि अत्युन्नते भौतिकवादे सर्वे मनुष्याः वस्तुतः सुखिनः सन्ति किम्? न सन्ति, इत्येकमेव प्रत्युत्तरम्।

अद्य मानवस्तु प्रतिक्षण-कामस्य, क्रोधस्य, लोभस्य, मोहस्य, तृष्णायाः, वासनायाः अशान्तेस्तथा मदस्य, मत्सरस्य, वैरस्य, हिंसायाः, अत्याचारस्य, अनाचारस्य, अनैतिकतायाश्च भीषणविभीषिकायां दह्यते।

साम्प्रतिको मानवस्तु सर्वत्रैव दुःखस्य, कष्टस्य एवं अशान्तेरेवानुभव करोति। परन्तु किमर्थम्?

अस्य कारणमिदं यत् मनुष्यः भौतिकवादस्य प्रचण्डे, किन्तु, क्षणिकप्रकाशे, आध्यात्मवादस्य शाश्वतम् एवं दिव्यम् प्रकाशं विस्मृत्य-चाहर्निशं विषयाणां सेवनं करोति। अस्माकं प्राचीनऋषि-महर्ष्यादयः 'विषयाः विषवत् त्याज्याः' इत्यकथयन् तानेवाऽमृतवत् सेवते। अहो! साम्प्रतम् मानवस्तु शरीरं त्यक्त्वाऽपि शलभवत् विषयान् प्रति आकर्षितोऽभूत्। किन्तु अनया पद्धत्या शान्तेः कामना तु मृगमरीचिका एवास्ति। दण्डनीतिकारेण महात्मना चाणक्येन सत्यमेव उक्तम्। यथाः—

"यो ध्रुवाणि परित्यज्य,
अध्रुवं परिषेवते।
ध्रुवाणि तस्य नश्यन्ति,
अध्रुवं नष्टमेव हि॥"

सुखम् एवं शान्तिस्तु मानसिकसन्तुलने एव सन्निहितास्ति। गीतायां भगवता योगेश्वरेण श्रीकृष्णेन मनसो विषये उक्तम्—

"अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते"

अर्थात् शनैः शनैरभ्यासेन एवं वैराग्यप्रवृत्या मनः वशवर्ति भवति। यदास्माकं मनः वशवर्ति भविष्यति तर्हि स्वतः सर्वत्र सुखानुभूतिर्भविष्यति।

किन्तु किञ्चित् कठिनकार्यमेतत् अस्माकम्, यतः चञ्चलचित्ताः स्म मानवा वयम्, अस्माकम् समक्षे द्वौ मार्गौ स्तः। एकः श्रेयसो द्वितीयः प्रेयसश्च। वयं तु श्रेयो हित्वा प्रेयो गृह्णीमः, मणिं त्यक्त्वा काचस्य संग्रहं कुर्मः।

उक्तञ्चः—

"श्रेयश्च प्रेयश्च मनुष्यमेत-
स्तौ सम्परीत्य विविनक्ति धीरः।
श्रेयो हि धीरोऽभि प्रेयसो वृणीते,
प्रेयो मन्दो योगक्षेमाद्वृणीते॥"

(कठोपनिषद् १।२।२)

अतएव गङ्गाप्रवाहवत् प्रवहमानस्य सुर्लभमानवजीवनस्य सदुपयोगः कर्तव्यः। मानवजीवनस्य नश्वरतायाः सम्बन्धे कविता-वनिता कान्तेन-महाकविना भर्तृहरिणा उक्तम्।

"भोगा न भुक्ता वयमेव भुक्ता-
स्तपो न तप्तं वयमेव तप्ताः।
कालो न यातो वयमेव याता-
स्तृष्णा न जीर्णा वयमेव जीर्णाः॥"

(वैराग्यशतक—१२)

अतः साम्प्रतिके युगे अस्य महती आवश्यकतास्ति यद्वयं स्वातीतवाङ्मयस्यानुसरणं कुर्मः अस्माकं भारतीय संस्कृते आदर्श-त्रयम् अस्ति जीवने येषामुप-

योगोऽत्यावश्यकोऽस्ति भारतीयानां कृते अस्माकम् संस्कृते अतिपुनीतास्त्रय आदर्शाः निम्नाः सन्ति यथाः—

| | |
|---|---|
| १—दमनम् | १—त्यागः |
| २— दया | २—तपस्या |
| ३—दानम् | ३—तपोभूमिः |

अधुना वयं उक्तम् आदर्श-त्रयम् नितान्तं विस्मृत्य पुनरपि विषयाणां शुष्कमरुभूमौ सुखस्वरूपिणीं भागीरथीं अवलोकयामः। इदमस्माकं नितान्तं मूर्खतायाः प्रमाणं नास्ति किम् ?

अद्यापि यत्र अस्मानभितः स्वार्थपरतायाः नृशंसतायाः, इन्द्रियलोलुपतायाः, असत्यतायाः, धूर्ततायाः, पाखण्डतायाः, प्रवञ्चनायाः, अत्याचारस्य, अनाचारस्य च नग्ननृत्यम् भवति, तथापि वयं पवित्रधराधाम्नि भारतेऽस्मिन् पुनः सुखस्य, शान्तेः, सौहार्दस्य च त्रिवेणीं प्रवाहयितु दमनम् (इन्द्रियनिग्रहः) दयाम् (आत्मवत्सर्वभूतेषु) एवं दानम् (त्यागः) स्वदैनिकजीवनस्य प्रमुखं अङ्गं विधाय भारतं विश्वराष्ट्राणां रङ्गमञ्चे (अन्तर्राष्ट्रिय) गौरवमये गुरुपदे प्रतिष्ठापयामः।

आशास्महे यत् सर्वतन्त्र स्वतन्त्र-भारतराष्ट्रस्य नागरिकाः स्वोज्वलभविष्यं निर्मातुं स्वजीवने भारतीय संस्कृतेरादर्शत्रयस्य दैनिकोपयोगं विधाय राष्ट्रम्प्रति स्वकर्तव्यस्य पालनं करिष्यन्ति, येन भारतराष्ट्रम् समृद्धिशालि, गौरवशालि च भविष्यति, तथा भारतीयाः अयतिसुगमेनोपायेन जीवनस्य परमोद्देश्यं मोक्षपदं लप्स्यन्ते इति।

# आयुर्वेदीयचिकित्साप्रणाली, यूनानीचिकित्सापद्धतिश्च

—सहसम्पादक

भारते वहोः कालात्सेयमालोचना शिक्षितजनतायां प्रवृत्ता यत् भारतसर्वकारस्य स्वास्थ्यचिकित्सामन्त्रालयो देशीयचिकित्सापद्धतिं प्रति सापत्न्यव्यवहारं पुष्णाति। स्वल्पकालात्पूर्वम्–अखिलभारतस्य स्वास्थ्यमन्त्रिणी श्रीराजकुमारी अमृतकौरमहोदया 'आयुर्वैदिक–यूनानी वोर्डानां' तृतीयस्य अखिलभारतीयसंमेलनस्य उद्घाटनावसरे आयुर्वैदिकचिकित्सापद्धतेः प्रचुरामालोचनां कृत्वा तदिदं वहुतरं समर्थयितुं प्रायतिष्ट यत् सर्वकारस्य दृष्टिः आयुर्वेदीयचिकित्सां प्रति सापत्न्यव्यवहारकलुषिता कथमपि नास्ति। किन्तु आयुर्वेदीय चिकित्साप्रणाल्यां विशदान्वेषणस्य, तथा प्रशिक्षणस्तरस्य उन्नमनाय प्रकाममावश्यकता।' अवश्यं विचारशीलां निष्पक्षपाताः पुरुषा आयुर्वेदपद्धत्यामन्वेषणादेरावश्यकतां स्वीकुर्वन्ति। किन्तु तदिदं तदैव संभवेद् यदा भारतसर्वकारः स्वदेशीयपद्धतेः संमानं च उपयोगितां च स्वीकुर्यात्।

देशीयचिकित्सापद्धतेः प्रगतिर्या साम्प्रतमवरुद्धा तस्येदमेव कारणमस्ति यत् वैदेशिकशासनकाले एतस्याः पद्धतेः प्रकाममवहेलनाऽभूत्। एतस्यै प्रणाल्यै प्रोत्साहनप्रदानस्य कथा दूरमास्ताम्, किन्तु येन केनापि प्रकारेण देशीयचिकित्सापद्धतीनामभिभवाय प्रयत्नः कृतोऽभूत्। एवमवस्थायामपि यदि निष्पक्षपातयादृष्ट्या वीक्ष्येत तर्हि देशेऽस्मिन् परोलक्षा पुरुषा प्राचीनचिकित्सापद्धतिं प्रति सांप्रतमपि श्रद्धाशालिनः सन्ति, प्रतिवर्षं च परोलक्षाः पुरुषाश्चिकित्सयाऽनया लाभमासादयन्ति। एवमवस्थायामस्याः पद्धतेर्भारतेऽस्मिन्नुपयोगिता स्वतएव प्रमाणिता भवति। इदानीमावश्यकताऽस्ति पद्धतेरस्या प्रचारस्य च विकासस्य च। यावत्प्रमाणे सेयमायुर्वैदिकपद्धतिः सर्वकारद्वारा, जनताद्वारा च प्रसारमासादयेत्तावदेव पद्धतेरस्या उपयोगिता प्रतिपदं प्रवर्धेत, लाभश्चोत्तरोत्तरं प्रभवेत्।

एतदर्थं समयानुसारीणि अन्वेषणानि शासनाधिकारिभिः, समर्थैर्वैद्यैश्च कर्तव्यानि भवेयुः। प्रशिक्षणस्य पद्धतिर्यस्मिन् स्तरे प्रचलति तदपेक्षया उच्चीकरणस्याप्यपेक्षा समुद्भवेत्। किन्तु सर्वमिदं तदैव संभवेद् यदा देशस्य शासकाः शिक्षाधिकारिणश्च तामिमां पद्धतिं स्वीकुर्युः। एतदर्थं पद्धत्यामस्यां पूर्णविकासस्य प्रयत्नाः प्रवर्तेरन्। भारते पाश्चात्यचिकित्सापद्धतेः पूर्णतया प्रचारः प्राऽभवत्, प्रभवति च। लाभोऽपि युगानुसारं भवत्येवेति मन्तव्यमेव भवेत्। किन्तु सेयं पाश्चात्यचिकित्सापद्धतिरेतावन्महर्घाऽस्ति यद् भारतसदृशे साधारणदेशे सर्वसाधारणो नाऽनया पद्धत्या पूर्णलाभमासादयेत्। अस्माकं दीनदेशे, विशेषतश्च ग्रामेषु, सैव चिकित्सापद्धतिर्लोकानामुपयोगिनी संभवेद् या हि देशस्य जल-वाय्वोरानुकूल्येन सह समर्घाऽपि भवेत्। ततश्च यदि शासकाः समस्तानामपि देशवासिनां स्वास्थ्यसंपत्तये चिकित्सायाः सुव्यवस्थां कर्तुमभिलषन्ति तर्हि आयुर्वेदीयचिकित्सापद्धतेः एवं यूनानीभैषज्यप्रणाल्याश्च सर्वस्मिन्नपि देशे प्रचुरः प्रचारः कर्तव्यः स्यात्। येषु येषु स्थानेषु च सेयं देशीयपद्धतिः प्रचलति तत्र तत्र तस्यै प्रचुरं प्रोत्साहनं च देयं स्यादिति।

# वेदानां पौरुषेयाऽपौरुषेयत्वविचारः

(ले० गजाननशास्त्री मुसलगावकर)

वेदानां पौरुषेयत्वापौरुषेयत्वविचारे को नाम वेदः ? तस्य किं लक्षणम् ? कियान् वेदग्रन्थः ? स च पौरुषेयो न वा इत्याद्यो बहवः प्रश्ना प्रादुर्भवन्ति ।

तत्र मंत्रब्राह्मणात्मकः शब्दराशिर्वेद इति वेदस्वरूपमामनन्ति । स च वेद्यन्ते धर्मादयश्चत्वारः पुरुषार्था अनेन इति व्युत्पत्त्या निष्पन्नः । तल्लक्षणं च—इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो बोधयति स वेद इति । अमुमेवाशयं प्राञ्च आचार्याः समग्रहीषुः पद्येनैकेन । यथा—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥ इति

तत्र मंत्रभागस्यैव वेदत्वमभिप्रैति स्वामिदयानन्दः । परन्तु वेदव्याख्याने, वेदार्थोपबृंहणे वैदिककर्मानुष्ठानप्रतिपादने व्यापृताः प्रातःस्मरणीयचरिताः प्राचीनमहर्षयो बौधायनापस्तम्बकात्यायनादयः परिभाषा कथनावसरे 'मन्त्रब्राह्मणयोर्वेदनामधेयमि'ति मुक्तकण्ठं समुद्घोषयन् । वेदभाष्यप्रणेतारः सायणादयोऽपि इदमेव मतमनुसरन्तीति वेदभाष्यश्रौतसूत्रादिषु कृतपरिश्रमाणां विद्वदग्रेसराणां पुरस्तान्न किञ्चिद् वक्तव्यमवशिष्यते । एवञ्च मन्त्रब्राह्मणात्मके शब्दराशौ वेदशब्दो रूढ इति परिणितिष्ठति । एतेन मंत्रभागमात्रस्य वेदत्वं वदन् स्वामिदयानन्दो निराकृतो वेदितव्यः ।

—स चायं वेदः पौरुषेयो न वेत्ययं प्रश्नः । तत्र प्रथमतः पौरुषेयवादिनां मतमुपन्यस्यते । ततस्तन्निराकरणपुरःसरं मीमांसकसम्मतं वेदानां विदुषां कीदृशोऽभिप्राय इति किञ्चित् प्रतिपाद्यते—

वैदेशिका विद्वांसो वेदं पुरातनमैतिहासिकं ग्रन्थंमन्वतेऽतः ऐतिहासिकदृष्ट्या ते वेदं समालोचयन्ति । तेषां विचारधारा ईदृशी वर्तते—वेदे नगराणां नामानि नदीनां नामानि स्त्रीणां पुंसां च तदीयान् व्यवहारांस्तात्कालिकं भौगोलिकं ज्ञानं खागोलिकं ज्ञानमित्यादिकं सर्वं प्राकृतदृष्ट्या समवलोक्य भारतीयानां हिन्दूशब्दवाच्यानामस्माकं ऋषिवंशप्रसूतानामितिहासप्रतिपादकोऽयं ग्रन्थ इति निर्धारयन्ति ।

अपि च कथयन्ति यदेतस्मिन् निर्णये भाषापरिज्ञानमप्यनुकूलमस्ति । ऋग्वेदे या भाषा, यजुर्वेदे सामवेदे च या भाषा तासां भाषाणां परस्परं भेदः शब्दसन्निवेशक्रमश्च विलक्षणोऽयमनुभूयते । अतः सर्वादौ ऋग्वेदस्य प्रादुर्भावः, अनन्तरं सामवेदस्य ततो यजुर्वेदस्येति वदन्तः स्वकपोलेन कञ्चन क्रमं कल्पयन्ति । किञ्च—तेषु तेषु मंत्रेषु विश्वामित्रवसिष्ठादयो ऋषयः स्मर्यन्ते, त एव वेदकर्तार इति उन्नयन्ति । अतो वेदः पौरुषेयो महर्षिभिः प्रणीतो भारतीयानां हिन्दूजातीयानामैतिह्यप्रातिपादक इत्यैकमुख्येन प्रतिपादयन्ति प्रचारयन्ति चेति ।

अत्र वयं वदामः— उपर्युक्तप्रकारेण वेदानामामायुष्कालनिर्धारणं पौरुषेयत्वव्यवस्थापनं चाविचाररमणीयमिति निश्चप्रचम् । यतो यस्य देशस्य इतिहासो वर्ण्यते, तत्रत्यो ग्रन्थस्तत्रत्या वेषभाषाऽऽचारव्यवहारसभ्यतासंस्कृत्याद्य ऐतिह्यनिर्धारणे परमम्प्रमाणं

भवन्तीति वैदेशिकानां विदुषां घण्टाघोषः। परमस्मिन् विषये भारतीयमाचारव्यवहारादिकं सर्वमपि एकपदेन निःकृत्य स्वमनीषानुसारेण कैश्चन हेत्वाभासैः समयनिर्धारणादिकमकाण्डताण्डवं वैदेशिकानाम्। तस्मात् वेदानां पौरुषेयत्वव्यवस्थापनमैतिह्यपरत्वञ्च सम्प्रदायबहुप्रमाणविरुद्धम्।

अत एव श्रुतिप्रतिपादितां शब्दसृष्टिमुपादाय प्रपञ्चस्य सृष्टिर्भगवता कृता। तया च--'स भूरिति व्याहरन्, भुवमसृजत्' इति श्रुतिः,

'सर्वेषाञ्चैव नामानि कर्माणि च पृथक् पृथक्।

वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥'

इतिस्मृतिश्च।

एवञ्च वेदे नदीनां, पुंसां, स्त्रीणां च नामान्युपलभ्य लोकेऽपि एतैर्नामभिर्व्यवहार इति ध्रुवं वक्तुं पार्यते। आचारश्चायं साम्प्रतमपि भारते समुपलभ्यते तस्मात् वेदविषये वैदेशिकानां समालोचनमविचारितरमणीयम्।

भारतीयदर्शनेषु नैयायिकप्रभृतयो वेदानां पौरुषेयत्वं मन्वते। तथा हि--अर्थं बुध्वा वाक्यरचनेति न्यायेन लौकिकेषु वाक्येषु प्रत्यक्षेण कर्ता समुपलभ्यते एवं वेदानामपि वाक्यसमुदायात्मकत्वेन पौरुषेयत्वम्। तथा चानुमानप्रयोगः--'वेदः पौरुषेयः वाक्यत्वात् भारतादिवत्' इति। किञ्च- लौकिकेषु वाक्येषु तात्पर्यज्ञानं कारणं तच्च तात्पर्यं पुरुषनिष्ठो धर्मः, एवं वेदेऽपि तात्पर्यज्ञानाश्रयत्वेन कश्चन पुरुषः स्वीकर्तव्यः, स एवेश्वरो वेदकर्ता इति वर्णयन्ति।

तत्रोच्यते--लौकिकेषु वाक्येषु कर्तारमुपलभामहेऽतो 'नहि दृष्टेऽनुपपन्नं नामे'ति न्यायेन पौरुषेयत्वमभ्युपगच्छामो वयम्। वैदिकेषु वाक्येष्वपि यदि कर्ता स्यादस्माभिरुपलभ्येत अध्येतृपरम्परया वा स्मर्येत। यतो नोपलभ्यते न वा स्मर्यतेऽतो वयमवगच्छामो यदुपलब्धियोग्यस्यानुपलंभात् नास्तीति निश्चिनुमो वयम्। प्रतिपक्षानुमानञ्चेदम्--''वेदः अपौरुषेयः उपलब्धियोग्यत्वे सति अस्मर्यमाणकर्तृकत्वात्'' इति।

किञ्च—नैयायिकादयः सामान्यतो दृष्टेनानुमानेन यङ्कंचन कर्तारमनुमाय स्वाभिमतं कर्तारं निक्षिपन्ति। केचिद्धिरण्यगर्भमपरे प्रजापतिमन्ये ईश्वरमिति।

श्रुतिश्च ब्रूते—अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद इति विरोधात् नैयायिकादिसम्मतं पौरुषेयत्वं न क्षोदक्षमनिति निर्धारयामो वयम्।

वेदान्तिनोऽपि—शास्त्रयोनित्वादित्यधिकरणे प्रथमवरणके ब्रह्मप्रभवत्वं वेदस्य वर्णयन्ति, उदाहरन्ति चेमां श्रुतिम्—

''अस्य महतो भूतस्य निश्वसितमेतद् ऋग्वेदो-यजुर्वेद इति। अतो वेदान्तिनामपि वेदानां पौरुषयत्वमेव सम्मतम्।

तत्र मीमांसका एवं राद्धान्तयन्ति यद् वेदा अपौरुषेया इति।

तेषामयमभिप्रायः—यत् भारतादिषु ग्रन्थेषु अध्येतृपरंपरया कर्तृत्वस्मरणमबाधितमनुवर्तते। वेदेषु पौरुषेयत्वमध्येतृपरंपरया न स्मर्यतेऽतः सर्वोऽप्युत्सर्गः सापवाद इति न्यायेन लौकिकानां वाक्यानां पौरुषेयत्वं भवतु नाम। वैदिकानान्तु अपौरुषेयत्वंकुतो नोपपद्यते, अध्ययनपरंपरया अनादित्वात् 'वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्। वेदाध्ययनसामान्यादधुनाध्ययनं यथा ॥' इत्यनुमानमत्र प्रमाणम्।

इदं चापौरुषेयत्वं पुरुषास्वातन्त्र्यमेव। अस्यायमभिप्रायः--यल्लौकिकेषु वाक्येषु आनुपूर्वीविरचने

पुरुषः स्वतन्त्रो दृष्टो न तथा वैदिकवाक्यानुपूर्वीकरणे। अत पुरुषास्वातन्त्र्यमेव अपौरुषेयत्वमिति। यथोक्तं भट्टपादैः —

"यत्नत प्रतिषेध्या न पुरुषाणां स्वतन्त्रता।" इति।

अपि च कल्पसूत्राधिकरणे—कल्पसूत्रापेक्षया वेदानां वैलक्षण्यं प्रतिपादयन्तो वार्तिककारा 'अग्न आयाहि वीतये' इत्यादिकाऽऽनुपूर्वी पुरुषैः कर्तुं न शक्यत इत्यादि वदन्तोऽन्त एवमुपराञ्जुः।

एवञ्च यदाध्येतारोऽध्यापयितारः पार्श्वस्था वा वेद पदवाक्यतदर्थरूपाणि आलोचयन्ति तदा स्वसंवेद्यमेवापौरुषत्वमध्यवस्यन्ति। तदानीं बाह्यतार्किकाणां प्रतीतिभावना नोत्पद्यत इति। तत्तत्प्रतिपादनक्षमवेदोत्थापित न्यायोपनिबन्धनान्मीमांसकैः केवलं यश एव पीतमित्यतो वेदानामपौरुषेयत्वमिति सम्मतः पक्ष।

अत्रेदं विचारमर्हति—यदस्माकं पुराणग्रन्थेषु ऐतिहासिकग्रन्थेषु च भारतभागवतादिषु अर्वाचीनैरैतिहासिकग्रन्थेषु चेदमवगम्यते–वेदः केनचिन्न प्रणायि, किन्तु कालमाहात्म्यादध्येतृपुरुषक्षयाद् वा देशोत्सादाद् वा वैदिकसम्प्रदायो यदा ह्रसिमानमुपैति, अपचीयते च वैदिको धर्मस्तदा भगवान् करुणावरुणालयो नारायणः केनचिद् पुरुषरूपेणावतीर्य वैदिकसम्प्रदायं प्रवर्तयति। तत्र भगवान् श्रीकृष्णो दत्तात्रेयरूपेण भुवि समवतीर्य वेदसम्प्रदायं ररक्षेति भागवतादौ कथोपलभ्यते। अमुमेवाशयं माघकवी राजसूयवर्णनप्रसंगेन वर्णयामास। यथा—

'सम्प्रदायविगमादुपेयुषीरेप नाशमविनाशिविग्रहः।
स्मर्तुमप्रतिहतस्मृतिश्रुतीर्दत्त इत्यभवदत्रिगोत्रजः॥'

अतो वेदसंप्रदायप्रवर्तनाय भगवान्नारायणो दत्तात्रेयरूपेणावततारेति सुविशदमवगम्यते।

अपरश्च तादृश काल उपस्थितो यस्मिंश्च काले पुरुषाणां बुद्धिमांद्यात् आशयदोषात्, करालस्य कले दौर्पाद्वा वैदिकसम्प्रदाये ह्रासमुपेयुषि भगवान् कृष्णः कृष्णद्वैपायनरूपेण भुवि समवतीर्य वेदान् विभज्य वैदिकसम्प्रदायं प्रवर्तयामास। तथा च—

'पराशरात्सत्यवत्यामंशांशकलया विभु। अवतीर्णो महाभागो वेदांश्चक्रे चतुर्विधम्॥' ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गश, चतस्रः संहिताश्चक्रे मंत्रैर्मणिगणा इवेति।'

अनेनेदमवगम्यते यद् वेदव्यासेन शाखाविभागमुखेन वैदिकसम्प्रदायोऽपचीयमानो यथापूर्वं प्रावर्तीति।

एतावता प्रमाणकलापेनेदमायाति—वेदकर्ता कोऽपि नास्ति किन्तु सम्प्रदायप्रवर्तका एवेति। तथाच—

'युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षय। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा॥' शिवाद्या ऋषिपर्यन्ताः स्मार्तारोऽस्य न कारका।' इति।

उपरितनाद्विचाराद्यमर्थः पर्यवस्यति—

१. ऋषिकर्तृका वेदा इति।
२. ईश्वरकर्तृका वेदा इति।
३. अपौरुषेया वेदा इति।

तत्र प्रथमं मतं वैदेशिकानान्तदनुसारिणां तद्वासनावासितान्तःकरणानां केषाञ्चिदुपेक्षणीयम्। ऋषिशब्दनिर्वचनदर्शनात्। तथाहि—'ऋषिर्दर्शनात् स्तोमान् ददर्शेत्यौपमन्यवः—तपस्यमानान् ब्रह्मस्वयंभ्वभ्यानर्षत् ऋषयोऽभवंस्तदृषीणामृषित्वमिति विज्ञायते"॥

(नि. नै कां अ कृ. ११)

द्वितीयं मतं सांख्यमीमांसकभिन्नानां दार्शनिकानाम्

तृतीयं मतं कर्ममीमांसकानाम्

## हिमालयाञ्चले
# बदरीनाथयात्रा

वर्तमानसमयपर्यन्तमपि भारतवर्षमिदं धर्मप्रधानो देश, । अत्र हि सनातनधर्मं वंशपरम्परातः सेवमानानां धार्मिकाणां भूयसी संख्या । धार्मिकसमाजे च तीर्थयात्रा जीवनस्य सफलीकरणाय प्रधानमङ्गम् । तीर्थेषु अपि चतुर्धाम्नां यात्रा सुप्रथिता, अद्यावधि प्रचलिता च । चतुर्धामसु श्रीजगन्नाथ–श्रीरामेश्वर-श्रीद्वारकाधाम–श्रीबदरीनाथेति सर्वतः प्रसिद्धानि । साधारणोपि गृहस्थः स्वजीवने धार्मिकक्षेत्राणां यात्रा कृत्वा आत्मानं कृतार्थं मनुते । जीवनपर्यन्तमपि धनार्जनं कृत्वा येन केनापि प्रयत्नेन तीर्थयात्रां विदधाति । तीर्थयात्रार्थं पुरा ग्रामाणां नगराणां च जनाः संघीभूय पर्यटन्ति स्म । यतो हि नासन्पुरा यात्रार्थं रेलशकट्यादीनि यानानि । अत एव प्रायः पद्भ्यामटन्तो जनास्तीर्थयात्रापुण्यमर्जयन्ति स्म । किन्तु यत. प्रभृति भारते रेलशकटी–मोटर-प्रभृतीनां सौकर्यमभूत्तदाऽऽरभ्य सेयं तीर्थयात्रा जनानां कृते सुतरां सुकरा समभवत् । किं बहुना, संप्रति तीर्थयात्रायाः कृते विशिष्टा शकटी (स्पेशलट्रेन) अपि रेलशकटिविभागेन प्रवर्तिता । किन्तु श्रीजगदीशादिधाम्नां कृते एव सेयं शकटियात्रा सुविधाऽऽवहा । बदरीनाथयात्रा तु हरिद्वारपर्यन्तमेव रेलशकटिविश्रमात् सर्वेषां यात्रिणां कृते कठिना । विशेषतश्च यात्रायामस्यां भूमण्डले सर्वापेक्षया समुन्नतो हिमालयः समारोहणीयो भवति । पर्वतारोहणे च भूयसः श्रमस्य, बलस्य, समयस्य चापेक्षा । अत एव सर्वेपि यात्राभिलाषुका बलवदिच्छायां सत्यामपि न सर्वस्मिन् काले स्वतन्त्रतया गन्तुं प्रभवन्ति ।

यतो हि बदरिकाश्रमः सोयं समुद्रतलात् २०२४० 'फीट' मितः समुन्नतोऽस्ति । स हि अतिसमुन्नते हिमगिरेः शिखरेऽवस्थितः । एकस्मिन् वर्षे षण्मासान् यावत् बदरीनाथदेवस्य मन्दिरमिदं हिमाच्छादितं भवति । किन्तु ग्रीष्मकाले तदिदं दिव्यदर्शनं देवविभूतेरन्वेषकाणां कृते दिव्यतया देदीप्यमानं भवति । यथा हि भवाटव्यामितस्ततो बंभ्रम्यमाणानां जीवानां कृते स्वर्गस्य प्रवेशपत्रं प्रदातुमेव दिव्यतीर्थस्याऽस्य जागरणं मन्ये जातं स्यात् । प्रतिवर्षं वैशाखमासे (मईमासे) दिव्यमन्दिरस्याऽस्योद्घाटनस्य संवादं समाचारपत्रेभ्यः प्राप्नुवन्ति यात्रार्थिनः । वैशाखस्याऽक्षयतृतीयां महत्या उत्कण्ठया प्रतीक्षन्ते ते यात्रिण. । जलप्रपात–नानामहीरुहादिप्राकृतदृश्यैः सर्वेषां समाकर्षकमिदं दिव्यस्थलं बलात्प्रेरयतीव निजसमीपे समाक्रष्टुम् । किन्तु अद्यावधि यात्रायाः कृते सर्वविधसुविधानामभावेन तदिदं तीर्थं स्वास्थ्यस्य कृते नाऽऽसीत्तथाऽनुकूलम् । अत एव सांसारिककार्येभ्य' प्रतिनिवृत्य प्रायो वृद्धावस्थायामेव यात्रामिमां संपादयन्ति धार्मिकाः ।

### हरिद्वारम्

सर्वतः पूर्वं हरिद्वारमिदं बदरिकाश्रमे प्राप्तव्यस्य हरेर्द्वारमिव संमुखे उपस्थितं भवति । अत एवात्र साधा-

---

इदमपि विचार्यमाणं नैयायिकसम्मतं पौरुषेयत्वं मीमांसकसम्मतेऽपौरुषेयत्वे एव पर्यवस्यति । यत आनुपूर्वीविपर्यासकरणे ईश्वरस्यापि सामर्थ्यं नास्ति 'धाता यथापूर्वमकल्पयत्' इति मंत्रवर्णात् ।

अतः सूक्ष्मेक्षिकया प्रणिहितेन मनसा विचार्यमाणं सन्मीमांसकसम्मतं वेदानामपौरुषेयत्वमेवेति, सर्वतोपरि विराजते ।

रेणतया यात्रिणोऽस्मिन् स्थाने प्रायो दिनद्वयं दिनत्रयं वा तिष्ठन्ति। उभयोः पार्श्वयोः पर्वतघनैर्वेष्टिता गङ्गा, अनन्तकालाज्जागरूको दिव्यप्रहरीव प्रवहन्ती प्रतीयते। एतत्तीरगतं दृश्यमतिमनोहरं हृदयाकर्षकं च अत्र हि हरिपादुकास्थानं, ब्रह्मकुण्डश्चेत्यादिकपप्रोक्तं द्वीपमिवाऽवभाषते। एतदुपरि श्रीरामचन्द्र-श्रीगङ्गा-श्रीलक्ष्मीनारायणप्रभृतीनां मन्दिराणि यात्रिणां समूहैर्वेष्टितानि वीक्ष्यन्ते। सायंसमये हरिपादुकासमीपे भगवत्याः श्रीगङ्गाया आरार्तिकमतिदर्शनीयं भवति। सहस्रशो यात्रिणो गङ्गातटे समवयन्ति। पत्रपुटकेषु लघुलघून् दीपान् विन्यस्य भगवत्यां गङ्गायां प्रवाहयन्ति येन गङ्गावक्षः सर्वतो जाज्वल्यमानं भवति।

### हृषिकेशः

हरिद्वारे धार्मिककार्याणि समाप्य, यात्रिगणो हृषीकेशं प्रति प्रतिष्ठते, यद्धि स्थानमितश्चतुर्दशमीलमितदूरे। बदरीनाथयात्रायाः कृते आवश्यकानि वस्तूनि प्रायः अस्मिन्नेव स्थाने संगृह्णन्ति यात्रिणः। यथा पर्वतारोहणे सहायिका वंशयष्टयः, वर्षाजलप्रतिरोधकानि आवरणवस्त्राणि, कम्बलानि, अन्यानि वा पर्वतयात्रोपयुक्तानि वस्तूनि। हृषीकेशे गङ्गातटे अनेकानि मन्दिराणि, आश्रमाश्च सन्ति, येषु अनेके साधवः संन्यासिनश्चाधिवसन्ति। अत्रत्याः साधवः, अन्यस्थानापेक्षया अर्चनीया भवन्ति, यतोहि प्रायः एते वस्तुतो विरक्ता मुमुक्षवश्च भवन्ति। स्वल्पदूरे एव स्वर्गाश्रम स्थानमतिदर्शनीयं, यत्र सत्संगो हरिकीर्तनादिकं च प्रायशो भवति। हरित-भरितायां किन्तु उच्चावचायां भूमौ प्रवहन्ती श्रीमती गङ्गा जलकलकलध्वनिमिरपूर्णा यात्रिणां हृदये प्रतिध्वनिमिवोत्पादयति। हृषीकेशस्थाने प्रायो यात्रिणां समूहः सर्वदा समवेत इव विलोक्यते

# सम्पादकीयम्–

**धर्मप्राणस्य स्वामिरामचन्द्रवीरस्य एकपञ्चाशद्दिवसानामनशनम् !!**—राजस्थानभूमिर्धर्मप्राणानामार्याणां संस्कृतिविषये आदर्शभूमिः। अत्रत्यैः शासकैः क्षत्रियैर्निजप्राणानां बलिमपि दत्वा भारतीया संस्कृतिः संरक्षिता। आर्यसंस्कृतेश्च गावो ब्राह्मणाश्च प्राणभूता इति जानन्ति सर्वेपि। किन्तु न केवलं भारते एव, अपितु गोब्राह्मणसंरक्षकाणां क्षत्रियराजन्यानां



जीवनभूमौ अस्मिन् राजस्थानेऽपि गोवंशस्य प्रत्यक्षं विनाशः, तदीय-संचरणभूमेर्विलोपश्च संदृश्यते। बीकानेरन्निकटे मोटासरस्थाने १५५ गावो वृषभाश्च विपाटिताः। करणपुरे ६०, उदरामसरे ८, एवं गङ्गापुर (जंक्शन स्य समीपेऽपि गवां हिंसनं संजातम्।

जयपुरप्रान्तस्य छापडा, रामपुरा, सीकरसमीपभूमौ या किल गोचरभूमिरासीत् तस्यां कृषिः प्रारब्धा। एवमेव बीकानेर–जोधपुर–अलवर–भरतपुरप्रभृति-राजस्थानी-यप्रदेशेष्वपि गोचारणभूमौ कृषिः प्रारब्धा येन गो-वृषभाणां चरणस्य न मनागपि सुविधा। पूर्वं हि राजस्थानभूमितो बहिः गवां नयनस्य, विक्रयणस्य चासीत्प्रतिबन्धः। किन्तु वर्तमानकाले सुस्पष्टं गोवृषभादीनां विक्रयस्य कृते मेलका भवन्ति। येभ्यो गोवंशं नीत्वा बहिः प्रदेशेषु गवां सुस्पष्टं विलयाय चेष्टन्ते धनलोभिनो विधर्मीयाः। एवमेव गोचारणभूमेरुपर्यपि भूमिकरो दातव्यो भवति, येन गोवंशस्य निर्वाहे महत् संकटमिवोपस्थितम्।

गोवंशस्योपरि एवंविधान्यनेकानि संकटानि संवीक्ष्य धर्मप्राणेन वीररामचन्द्रेण एकपञ्चाशद्दिनानामनशनमवलम्बितं, येन आर्यसंस्कृतेरभिमानं वहन्तो राजस्थानीयाः शासकाश्च, निवासिनश्च त्वरितमेव गोवंशोच्छेदस्य मूलघातं कुर्युः। तदिदमनशनव्रतं जन्माष्टमीमारभ्य प्रचलितम्। सांप्रतं रामचन्द्रवीरस्य शारीरकी परिस्थितिः संकटापन्ना श्रूयते। निष्ठीवनेन सह मुखतो रक्तमपि निःसरति। आर्यभूमौ राजस्थाने धर्मरक्षायाः कृते

---

अत्रत्यासु धर्मशालासु बहुषु समयेषु स्थानप्राप्तिरपि यात्रिणां कृते दुर्लभा भवति। किन्तु 'कालिकमलीवाला' इति सर्वतः प्रख्यातस्य महात्मनो धर्मशाला न केवलं हृषीकेश एव, अपि बदरीनाथस्य सर्वस्मिन्नपि प्रान्ते, यात्रिणां विश्रामोचितेषु ग्रामेषु सन्ति। निःसहायाः साधवः, अन्ये च दीनाः 'कालीकमलीवाला' स्थानाद् भोजनं स्थानादि सौकर्यं चोपलभन्ते। 'कालीकमलीवाला' सत्रस्य अत्रैव प्रधानं कार्यक्षेत्रमस्ति, यस्मात् स्थानात् भोजनादेरनुमतिपत्रं प्राप्नुवन्ति साधवः।

क्रमशः

यद्येवं प्रत्यक्षमपघातः स्यात्तर्हि सेयं राजस्थानस्य सुस्पष्टा धर्मक्षतिः, मर्यादाविच्युतिश्च। जनताप्रमुखाः साम्प्रतमवधानपुरस्सरमेतस्य प्रतीकारं कुर्यु रिति विश्वसिमः। अनशनानुष्ठानस्य स्थानं "सिरहड्योढी रथ्यायां 'चेलोंका मन्दिर' (जयपुरनगरम्)"

**भारतप्रधानमन्त्रिणः श्रीनेहरूमहोदयस्य अरबप्रदेशे अभूतपूर्वं स्वागतम्**--श्रीनेहरूमहोदयः सर्वस्मिन्नपि भूमण्डले शान्तेरुपासकः, दूतो वा परिगण्यते नूनमिति जानन्त्येव राजनैतिकाः। वर्तमानकाले भूमण्डलस्य सर्वाण्यपि राष्ट्राणि भारतप्रधानमन्त्रिणमिम नेहरूमहोदयं निजनिजदेशे ससम्मानमामन्त्रयन्ति। महता समारोहेण चास्य स्वागतं कुर्वन्ति। किञ्चित्पूर्वं चीनराष्ट्रे-रूसराष्ट्रे चास्य सेयं शान्तियात्रा परिज्ञातैव मनाक् संवादपत्रपाठकैः। अधुना महाभागस्याऽस्य अरबनगरंप्रति यात्रा, अभूतपूर्वं स्वागतं च प्रत्येकभारतीयस्य प्रमोदाय भवेत्। सितम्बरमासस्य २४ तारिकायां महाभागोऽयं भारतराजधानी-देहलीतः स्वदलेन सह प्रस्थितोऽभूत्। भारतीयवायुसेनाया विशिष्टं विमानं 'राजहंस' भारतीयं राष्ट्रध्वजं गगने प्रसारयन् प्रातरष्टवादने अरबदेशं प्रति प्रातिष्ठत। द्वितीयदिने (२५ तारिका) सायं सपादसप्तवादने 'रियाध' स्थाने सोयं महाभागः ससमारोहं प्रापत्। तत्र हि विमानविश्रमस्थाने युवराजः अमीरफैजलः, साऊदी अरबस्य प्रधानमन्त्री च नेहरू महोदयस्याभ्यर्थनामकुरुताम्। वायुयानस्य विश्रामस्थानेऽस्मिन् अपारा जनता नेहरूदर्शनार्थमुत्कण्ठिताऽऽसीत्। यथैव नेहरूमहोदयो विमानादवतीर्य भूमौ पदं न्यधात् तथैव परःसहस्रलोकानां करतलध्वनिभिर्गगनमगुञ्जत्

परितः "ओः शान्तेदूत नेहरू ! वयं तव स्वागतं कुर्मः" [मरहाबा नेहरू रसूल उल् सलाम] इति हर्षध्वनयः अजृम्भन्त ।

यू०पी०आई० विशेषप्रतिनिधिनाऽत्र सूचना दत्ताऽस्ति यत् नेहरूमहोदयस्य यादृशं सर्वश्रीसम्पन्नं ससमारोहं स्वागतमत्राऽभवत् तादृशं स्वागतमेतद्देशीयैर्न कस्यचिदपि विदेशीयातिथेरद्यावधि कलितमभूत् । एतद्देशस्येतिहासेसोऽयं सर्वप्रथम एवाऽवसरोऽस्ति यस्मिन् निबिडायाः अवरोधप्रथाया आग्रहिण्योऽपि यवनमहिला अतिप्रभूतसंख्यायां समवेता अभवन् । नेहरूदर्शनार्थमागता इमा विमानस्थानपर्यन्तं महामहतीषु मरुत्तरशकटीषु (ट्रक) पूरिताः समागच्छन्, याहि शकट्यः अतिसुन्दरेण सूक्ष्मवस्त्रेणाऽवगुण्ठिता आसन् । किन्तु नेहरूदर्शनमिमा प्रोन्मुक्तभावेनाऽकुर्वन् ।

अपारजनतामध्यगतो भारतप्रधानमन्त्रिमहोदयः स्वागतसमारोहस्य समुचितमुत्तरं प्रददन् सोल्लासमवदत् "यदहं श्रीमतां देशे शान्तिदेव्यास्तीर्थयात्री भूत्वा समागतोऽस्मि" । ततो विमानस्थानात् नेहरूमहोदयः शाहमहाभागस्य हर्म्यमालां प्रत्यगच्छन् । अस्मात्स्थानाद्राजप्रसादः सप्त 'मील' न्तरितः । यस्मिन् सुसज्जिते मरुत्तरयाने नेहरूमहोदयः स्थितोऽभूत् तस्य पृष्ठभागे द्वे 'जीप' शकट्यौ, तयोः पृष्ठे च गुलिकास्त्रयोः शकट्यः ('मशीनगन') अचलन् । दूरतरेऽप्यस्मिन् मार्गे ससरणस्योभयभागे अपारा जनता नेहरूदर्शनं प्रतीक्षमाणासीत् । सर्वत्र करतलध्वनयो नेहरूविजयध्वनयश्चाश्रूयन्त । सर्वोऽप्ययं मार्गो ध्वजा-पताकाभिर्मण्डितो व्यलसत् । नेहरूमहोदयो यथैव शाहमहोदयस्य हर्म्यमुपागात्तथैव शाहो बहिरुपगत्य अतिप्रहर्षेणाऽस्य स्वागतमकार्षीत् हर्म्ये स्थितो नेहरूमहोदयः कियन्तं समयं यावत् शाहेन सह वार्तालापमकरोत् ।

## ❀ सूक्ति-सुधा ❀

लोकेषु निर्धनो दुःखी ऋणग्रस्तस्ततोऽधिकम् ।
ताभ्यां रोगयुतो दुःखी तेभ्यो दुःखी कुभार्यकः ॥१॥

सबलोगों में वही दुःखी है जिसके पास धन नहीं। किन्तु जिसके सिर कर्ज है वह उससे भी दुःखी है। इन दोनों से भी वह दुखी है जो रोगी है। और इन तीनों से वह दुःखी है जिसकी स्त्री खराब है।१।

आज्ञाभङ्गो नरेन्द्राणां विप्राणां मानखण्डनम् ।
पृथक्शय्या च नारीणामशस्त्रवध उच्यते ॥२॥

बिना हथियार के ही प्राणघात के समान ये तीनों हैं— राजाओं की आज्ञाका भंङ्ग ( हुकुम का तिरस्कार ), ब्राह्मणोंका अपमान, अपनी पत्नी को अलग सुलाना, अर्थात् शैय्यास्थान से दूर रखना ॥२॥

पण्डितैः सह सांगत्यं पंडितैः सह संकथाः ।
पण्डितैः सह मित्रत्वं कुर्वाणो नाऽवसीदति ॥३॥

पण्डितों के साथ संगति, पण्डितों के साथ बोल-चाल, पण्डितों के साथ मित्रता, इनको करनेवाला कभी दुखी नहीं होता ॥३॥

---

## संस्कृतसमाचाराः

[illegible]
दुर्व [illegible]
ध्यन्न [illegible]
विचरन् पञ्चाम्बुप्रदेशस्य संस्कृतभाषासम्बन्धे असंभावनीयां परिस्थितिं प्रकटयामास । जालन्धरनगरे पत्रकारैः सह तस्य संलापः प्रक्रान्तोऽभूत् । तत्प्रसङ्गे देशमुखमहाभागेन प्रोक्तम्—"संस्कृतेन सह पञ्चाम्बुप्रदेशस्येव दुर्व्यवहारो मया कुत्रापि नाऽन्यत्राऽवलोकितः ।" स हि इतः पूर्वम् ओरिएण्टल कॉलेजस्य तथाऽन्यान्यासां च शिक्षासंस्थानां निरीक्षणं कृतवान् आसीत् । अतएव शिक्षासम्बन्धे यः किल महाभागस्याऽस्याऽनुभवो नवीनतया प्रादुर्भूतः स हि अतिप्रामाणिको, नितरां विचारणीयश्च । 'पञ्चनदप्रदेशोऽद्यावधि संस्कृतभाषायाः कृते विहारक्षेत्रमिवाऽऽसीत् । आर्याणामुद्गमभूमिरासीत् । एतस्यामनेके ग्रन्थकाराः प्रचारयामासुरार्याणां नानाविधाः संस्कृतीश्च" इति गच्छतु प्राचीना संकथा किन्तु एतत्कालपर्यन्तं पञ्चाम्बुविश्वविद्यालयतः प्रतिवर्षमनेके शास्त्रिपरीक्षोत्तीर्णाः स्नातकाः संपद्यन्ते स्म ये हि भारतस्य प्रत्येकप्रान्ते एव प्रकामं प्रतिष्ठां प्राप्नुवन् अद्य तस्यैव प्रान्तस्य एवंविधां परिस्थितिमवगम्य हन्त परिखिद्यते चेतः । पंक्तीनामासां लेखकोऽयमपि पञ्चाम्बुविश्वविद्यालयतः शास्त्रिपदवीं लब्धवान् । सर्वस्मिन्नपि विश्वविद्यालये तत्परीक्षोत्तीर्णेषु सर्वप्रथमोऽभूदिति सम्मानमपि सर्वतः समधिगतवान् । किन्तु भारतीयानां स्वराज्यप्रक्रमेऽपि—एवंविधस्य परिनिष्ठितप्रान्तस्यापि एवंविधमपवादं शृण्वतः सत्यं सीदन्तीव मेऽङ्गानि । तत्प्रान्तीया शिक्षाकर्णधाराः प्रतिविधेयासुरिदमित्यर्थये भगवन्तम् ।

**संस्कृतविश्वविद्यालयस्योपकुलपतिः**—विश्वविद्यालयस्य प्रारम्भं प्रतीक्षमाणाः संस्कृतानुरागिणः प्रसीदेयुर्यत् कुरुक्षेत्रे प्रारभ्यमाणस्य संस्कृतविश्वविद्यालयस्य यत्किञ्चित् कार्यं शनैः शनैर्भवत्येव । पञ्चाम्बुशिक्षाविभागस्य संचालकः ए० सी० जोशी नवनिर्मितस्य संस्कृतविश्वविद्यालयस्योपकुलपतिर्नियमितोऽस्ति । जोशीमहोदयो वर्तमानकार्यभारं संचालयन्नपि विश्वविद्यालयस्याऽस्य कार्यं यथावन्निर्वक्ष्यति ।

---

प्रकाशकः—जयबहादुरसिंह पता.—भारती भवन, गोपालजी का रास्ता, जयपुर
मुद्रक—राजस्थान प्रिंटिंग वर्क्स, किशनपोल बाजार, जयपुर ।